॥श्रीः॥

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

ॐ नमः परमात्मने

    

श्रीमते श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवक

श्रीवणशठकोप श्रीनारायण यतीन्द्रमहादेशिकाय नमः

कृष्णयजुर्वेदीय

# तैत्तिरीय - संहिता


संपादकौ

रा. कृष्णमूर्ति शास्त्री

रा. गणेश्वरद्राविडश्च



प्रकाशकः

श्रीनृसिंहप्रिया ट्रस्ट्

३०, वेङ्कटेश अग्रहारं

मयूरपुरी

चेन्नै-६०० ००४

(वृषकार्तिकशुक्लैकादश्यां प्रकाशिता)

शकाब्दः १९२४

।।श्रीः।।

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

ॐ नमः परमात्मने

    

श्रीमते श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवक
श्रीवणशठकोप श्रीनारायण यतीन्द्रमहादेशिकाय नमः

कृष्णयजुर्वेदीय

# तैत्तिरीय - संहिता


संपादकौ

**रा.कृष्णमूर्ति शास्त्री**

**रा. गणेश्वरद्राविडश्च**



प्रकाशकः

श्रीनृसिंहप्रिया ट्रस्ट्
३०, वेङ्कटेश अग्रहारं
मयूरपुरी
चेन्नै-६०० ००४

(वृषकार्तिकशुक्लैकादश्यां प्रकाशिता)

शकाब्दः १९२४

**First Edition 2003**

**Price : Rs.**

***Copies can be had from :***

1. **NARASIMHA PRIYA TRUST,**
   **Mylapore,**
   **Chennai - 600 004.**

2. **DR. R. KRISHNAMURTHI SASTRIGAL**
   **Sanskrit College Street,**
   **Mylapore,**
   **Chennai - 600 004.**

***Printed at :***

**RAJAN & CO., PRINTERS,**
**No.1, Goomes Street,**
**Chennai - 600 001.**
**Phone : 25384585**

॥ श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

॥ श्रीमते श्रीवण्शठकोपश्रीवेदान्तदेशिकयतीन्द्रमहादेशिकाय नमः ॥

श्रीमते श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोप-
श्रीनारायणयतीन्द्रमहादेशिकाय नमः

विदितमेवैतत् विदुषां भगवता बादरायणेन कालदेशानुसारेण वेदशाखा व्यभज्यन्त इति। तत्र सहस्रशाखो वेदः पूर्वम् अध्यगायीति उदयनाचार्याः-अधुना-

''जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम् ॥''

इत्यूचुः, सोऽयं ह्रासः अस्मदनुभवसिद्धः।

वेदस्य श्रैष्ठ्यं तावत् तस्य नित्यत्वेन, अनन्तत्वेन, अविच्छिन्नपरम्पराप्राप्तत्वेन, अपौरुषेयत्वेन च सिद्धम्। 'ओलैप्पडा प्रमाणं श्रुतिः एलुदामरैयिल् तत्त्वं एरिट्टु किटक्किरतु' अलिखिते वेदे स्फुटं तत्त्वहितपुरुषार्था वर्तन्त इत्यूचुः श्रीमन्निगमान्तमहादेशिकाः।

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥

इति पाणिनीयशिक्षायाम् अशिक्षि।

श्रीमत्यां श्रुतप्रकाशिकायां ग्रन्थावलोकनेन वेदपाठः न्यषेधि।

''यदृच्छया श्रुतो मन्त्रः छन्नेनाऽथ छलेन वा।
पत्रेक्षितो वा व्यर्थः स्यात् प्रत्युतानर्थदो भवेत् ॥''

इति उक्तत्वात् गुरुमुखादेव अवगन्तव्याः विषयाः बहवः सन्ति।

सत्यप्येवं कलिकोलाहलेन नराणां धारणाशक्तिवैकल्यात् पुस्तकापेक्षा अस्त्येव। अत एव बहोः कालात् प्रागेव कुम्भघोणादिस्थलेषु वैदिकवर्धिनीति अन्वर्थनाम वहत्सु मुद्रालयेषु मुद्रापणं प्रकटनञ्च क्रियमाणम् आसीत् ग्रन्थलिप्याम्। संप्रति ग्रन्थलिपेः प्रचारः अतीव सङ्कुचितः। देवनागरीलिपेरेव भूयान् प्रचारः इति देवनागरीलिप्यां पुस्तकमुद्रापणम् आवश्यकमापतितम्। मुद्रणे स्वरप्रदर्शनं च आवश्यकम्। यतः,

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥'

इति उक्तम्। अतः जागरूकैः कृताध्ययनैः मुद्रापणं कार्यम्। तादृशम् अनवद्यं पुस्तकमुपयुज्य अध्येतृभिः गुरुमुखोच्चारणानूच्चारणपूर्वकः अध्ययनसंस्कारः स्वाध्यायस्य सर्वैः त्रैवर्णिकैः कर्तव्यः।

ततश्च वेदपुस्तकमुद्रापणे सदाचार्यसकाशात् अधिगतस्वाध्यायः वेदार्थज्ञः पण्डित् एव युक्तः अधिकारी। तादृशोऽधिकारः सम्प्रति प्रकाश्यमानवेदपुस्तकपरिशोधकेषु अस्माकं प्रियसुहृत्सु ब्रह्म-

श्रीकृष्णमूर्तिशास्त्रिषु सुसम्पन्नः समुल्लसति । एते स्वकीयपितृचरणेभ्यः, सप्तपरिवृत्तिक्रमान्तं सान्नदानम् अध्यापनं कृतवद्भ्यः ब्रह्मश्रीराजगोपालघनपाठिभ्यः गृहीतस्वाध्यायाः । किञ्च मीमांसा-वेदभाष्यादिषु अद्वैतवेदान्तेषु च कृतभूरिपरिश्रमाः वेदरक्षणे उद्युक्तानां श्रीकाञ्चीकामकोटिपीठाधिपानाम् अनुग्रहपात्रं च । अपि च अस्मदाचार्यपादानां श्रीमदहोबिलमठे मूर्धाभिषेकदिनादारभ्य प्रतिसंवत्सरं पूर्वाचार्यश्रीनक्षत्रादिमहोत्सवान् व्याजीकृत्य अध्ययनपरम्परायां विद्यमानानां सर्वासां वेदशाखानां पारायणेन स्वेष्टदैवतं प्रह्लादार्तिहरं मालोलम् आराधयतां, तन्त्रेण वेदविदां विपुलां स्वर्ण-वस्त्रकम्बल-वसु-अन्न-मेदुरां सम्भावनां च प्रदाय वेदरक्षणम् अनितरसाधारण्या धोरण्या कुर्वतां श्रीमदहोबिलमठे पञ्चचत्वारिंशपट्टे मूर्धाभिषिक्तानां श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवकश्रीवण्शठकोपश्रीनारायणयतीन्द्रमहादेशिकानां प्रेमास्पदम् एते कृष्णमूर्तिशास्त्रिणः ।

एतैः काशीवासिनां विद्वत्तल्लजानाम् आत्मगुणसम्पन्नानां शूराध्यायिनां श्रीगणेश्वरद्राविडशर्मणां साह्येन प्रकाश्यते इदं वेदपुस्तकम् इति ''काञ्चनकमलं सौरभरमणीयम्'' इत्यत्र न कोऽपि संशयः ।

तदेतत् पुस्तकं सर्वैः वैदिकैः वेदश्रद्धालुभिश्च सादरं परिगृह्य गृहे संरक्षणीयम् । यतः 'सा हि श्रीः अमृता सताम्' इति हि भगवती श्रुतिः ।

एते च शास्त्रिणः, तथा एतत्पुस्तकप्रकाशनकार्यभारं स्वीकृतवन्तः अस्मच्छ्रीमठशिष्याः एस्.वी.एस्.राघवमहोदयाः, एतद्ग्रन्थस्वीकर्तारश्च सर्वे सह कुटुम्बाः आयुरारोग्यैश्वर्यसंपन्नाः भूयासुरिति श्रीचरणाः आशासते । इति शम् ॥

इत्थं<br>
श्रीचरणनियमानुसारी<br>
श्रीमदहोबिलमठाऽऽस्थानविद्वान्<br>
शूराध्यायी न्याय-वेदान्त-साहित्य-विद्वान्<br>
पळवेरि-शठकोपाचार्यः

## ॥ भूमिका ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥
शङ्ख-चक्र-वरानम्रलसत्करतलं प्रभुम् । श्रीवेङ्कटेश्वरं वन्दे करुणामृतसागरम्॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्। वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः॥

अथेदं प्रकाश्यते पूज्यपादानां वेदशास्त्रसंरक्षणतत्पराणाम् अहोबिलमठाधीशानाम् अनन्तश्रीविभूषितानाम् अळगियसिङ्गर्महाभागानामनुग्रहेण कृष्णयजुर्वेदीयब्राह्मणम् आरण्यकोपनिषत्सहितम् । श्रीचरणैः श्रीमुखप्रदानेन महान् अनुग्रहः कृत इति कृतज्ञतापूर्वकम् अहोबिलमठाधीशान् मुहुर्मुहुः प्रणमामि।

कृष्णयजुर्वेदीयब्राह्मणम् आरण्यकोपनिषत्सहितं देवनागरलिपौ प्रकाशनीयमिति विचार्य मद्रपुरीस्थसंस्कृतकलाशालाध्यक्षैः ब्रह्मश्रीकृष्णमूर्तिशास्त्रिमहाभागैरहमेतत्कार्ये योजितः। अल्पीयसि समये यावच्छक्यं शुद्धमातृकासम्पादनाय प्रयत्नः कृतः। सम्पादनकार्ये श्रीसायणभाष्य-भट्टभास्करभाष्ययोः ग्रन्थाक्षरपुस्तकस्य च पर्याप्तः सहयोगोऽस्माभिर्गृहीतः।

उदात्तस्वरस्य प्रचयस्वरस्य च प्रदर्शनाय किमपि चिह्नं न स्थापितम्। अनुदात्तस्वरस्य प्रदर्शनाय अक्षरस्याधः दण्डवत्पातिता रेखा स्थापिता। सामान्यस्वरितस्वरस्य प्रदर्शनाय अक्षरस्योपरि एका ऊर्ध्वरेखा स्थापिता। दीर्घस्वरितस्वरस्य प्रदर्शनाय अक्षरस्योपरि द्वे ऊर्ध्वरेखे स्थापिते।

'कम्प्यूटर्'नामके यन्त्रे सर्वेषामक्षराणां संयोजने क्रियमाणे क्वचित्क्वचित्काठिन्यं भवति । यत्र संयुक्ताक्षराणि लेख्यानि तत्र 'कम्प्यूटर्'यन्त्रे संयुक्ताक्षराणामभावात् अगत्या हलन्ताक्षराणि ग्रहीतव्यानि भवन्ति । अस्यां स्थितौ स्वरभक्तेः लेखने यथा हलन्तो रेफ आयाति तथैव संयुक्ताक्षरघटकप्रथमाक्षरं हलन्तरूपेण आयाति । तर्हि 'गार्हपत्य' 'मद्ध्वा'दिपदेषु हलन्तरूपेण रेफस्य हलन्तरूपेण दकारस्य च प्रकाशने 'गार्' इति असंयुक्तरूपवत् 'मद्' इति असंयुक्तरूपभ्रमप्रसक्त्यां मन्दधियां भ्रमनिवारणाय 'दुर्बलेऽनुग्रहः कार्यः' इति न्यायेन 'गार्हपत्य-मद्ध्वादि'पदेषु हलन्तरेफस्य हलन्तदकारस्य च वैलक्षण्यप्रदर्शनाय असंयुक्ताक्षराणां कृते किञ्चिच्चिह्नस्थापनमावश्यकमिति विचार्य मद्रपुरीस्थवैदिकविद्वद्भिः साकं चर्चां विधाय तेषां सूचनानुसारम् असंयुक्तस्थलेषु '÷' इदं चिह्नं स्थापितम्।

जिह्वामूलीयोपध्मानीयाक्षरयोः कृते परम्पराप्राप्तचिह्नस्य 'कम्प्यूटर्'यन्त्रे अनुपलब्ध्या तद्योजनां कर्तुं नाशकम्। अन्यत्र सर्वत्र विसर्गस्थले सकारादिसंयोजनेन, ख्षकारात् प्राक्तनविसर्गस्य विसर्गरूपेणोच्चारणं कार्यम्, अन्येषु स्थलेषु यथायथं जिह्वामूलीयोपध्मानीयरूपेणोच्चारणं कार्यमिति मत्वा कथञ्चित् सन्तोष्टव्यम्।

प्राक्तनदेवनागरमातृकायां क्षकारोपयोगः कृतः। ग्रन्थाक्षरपुस्तके ख्षकारोपयोगः कृतः। क्षकारस्तावत् ककार-षकारयोः संयोजनेन भवति। ख्षकारस्तु खकार-षकारयोः संयोजनेन भवति इति महदन्तरम्। शिक्षादिग्रन्थानुसारेण क्षकारगतककारस्य स्थाने खकारो भवतीति सर्वत्र ख्षकारः प्रकाशितः।

अकारादुत्तरवर्तिनः ञकारात् पूर्वतनस्य, ङकारात् पूर्वतनस्य च मकारस्य स्थाने सञ्जातस्य अनुस्वारस्यानुस्वाररूपेणोच्चारणम्, अन्यत्र मकारस्य स्थाने परसवर्णस्य अनुनासिकस्य उच्चारणम् इति नियमापरिज्ञानेन कैश्चित् पदान्ते परसवर्णस्य अनुनासिकस्य उच्चारणमकृत्वा अनुस्वारस्यैव सर्वत्र उच्चारणं क्रियते। तद्भ्रमनिवारणाय बालानां च परिज्ञानाय आवश्यकमिति मत्वा ग्रन्थाक्षरमातृकावदत्रापि अनुस्वारस्य परसवर्णरूपेण प्रदर्शनमादृतम्।

केषुचित् स्थलेषु स्वरमात्रयोः स्पष्टतया परिज्ञानार्थं पदमध्येऽपि '-' इदं चिह्नं स्थापितम्। मद्रपुरीस्थवैदिकानामनुरोधेन मन्त्रपूर्तिस्थले '॥' एतच्चिह्नं स्थापितम्। मन्त्रपूर्त्यनन्तरं यस्मिन्वाक्ये इतिपदं श्रूयते तत्र वाक्यान्ते मन्त्रपूर्त्यभावात् मन्त्रपूर्तिचिह्नं न स्थापितम्। प्रतीकमन्त्राणां परिज्ञानाय '*' नक्षत्रचिह्नं स्थापितम्। अनुषङ्गपरिज्ञानाय '+' इदं चिह्नं स्थापितम्। अनुवाकान्ते खण्डसङ्ख्याप्रदर्शनोत्तरम् '॥' इदं चिह्नं स्थापितम्। देवनागर्यां मुद्रणेन ग्रन्थस्य सार्वभौमतया सर्वेषां कृते उपकाराय विभिन्नपक्षादृताः खण्डविभागाः विभिन्नपक्षादृताः प्राचीनाः शृङ्खलाश्च योजिताः। [ ] एतच्चिह्नाभ्यन्तरे प्रदर्शितः अङ्कः, कोष्ठकाद्बहिः स्थापिताश्च शृङ्खला ग्रन्थाक्षरपाठानुसारिण्यः।

उपसर्गाणां सांहितिकपदपाठानुसारेण पृथक्स्थापनार्थमादौ प्रयत्नः कृतः। मद्रपुरीस्थवैदिकानां सूचनानुसारं प्रायः सर्वत्र उपसर्गाः क्रियापदेन नाम्ना च सह योजिताः। क्वचित् उपसर्गाणां पृथक् स्थापनस्यान्यत्कारणं वर्तते तत्सुधीभिर्भाष्यादिकमवलोक्य ज्ञातव्यम्। येषां व्यञ्जनानां संयोगो न विधेयस्तेषां सर्वेषां कृते ÷ अस्मिंश्चिह्ने स्थापितेऽपि कुत्र कियान् काल आवश्यक इत्यस्य निर्धारणं तु गुरुमुखादेव कर्तव्यम्।

सम्पादनं तावदौदार्येण कृतम्। कुत्रापि सङ्कुचिता वृत्तिर्नाश्रिता। यतो हि गौतमधर्मसूत्रे 'दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचम्, अनायासः, मङ्गलम्, अकार्पण्यम्, अस्पृहा चे'त्यष्टानामात्मगुणानां संस्कारापेक्षया महत्त्वं मोक्षप्रापकत्वं च वर्णितम्। तस्माद्-

"अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्॥"

इति महद्भिः प्रदर्शितः पन्था अत्रानुसृतः। अतः सर्वे पक्षा अत्र प्रकाशनेऽङ्गीकृताः। प्रकाशनार्थम् आदृतेषु पुस्तकेषु प्राचीनं ग्रन्थाक्षरे मुद्रितं पुस्तकम् आदर्शरूपेण स्वीकृतम्। परन्तु तत्रापि विद्यमानानां त्रुटीनां परिमार्जनाय प्रयतितम्। यथा-'अश्वस्तोमीयम्पूर्वँ होतव्याँ (३) द्विपदाँ (३) इति' इति ग्रन्थाक्षरे मुद्रितः पाठः ग्रन्थाक्षरे मुद्रित इति कृत्वा न तथैव स्थापितः। अपितु 'अश्वस्तोमीयम्पूर्वँ होतव्या (३)-न्द्विपदा(३) इतिं' इति शुद्धः पाठः स्थापितः। तत्र द्विपदापदं सविसर्गं वर्तते। अतः 'द्विपदाँ(३)' इति न भवतीति रहस्यम्।

वैदिकैः मूलभागस्य महता श्रमेण संरक्षणं कृतम्; अतस्तेऽभिनन्दनीयाः अभिवन्दनीयाश्च। शास्त्रज्ञा वेदार्थपरिज्ञानाय प्रवृत्तास्तेऽभिनन्दनीयाः अभिवन्दनीयाश्च। प्रयोगज्ञा वैदिककर्माणि सम्पादयन्ति,

अतस्तेऽप्यभिनन्दनीयाः अभिवन्दनीयाश्च। परन्तु त्रयाणां सामञ्जस्यं यदा न भवति तदाऽनर्थः भवति। तस्माद् वैदिकैः वेदार्थपरिज्ञानाय प्रयतनीयम्, वेदार्थचिन्तापरैर्मूलवेदपाठपरिज्ञानाय वेदोऽध्येतव्यः, प्रयोगज्ञैः वैदिकैः शास्त्रज्ञैश्च सह सम्भूय विचारणीयम्। वैदिकेषु शास्त्रज्ञेषु प्रयोगज्ञेषु च परस्परं सामञ्जस्यम्, आदरबुद्धिः, उपकार्योपकारकभावश्च आवश्यकाः सन्ति।

वेदानां रक्षणार्थं वेदाङ्गानि आगतानि। वेदानां रक्षणं त्रेधा भवति। (१) स्वरूपतः (२) अर्थतः (३) प्रयोगतश्च। वेदानां स्वरूपरक्षा नाम आनुपूर्वीसंरक्षणम्। तदर्थं छन्दोग्रन्थः, शिक्षाग्रन्थाः, प्रातिशाख्य-ग्रन्थाश्च सन्ति। अर्थरक्षार्थं व्याकरणं, निरुक्तश्च स्तः। प्रयोगरक्षार्थं कल्पसूत्राणि, ज्योतिषञ्च वर्तेते। अयं विषयः तत्त्वार्थदीपनिबन्धे तट्टीकायां च श्रीवल्लभाचार्यैः सविस्तरं प्रतिपादितः। तदिदं वेदानां त्रेधा रक्षणं पूर्वोक्ताः वैदिकाः, शास्त्रज्ञाः, प्रयोगज्ञाश्च यथाशक्ति साम्प्रतमपि कुर्वन्ति। अतः तेषाम् अधमर्णं जगत् वर्तते। अतएव विश्वगुणादर्शे उक्तम्-

''नाध्यापयिष्यन् निगमान् श्रमेणोपाध्यायलोका यदि शिष्यवर्गान्।
निर्वेदवादं किल निर्वितानम् उर्वीतलं हन्त तदाऽभविष्यत्॥'' इति।

चम्पूरामायणेऽपि वर्णितम्-

''उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत् क्व नु मत्प्रणामः॥'' इति।

अतः वेदानां त्रेधा संरक्षणार्थं द्विजैः जागरूकैर्भाव्यम्। अन्यैश्च तेषां योगक्षेमव्यस्था विधेया।

अत्यन्तप्राचीनकाले वेदानां लेखनं न क्रियते स्म। वेदास्तावत् गुरुमुखाच्छिष्यस्य कर्णपथे आयान्ति स्म। शिष्येण ते धार्यन्ते स्म। एकदा अस्मद्गुरूणां परमहंसपरिव्राजकाचार्याणां श्री१०८कृष्णाश्रम-स्वामिनां सविधे अयं प्रश्नः उपस्थितो यत् 'वेदानां लेखका ये स्युस्ते वै निरयगामिनः' इति वचनं वैदिकानां गृहे विद्यमानपुस्तकस्य लेखकेषु प्रवर्तते वा न वा ? इति। तैरुक्तं यत् पूर्वं सम्भूय वैदिकैः पुस्तकनिरपेक्षमध्ययनमध्यापनं च क्रियते स्म; तदानीं पुस्तकस्य नासीदपेक्षा, परन्तु कालान्तरे पुस्तकस्य अपेक्षा जाता इति कृत्वा लेखनं प्रवृत्तम्। साम्प्रतं यद्वेदध्वनिचित्रणं (टेप्) क्रियते तदपि वेदानां लेखनमेव। यतः तत्र रेखा आयान्ति। तद् ध्वनिं गृहीत्वा यः कोऽपि यस्यां कस्याञ्चिदवस्थायां वेदं शृणोति तस्य 'एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति' इत्याद्युक्ताः दोषा भवन्ति। अतः 'वेदानां लेखका ये स्युस्ते वै निरयगामिनः' इत्युक्तम् इति।

साम्प्रतं मुद्रणवशात् अधिकदोषप्रसक्तिर्वर्तते। मुद्रितस्य वेदपुस्तकस्य पत्राणि आपणे क्रेतृभ्यः वस्तूनां प्रदानाय उपयोज्यन्ते, जीर्णानि पत्राणि उपेक्षितानि मार्गे रथ्यादौ च पतितानि दृश्यन्ते, अन्धकारे गन्तव्ये जाते तानि पत्राणि पादस्पृष्टानि पादरक्षास्पृष्टानि वा भवन्ति,अनभिज्ञा जनाः अग्निप्रदीपनार्थं वेदपुस्तकस्य पत्राणि उपयोजयन्ति। तदिदं सर्वमपि 'वेदानां लेखका ये स्युस्ते वै निरयगामिनः' इति वाक्यस्य विचारावसरे आयाति। तस्मात् वेदपुस्तकं ये गृह्णन्ति तैः तस्य सदा सदुपयोग एव कर्तव्यः। अधिकारिभिः स्वयम्

अध्येतव्यम्, सत्पात्रेभ्यः अध्यापनीयम् । स्वगृहे वेदपुस्तकस्य उपयोगाभावे तत् अध्येतृभ्यः प्रदेयम्, अतिजीर्णस्य तस्य गङ्गादिनद्यां प्रक्षेपो विधेयः । पूर्वोक्तः मातृकापराधो यथा न भवेत् तथा जागरूकैर्भवितव्यमिति सर्वेभ्यः साञ्जलिबन्धं प्रार्थये।

कालक्रमेण बुद्धिह्रासात् वेदानां विभाग इव वेदानां शुद्धपाठसंरक्षणाय शिक्षाग्रन्थाः, वेदानां शृङ्खलाश्च निर्मिताः, वेदानां लेखनं चारब्धम् । तत्र कृष्णयजुर्वेदीयतैत्तिरीयशाखायाः पाठसंरक्षणाय श्रीमद्भिर्भरद्वाजमहर्षिभिः भारद्वाजशिक्षा प्रणीता । भारद्वाजशिक्षामूलिकैव 'रुन्धते दधते तिष्ठन्ते जायन्ते' इत्यादयः शृङ्खलाः विद्वद्भिर्निर्मिता अध्ययनाध्यापनयोः स्थापिताश्च । भारद्वाजशिक्षावदेव महर्षिभिः विभिन्नाः शिक्षा निर्मिताः । तासु व्यासशिक्षायाः आधिक्येन प्रचारः विद्यते । अथापि सर्वासां शिक्षाणां परिशीलनम् आवश्यकं वर्तते ।

प्राक्तनग्रन्थेषु ब्राह्मणारण्यकोपनिषत्-सायणभाष्य-भट्टभास्करभाष्यपुस्तकादिषु प्रकाशितेष्वपि बह्व्यः त्रुटयः जाताः । सर्वत्र बहु विचार्य अयं ग्रन्थः सम्पादितः । अथापि अत्र मे परितोषो नास्ति । मम तु इदं दृढं मतं यत् यावत्पर्यन्तं ब्राह्मणारण्यकोपनिषदां पदनिर्धारणं न भवेत् तावत्पर्यन्तं शुद्धपाठनिर्धारणे काठिन्यं भवेदेव । कदाचित् केनचित् शुद्धपाठे प्रकाशितेऽपि पुस्तकान्तरमवलोक्य लोकाः शुद्धं पुस्तकमपि अशुद्धं कुर्युः । तस्मात् तत्र अशुद्धिनिवारकं, भ्रमनिवारकं, सन्देहनिवारकं च किमपि आवश्यकम् । तदर्थं मया भगवदनुग्रहेण गुर्वनुग्रहेण च कृष्णयजुर्वेदवैजयन्तीलेखनमारब्धम् । अस्यां सर्वो विचारः प्रदर्शयिष्यते । ब्राह्मणादिभागस्य पदानि निर्धार्य पृथक् लिख्यन्ते, येन पदानां परिज्ञानं निस्सन्दिग्धं निर्भ्रान्तं च भवेत् । मन्दधियाम् अध्येतॄणां भ्रमसन्देहनिरसनाय श्रीशशृङ्खलाश्च निर्मीयन्ते । यावत्पर्यन्तम् एतत्कार्यं पूर्णं न भविष्यति तावत्पर्यन्तं नक्तव्रतसङ्कल्पो गृहीतः ।

ब्राह्मणभागस्य श्रीशशृङ्खलानां प्रकाशनाय ब्रह्मश्रीकृष्णमूर्तिशास्त्रिमहाभागैः व्यवस्थाऽपि कृता । अथापि समग्रायाः तैत्तिरीयशाखायाः श्रीशशृङ्खलानां निर्माणोत्तरमेव तत्प्रकाशनं वरमिति विचार्य इदानीं ताः न प्रकाश्यन्ते ।

अस्यां भूमिकायां ये विषयाः नोक्ताः ते संहिताभूमिकायाम् उक्ताः । संहिताभूमिकावलोकनेन नियमानां परिज्ञानं भवेत् । ततश्च अध्ययने सौकर्यं स्यात् ।

"ज्ञानमज्ञाततत्त्वाय यो दद्यात् सत्पथेऽमृतम् । कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥"

इति श्रीमद्भागवते चतुर्थस्कन्धे ध्रुवचरिते वर्णितम् । तदिदं विद्वद्भिः सर्वदाऽवधेयम्, उपयोक्तव्यं च । अतएवोक्तम्-

"विद्वद्भिः शोभते देशः तैर्विहीनस्त्वमङ्गलः ।" इति ।

मया मद्रपुर्यां बहून्मासान् निवसता इदमनुभूतं यत् कृष्णमूर्तिशास्त्रिभिर्ब्राह्ममुहूर्तादारभ्य रात्रिप्रथमयामपर्यन्तं कदाचिद्रात्रौ सार्धयामपर्यन्तमपि निरलसतया सर्वेभ्यः सर्वविधविद्यादानं निरपेक्षतया औदार्येण रहस्यप्रकाशनेन च साकं क्रियते । ईदृशा विद्वांसः दुर्लभाः ।

एतैः ब्राह्मणग्रन्थस्य सम्पादने साहाय्यार्थं योजितोऽहं ग्रन्थस्यास्य सम्पादने यत् समर्थोऽभवं तत्र प्रातःस्मरणीयानां पितृपादानां ब्रह्मश्रीराजेश्वरशास्त्रिद्राविडमहाभागानां तपोबलं, परिश्रमः, अनुग्रहश्च कारणानि । तथैव अस्मत्कुलदैवतस्य श्रीवेङ्कटाचलपतेः, श्रीकाशीविश्वेश्वरस्य, मद्रपुरीस्थसमस्तदेवतानां चानुग्रहः कारणम् । तदनु अस्मदग्रजयोः पूज्यश्रीवीरेश्वरशास्त्रिद्राविड-श्रीविश्वेश्वरशास्त्रिद्राविडयोर्मदीयवेद-शास्त्राध्ययनार्थं परिश्रमः, औदार्यं, वात्सल्यं च । तदनन्तरं गुरुवरैः प.प.श्रीकृष्णाश्रमस्वामि-ब्रह्मश्रीगणेशभट्टबापट-ब्रह्मश्रीरामचन्द्रघनपाठि-श्रीरामचन्द्रशास्त्रिहोसमनेमहोदयैः कृतं तत्तत्समये मार्गदर्श-नम् । काशीस्थश्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयस्य पत्रिकासम्पादने गुरुवरैः ब्रह्मश्रीरामचन्द्रशास्त्रिहोस-मनेमहोदयैः, अग्रजैः ब्रह्मश्रीविश्वेश्वरशास्त्रिद्राविडैश्च यन्मार्गदर्शनं विहितं यश्च ग्रन्थसम्पादनकलाया अभ्यासः कारितः तद्बलेनैवात्र सम्पादनं कर्तुमशकमिति ते विशेषतः स्मरणीयाः । श्रीवेङ्कटाचलपतिप्रभृतीन् सर्वान्देवान्, तातपादप्रभृतींश्च सर्वान् गुरून् वन्दे ।

उपनिषद्भागे द्राविडपाठनिर्धारणाय मातृकाप्रदानेन उपकारं कृतवतां ब्रह्मश्रीविभूषितानां वलयप्पेट्टै नावल्पाक्कं एन्. के. रामानुजताताचार्यमहाभागानां विशेषतः अहम् अधमर्णोऽस्मि । तेषां प्रत्युपकृतौ अस-मर्थः तान् नमस्करोमि । उपनिषद्भागे द्राविडपाठः स्वातन्त्र्येण प्रकाशितः । अन्यत्र तद्गतः विशेषः टिप्पण्यां दर्शयितव्य आसीत् । एवम् अत्यावश्यकस्थले पाठभेदः टिप्पण्यां दर्शयितव्य आसीत् । परन्तु यन्त्रे सौविध्या-भावात् मम समयाभावाच्च अत्यावश्यकाः पाठभेदाः इह भूमिकायां प्रदश्यर्न्ते । पाठभेदानां युक्तायुक्तत्वविचारः कृष्णयजुर्वेदवैजयन्त्यां यथासम्भवं करिष्यते ।

## ब्राह्मणारण्यकोपनिषत्सु पाठभेदविचारः

(१) ब्राह्मणे द्वितीयाष्टके सप्तमप्रश्ने 'समुद्रन्न सुहुर्वन्तस्थिवाꣳसंम्' इत्यत्र 'समुद्रन्न सुहवन्तस्थिवाꣳसंम्' इति केचित् पठन्ति ।

(२) ब्राह्मणे तृतीयाष्टके षष्ठप्रश्ने 'यूयवदान्यावंखत्' इत्यत्र 'युयवदान्यावंखत्' इति केचित् पठन्ति ।

(३) आरण्यके प्रथमप्रश्ने 'अपाश्न्युंष्णि' इत्यत्र 'अपाश्नुंष्णि' इति केचित् पठन्ति ।

(४) आरण्यके प्रथमप्रश्ने 'निमेषास्त्रुंटिभिस्सह' इत्यत्र 'निमेषास्तुंटिभिस्सह' इति केचित् पठन्ति ।

(५) आरण्यके प्रथमप्रश्ने 'कालावयवानामितःप्रतीज्या' इत्यस्य स्थाने 'कालावयवानामितःप्रती-च्या' इति केचित् पठन्ति ।

(६) आरण्यके द्वितीयप्रश्ने तृतीयानुवाके 'अग्निर्मातस्मादेनसो गार्ꣳहपत्यः प्रमुंञ्चतु चकृम यानि दुष्कृता' इत्यस्य स्थाने 'अग्निर्मातस्मादेनसः प्रमुंञ्चतु चकृम यानि दुष्कृता' इति केचित् पठन्ति ।

(७) आरण्यके द्वितीयप्रश्ने पञ्चमानुवाके 'पुनर्मनः पुनरायुर्म आगात्०' इत्यादिवाक्यस्य स्थाने 'पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुःपुनश्श्रोत्रंम्म आगात्पुनः प्राणः पुनराधीतम्म आगात्०' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्यां वर्णितम् ।

(८) आरण्यके द्वितीयप्रश्ने षष्ठानुवाके 'यन्मया मनसा वाचा०' इत्यादि वाक्यद्वयस्य स्थाने 'यन्मे मनसा वाचा कृतमेनः कदाचन। सर्वस्मान्मेळितो मोग्धि त्वꣳ हि वेत्थ यथातथम् ॥' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(९) आरण्यके द्वितीयप्रश्ने एकादशानुवाके 'तेन सामानि यथ्सव्यम्पाणिम्पादौ प्रोक्षति यच्छिरश्च-क्षुषी' इत्यस्य स्थाने 'तेन सामानि यच्छिरश्चक्षुषी' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम् भट्टभास्करभाष्यपुस्तके टिप्पण्यां च।

(१०) आरण्यके द्वितीयप्रश्ने एकादशानुवाके 'पाणी पादौ कृत्वा' इत्यस्य स्थाने 'पाणी कृत्वा' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(११) आरण्यके द्वितीयप्रश्ने एकोनविंशानुवाके 'नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते' इत्यस्य स्थाने 'नाध्वनि प्रमीयते नाप्सु प्रमीयते नाग्नौ प्रमीयते' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(१२) आरण्यके द्वितीयप्रश्ने एकोनविंशानुवाके 'नमस्ते नमस्सर्वन्ते नमो नमश्शिशुकुमाराय नमः' इत्यस्य स्थाने 'नमस्ते नमस्सर्वन्ते नमः' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके भट्टभास्करभाष्यपुस्तके च टिप्पण्याम्।

(१३) आरण्यके द्वितीयप्रश्ने विंशानुवाकः 'नमः प्राच्यै दिशे' इत्यनुवाकः द्राविडपाठे नास्ति इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(१४) आरण्यके चतुर्थप्रश्ने सप्तविंशानुवाके 'खट्फड्जहि' इत्यस्य स्थाने 'खट्फट्जहि' इति केषुचित् पुस्तकेषु पाठः।

(१५) आरण्यके चतुर्थप्रश्ने सप्तविंशानुवाके 'छिन्धी भिन्धी हन्धी कट्। इति वाचः क्रूराणि' इति वाक्ययोः स्थाने 'छिन्धी भिन्धी हन्धी। कडितिवाचः क्रूराणि' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्प-ण्याम्।

(१६) आरण्यके चतुर्थप्रश्ने एकोनत्रिंशानुवाके 'असृन्मुखः' इत्यस्य स्थाने 'असृङ्मुखः' इति केचित् पठन्ति। 'द्वाभ्यामसृद्भ्याम्माꣳसम्' इति संहितासप्तमकाण्डपाठसंवादात् 'असृन्मुखः' इति पाठस्य अस्तित्वं प्रतीयते।

(१७) आरण्यके चतुर्थप्रश्ने चत्वारिंशानुवाके 'ए अस्मे अस्मे। सुवर्न ज्योतीः' इति वाक्ययोः स्थाने 'ए अस्मे। अस्मे सुवर्न ज्योतीः' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(१८) आरण्यके पञ्चमप्रश्ने एकादशानुवाके 'तेज उद्यतो वायुः। ह्रियमाणः प्रजापतिः। हूयमानो वाग्घुतः' इति वाक्यत्रयस्य स्थाने 'तेज उद्यतः। वायुर्ह्रियमाणः। प्रजापतिर्हूयमानः। वाग्घुतः'। इति वाक्यचतुष्टयं द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(१९) आरण्यके पञ्चमप्रश्ने एकादशानुवाकस्य शृङ्खलायां 'हूयमानो वाग्घुतो दधात्येषः' इत्यस्य स्थाने 'हूयमानो ब्रूयादन्नम्प्रजापतिरेकश्च' इति द्राविडपाठः इति ग्रन्थाक्षरपुस्तके टिप्पण्याम्।

(२०) आरण्यके षष्ठप्रश्ने सप्तमानुवाके 'पितॄन्॑ हि यत्र' इति भट्टभास्करभाष्यसम्मतः पाठः । 'पितॄन्॑ ह्यत्र' इति सायणभाष्यसंमतः पाठः।

(२१) उपनिषदि ब्रह्मश्रीविभूषितैः वलयप्पेट्टै नावल्पाक्कं एन्. के. रामानुजताताचार्यमहाभागैः प्रेषित-पुस्तकानुसारं द्राविडपाठः प्रकाशितः । एतद्ग्रन्थप्रकाशनसमनन्तरं यदि द्राविडपाठे कश्चिद्विशेषः परिलक्ष्येत तर्हि पूज्यताताचार्यमहाभागानां संमत्यनुसारेण शुद्धचशुद्धिपत्रिकायां सूचनापत्रे वा तस्य उल्लेखः अवश्यं करिष्यते।

(२२) आरण्यके उपनिषदि च बहवः पाठभेदाः यद्यपि दृश्यन्ते तथापि तेषु केचित्पाठभेदाः आरण्यक-शिक्षाद्यज्ञानमूलकाः, केचित् प्रामादिकाः, केचित् भ्रममूलकाः, केचित् भाष्यानुसारिणः च सन्ति । तत्र सायणभट्टभास्करभाष्ययोः बहुत्र मतभेदः पाठभेदश्च वर्तेते तथापि वैदिकपरम्परागतपाठप्राधान्येन ग्रन्थस्य प्रकाशितत्वात् परम्परागता एव पाठाः अत्र सङ्गृहीताः । अन्ये न सङ्गृहीताः । इह भूमिकायां केषांचित् विभिन्नपाठानां सङ्ग्रहप्रयोजनं द्राविडपाठगतवैशिष्ट्यप्रदर्शनम्, अन्येषु पाठेषु युक्तायुक्तत्वविचारस्य आवश्य-कत्वप्रदर्शनं च । तत्र युक्तायुक्तत्वविचारः अस्माभिः कृष्णयजुर्वेदवैजयन्त्यां करिष्यते । युक्तायुक्तत्वविचार-मन्तरा बहूनां पाठानां प्रदर्शनमात्रेण व्यामोहमात्रं भवेत् इति विचार्य अत्र अन्ये पाठभेदाः न प्रदर्शिताः । तेषां विचारः वैजयन्त्यां भविष्यति।

(२३) भट्टभास्करभाष्यानुसारेण आरण्यकोपनिषत्सु प्रश्नानाम् अयं क्रमः (१) भद्रं (२)सह (३)चित्तिः (४) परेयुवाꣳसम् (५)शन्नो मित्रः (६) अम्भसि (७)नमो वाचे (८)देवा वै सत्रम् इति। 'शन्नो मित्रः' इति प्रश्ने एव 'ब्रह्मवित्' 'भृगुः' इति प्रश्नद्वयस्य अन्तर्भावः इति विशेषः।

(२४) संहितायां मूलपाठे अन्तिमं 'बन्धुः' इति पदं, ब्राह्मणपाठे अन्तिमं वाक्यम् 'ओम्' इति, उपनिषत्पाठे अन्तिमं वाक्यस्थानीयं पदम् 'इत्युपनिषत्' इति च बहवो वैदिकाः न पठन्ति। तत्कारणं मृग्यम्। प्रकृते तु एतावदेव उच्यते यत् बन्धुरित्यादिपदानां तत्रतत्र सत्त्वं वर्तते । स्वस्वसम्प्रदायानुसारं तेषाम् उच्चारणानुच्चारणव्यवस्था यावत्प्रमाणोपलब्धि अनुसरणीया।

(२५) ब्राह्मणारण्यकोपनिषत्सु भाष्यद्वयानुसारेण मन्त्रविभागः अकारप्रश्लेषयोजना च तत्रतत्र कृता। अथापि तस्य पूर्णता कृष्णयजुर्वेदवैजयन्त्यां क्रियमाणविचारेणैव भविष्यति । एतत्कार्यम् ईश्वर-सद्गुरुकृपा-धीनम्। अस्माभिः प्रयत्नः विधेयः इति शिवम्।

ब्राह्मणारण्यकोपनिषदां प्रकाशने संशोधन (प्रूफदर्शन)कार्ये यैः महानुभावैः साहाय्यं विहितं तेऽत्र सबहुमानं स्मर्यन्ते-

१.ब्रह्मश्रीकृष्णमूर्तिशास्त्रिणः(मद्रपुरीस्थसंस्कृतकलाशालाध्यक्षाः), २.ब्रह्मश्रीके.स्वामिनाथश्रौतिनः (मद्रपुरीस्थाः), ३.ब्रह्मश्रील.कृष्णमूर्तिशास्त्रिणः(मद्रपुरीस्थाः), ४.ब्रह्मश्रीराजगोपालघनपाठिनः(मद्रपुरी-स्थाः), ५.ब्रह्मश्रीयज्ञमणिघनपाठिनः(मद्रपुरीस्थाः), ६.चि. ब्रह्मश्रीमणिद्राविडः(मद्रपुरीस्थः), ७. चि.

श्रीमान् अनन्तपद्मनाभशर्मा(मद्रपुरीस्थः), ८.भ्रातुष्पुत्रः चि.श्रीचन्द्रशेखरद्राविडश्च। एतेषां सर्वेषां प्रत्युपकृतौ असमर्थः तेषु वरीयसः नमस्करोमि, यवीयसश्च शुभाशीर्भिः संयोजयामि।

अस्मिन् सम्पादने मार्गदर्शकाः विविधपुस्तकप्रदानेन उपकारं कृतवन्तश्च महानुभावाः सबहुमानं स्मर्यन्ते-

१. ब्रह्मश्रीवी.जी.सुब्रह्मण्यघनपाठिनः(मद्रपुरीस्थाः), २. ब्रह्मश्रीके.स्वामिनाथश्रौतिनः (मद्रपुरीस्थाः), ३. अस्मदग्रजाः ब्रह्मश्रीविश्वेश्वरशास्त्रिद्राविडाः(काशीस्थसाङ्गवेदविद्यालयाध्यक्षाः), ४. ब्रह्मश्रीसुन्दररामदीक्षिताः(शेङ्कालिपुरस्थाः), ५. ब्रह्मश्रीरामघनपाठिनः (काशीस्थाः), ६. ब्रह्मश्रीमल्लिकार्जुनसोमयाजिनः(मद्रपुरीस्थाः), ७. ब्रह्मश्रीशेषाद्रिशर्माणः(मद्रपुरीस्थाः), ८. ब्रह्मश्रीराजगोपालघनपाठिनः (मद्रपुरीस्थाः), ९. ब्रह्मश्रीवेङ्कटरामघनपाठिनः(मद्रपुरीस्थाः), १०. ब्रह्मश्रीयज्ञमणिघनपाठिनः(मद्रपुरीस्थाः), ११. ब्रह्मश्रीविश्वासशास्त्रिघोडसकराः(नान्देडस्थाः), १२. ब्रह्मश्रीनरेन्द्रकापरेमहोदयाः(सिकन्दराबादस्थाः), १३. ब्रह्मश्रीविजयराघवघनपाठिनः(मद्रपुरीस्थाः), १४. ब्रह्मश्रीविश्वनाथशर्माणः(मद्रपुरीस्थाः), १५. ब्रह्मश्रीदेन्दुकूरिनारायणशर्माणः(मद्रपुरीस्थाः), १६. ब्रह्मश्रीरामघनपाठिनां पुत्रः चि.ब्रह्मश्रीनारायणघनपाठी(काशीस्थः) च। एतेषु वरीयसः नमस्करोमि, यवीयसश्च शुभाशीर्भिः संयोजयामि।

ब्रह्मश्रीकृष्णमूर्तिशास्त्रिणां शिष्येण आयुष्मता श्रीसतीशशर्मणा पृष्ठादिसंयोजने महान् श्रमः कृतः। तमपि शुभाशीर्भिः संयोजयामि।

अस्मिन् महति कार्ये यथोचितं व्यवस्थासम्पादनेन उपकारं कृतवत्यः स्त्रियः इह स्मर्यन्ते-

१. ब्रह्मश्रीकृष्णमूर्तिशास्त्रिणां पत्नी सौभाग्यवती लक्ष्मीः(प्रेमा), २. ब्रह्मश्रीराजगोपालघनपाठिनां पत्नी सौभाग्यवती अन्नपूर्णा ३. ब्रह्मश्रीवेङ्कटरामघनपाठिनां पत्नी सौभाग्यवती अनन्तलक्ष्मीः(विजया), ४. ब्रह्मश्रीयज्ञमणिघनपाठिनां पत्नी सौभाग्यवती ललिता च। एतासां सर्वविधमङ्गलानि कामये।

अस्मदन्तेवासिना आयुष्मता श्रीबबनलक्ष्मणमस्केमहोदयेन(आलन्दीवास्तव्येन), आयुष्मता श्रीराजकुमारनाथानीमहोदयेन(देहलीवास्तव्येन), आयुष्मता श्रीपवनकुमारशर्मणा(जबलपुरवास्तव्येन) च सम्पादनकार्ये अस्मद्व्यवस्थायां साहाय्यं विहितम्। तेषां सर्वेषां शुभोदर्कं कामये।

यावच्छक्यम् उपलब्धसाधनानुसारं शुद्धमातृकासम्पादनार्थं भूयः प्रयत्ने कृतेऽपि यदा व्यञ्जनोत्तरोकारऋकारयोः स्पष्टानुदात्तस्वराभिव्यक्तौ वयं सर्वे असमर्था भूत्वा किङ्कर्तव्यविमूढा जातास्तदा कृष्णमूर्तिशास्त्रिणां पुत्रेण चिरञ्जीविना श्रीरामसुब्रह्मण्यशर्मणा सपदि स्वल्पीयसि काले यन्त्रे कञ्चित् संस्कारं कृत्वा तद्यन्त्रद्वाराऽऽञ्जस्येन व्यञ्जनोत्तरोकारऋकारयोः स्वराभिव्यक्तिव्यवस्था सम्पादितेति तत्प्रत्युपकृतिः कथं विधेयेति न जाने। तस्य सर्वविधश्रेयोभिवृद्धिः उत्तरोत्तरं भवतु-इति। तस्मै हार्दिकीं शुभाशिषं प्रयच्छामि।

पूर्वं यैर्यैर्महानुभावैः ब्राह्मणारण्यकोपनिषद्भाष्यग्रन्थाः सम्पादिताः प्रकाशिताश्च, तेषां सर्वेषां कार्तज्ञ्यं वहामि।

वेदशास्त्रप्रचारणे बद्धादराणाम् उदारकीर्तीनां श्रीमताम् एस्.वि.एस्.राघवमहाशयानां साहाय्येन ग्रन्थोऽयं मुद्रित इति तेऽभिनन्दनीयाः। वेदशास्त्रग्रन्थानां प्रकाशने अस्मिन् काले ईदृशा बद्धश्रद्धाः विरलाः। एतेषां सर्वविधश्रेयोभिवृद्धये भगवन्तं श्रीवेङ्कटाचलपतिं प्रार्थये।

अक्षरसंयोजनकार्ये चिरञ्जीविनौ श्रीमन्तौ गोविन्दराजशर्मा पेरियस्वामी च महत्या श्रद्धया कौशलेन च कार्यं कृतवन्ताविति तावभिनन्दनीयौ। एतयोः सर्वविधश्रेयोभिवृद्धिं कामये।

अस्मिन् महति कार्ये उपकारं कृतवतां सर्वेषां सर्वविधश्रेयःसम्पादनाय भगवन्तं सम्प्रार्थये।

ग्रन्थसम्पादनकार्येऽवधाने कृतेऽपि मानुष्यदोषवशाद्यन्त्रदोषवशाच्च सम्भाविता अशुद्धीः शुद्ध्यशुद्धि-पत्रावलोकनेन साम्प्रदायिकगुरुमुखाच्चावगत्य तासां परिमार्जनं कृत्वाऽध्ययनं कर्तव्यमिति सविनयं विद्वद्भ्य-श्छात्रेभ्यश्च निवेद्यते।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्॥

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः। इति शम्।

विद्वद्विधेयः

गणेश्वरद्राविडः





# முகவுரை

பகவானின் மூச்சுக்காற்றாக கூறப்படும் வேதங்கள் நமது ஸனாதன தர்மமாகிய வ்ருக்ஷத்தின் ஆணிவேருக விளங்கி வருகின்றன. இந்த வேதம் பாரதப் பண்பாட்டின் ஆதாரமாக விளங்கி வரும் நூல்களில் ஓர் அரிய பொக்கிஷம். இந்த வேதம் வ்யாஸ பகவானுல் நான்காக பிரிக்கப்பட்டுள்ளன. அவையாவன (1) ருக்வேதம் (2) யஜுர்வேதம் (3) ஸாமவேதம் (4) அதர்வண வேதம்.

இந்த வேதமந்த்ரங்களை அக்ஷரசுத்தமாகவும், நன்ருக ஸ்வரத்துடனும் பாராயணம் செய்வதாலும் அதில் கூறப்பட்டுள்ள வேள்விகளைச் செவ்வனே செய்வதாலும் உலக க்ஷேமம் ஏற்படுகிறது என்பது தொன்றுதொட்டு வரும் நம்பிக்கை. வேதங்கள் முக்கியமாக (1) மந்திரம் (2) ப்ராஹ்மணம் என்று இரண்டு வகையாக பிரிக்கப்படுகின்றன. பொதுவாக மந்திரங்கள் அடங்கிய பகுதியை ஸம்ஹிதை என்றும், அந்த மந்திரங்களின் குறுகிய விளக்கம் உடைய பகுதியை ப்ராஹ்மணம் என்றும் கூறுவர். முன்பு குறிப்பிட்ட யஜுர்வேதம் மேலும் இரண்டு வகைப்படும். (1) சுக்ல யஜுர்வேதம் (2) க்ருஷ்ண யஜுர்வேதம் என்று.

மந்திரத்திற்கென தனியான நூலும், ப்ராஹ்மணத்திற்கென தனியான நூலும் இருப்பதால், சுக்லம் (தூய்மை, வெண்மை) எனவும், அவையிரண்டும் கலந்து உள்ளதால் க்ருஷ்ணம் (கருப்பு) எனவும் யஜுர்வேதம் அழைக்கப்படுகிறது. இதில் ஸம்ஹிதை, ப்ரமஹ்மணம் என 2 பாகங்கள் உள்ளன.

க்ருஷ்ண யஜுர்வேதத்தின் ப்ராம்ஹண பாகம் அஷ்டகம், ஆரண்யகம், காடகம் என்ற உட்பிரிவுகளைக் கொண்டுள்ளது. இந்த வேதத்தில் மொத்தம் 82 ப்ரச்னங்கள் உள்ளன. அதன் விபரம் கீழ்க்கண்டவாறு.

| ஸம்ஹிதை | ப்ராம்ஹணம் |
|---|---|
| 1. காண்டம் 8 ப்ரச்னங்கள் | (i) 1 அஷ்டகம் 8 ப்ரச்னங்கள் |
| 2. காண்டம் 6 ப்ரச்னங்கள் | 2 அஷ்டகம் 8 ப்ரச்னங்கள் |
| 3. காண்டம் 5 ப்ரச்னங்கள் | 3 அஷ்டகம் 9 ப்ரச்னங்கள் |
| 4. காண்டம் 7 ப்ரச்னங்கள் | (ii) ஆரண்யகம் 10 ப்ரச்னங்கள் |
| 5. காண்டம் 7 ப்ரச்னங்கள் | (iii) காடகம் 3 ப்ரச்னங்கள் |
| 6. காண்டம் 6 ப்ரச்னங்கள் | |
| 7. காண்டம் 5 ப்ரச்னங்கள் | |
| 44 | 38 |

இது தவிர 'மந்த்ரப்ரச்னம்' என்ற பகுதியில் 2 ப்ரச்னங்கள் உள்ளன. இப்பகுதியில் நமது வைதிக கார்யங்களான உபநயனம் மற்றும் விவாஹாதி கார்யங்களுக்கு (ஸ்மார்த்த தர்மங்களுக்கு) தேவையான மந்திரங்கள் உள்ளன. ப்ரக்ருதம் ஸ்ரீமத் அழகியசிங்கர் நான்கு வேதங்களையும் போஷிப்பதற்காக, அவைகளின் வெவ்வேறு சாகை (பிரிவுகள்) கற்ற வேதபண்டிதர்களை அவ்வப்போது வரவழைத்து, விசேஷமாக சுக்ல யஜுர்வேத சாகைகளின் பாராயணம் ஏற்படுத்தி அந்த வேத வித்வான்களை ஸன்மானிப்பதில் மிகவும் உதாரமாக ஸம்பாவனைகள் செய்வதுடன் வேதாபிவ்ருத்திக்காக வேதபாடசாலை நிறுவி குழந்தைகளைத் தயார் செய்து வருவதும் கண் கூடு. இவரது 76வது திருநக்ஷத்ர வைபவத்தில் வேத சாஸ்திர விற்பன்னர்களை கௌரவிக்க வேண்டும் என்பதையே முக்கியமாகக் கொண்டு நடைபெறும் இந்த வைபவத்தில் க்ருஷ்ண யஜுர்வேதத்தின் புத்தகங்களை நாகரலிபியில், நல்ல முறையில் அச்சிட்டு வேதம் பயிலும் மாணவர்களுக்கு மிகுந்த உபகாரமாக இந்தப் பணியை ந்ருஸிம்ஹ ப்ரியா டிரஸ்டு மேற் கொண்டுள்ளது.

இந்த நூலை நல்ல முறையில், முன்பு வெளியான நூல்களில் (நாகரிலிபியில்) உள்ள பிழைகளைக் களைந்து புதிய முறையில் திருத்தங்களுடன், பல ஸ்வரக்குறியீடுகளுடனும் வெளிக்கொண்டுவரும் பணியில் முக்கியமான பளுவை ஏற்று உழைத்து உதவும் பண்டிதர் காசியில் வஸித்து வரும் ப்ரும்ம ஸ்ரீ கணேச்வர த்ராவிட் என்பவர். இவர் மகாதார்க்கிகரும் ஸகல சாஸ்திர வித்பன்னருமான ப்ரும்ம ஸ்ரீ ராஜேச்வர சாஸ்திரிகளின் புத்திரர். இவருக்கு எங்கள் மனமார்ந்த நன்றியை தெரிவித்துக்கொள்கிறோம்.

மேலும் இந்நூலை தேவநாகரிலிபியில் கம்ப்யூட்டரில் டைப் செய்ய உதவிய ஸ்ரீ கோவிந்தராஜன், திரு. பெரிய ஸ்வாமி ஆகிய இருவருக்கும் எங்களது நன்றியை தெரிவித்துக்கொள்கிறோம். இந்நூலை அச்சிட்டுத் தந்த திரு.ரமணி, & திரு.மௌலி, ராஜன் அண்டு கம்பெனி பிரிண்டர்ஸ், அவர்களுக்கும் எங்களது நன்றி கலந்த பாராட்டுக்கள்.

*26.11.2001*

R. கிருஷ்ணமூர்த்தி சாஸ்திரி<br>
முதல்வர், ஸம்ஸ்க்ருத கல்லூரி<br>
மயிலை, சென்னை-600 004.

श्रीमते श्रीलक्ष्मीनृसिंह परब्रह्मणे नमः

श्रीमते श्रीलक्ष्मीनृसिंह दिव्यपादुका सेवक
श्रीवण्शठकोप श्रीनारायण यतीन्द्र महादेशिकाय नमः ।।

आदौ वेदाः प्रमाणं என்னும்படி வேதமே எல்லாவற்றிற்கும் மூல ப்ரமாணமாய் விளங்குகின்றது. यदि शब्दाह्वयं ज्योतिः आसंसारं न दीप्यते என்ற கூற்றின்படி ஶப்தராஶியான வேதம் தோன்றவில்லையெனில் இந்த உலகம் இருளிலேயே மூழ்கியிருக்கும். இதனை ஆழ்வாரும்

முன்னிவ்வுலகேழும் இருள்மண்டியுண்ண
முனிவரோடு தானவர் திகைப்ப அன்று
பன்னுகலை நால்வேதப் பொருளையெல்லாம்
பரிமுகமாய் அருளிய எம் பரமன் காண்மின்

என்று வேதத்தையும், அதன் அர்த்தவிஶேஷங்களையும் எம்பெருமான் ப்ரம்மனுக்கு உபதேஶித்ததாக அருளுகிறார். ஒரு புருஷனால் இயற்றப்படாமல் அபௌருஷேயமாய், அஜ்ஞானமாகிய இருட்டை போக்குமதாய், உலகிற்கு ஒரு உன்னத ஒளிவிளக்காய் திகழ்வதுவேதம். இதில் பல ஶாகைகள் உள்ளன. எம்பெருமானின் மஹிமையைப் போன்றே இதன் பெருமையும் எல்லையற்றது. எனவே अनन्ता वै वेदाः என்று அதன் ஆநந்த்யத்தை அநுஸந்திக்கின்றனர்.

இத்தகைய பெருமைவாய்ந்த வேதத்தை வளர்ப்பதில் ப்ரக்ருதம் ஸ்ரீமதழகியசிங்கர் காட்டிவரும் உத்ஸாஹம் அலாதியானது. ஸ்ரீஸந்நிதியில் நடக்கும் திருநக்ஷத்ர வைபவங்களில் சதுர்வேத பாராயணம் மட்டுமின்றி அருகிவரும் மாத்யந்திந ஶாகை முதலிய வேதபாகங்களை அத்யயனம் செய்தவர்களையும் கண்டுகொண்டு அவற்றை ப்ரசாரத்தில் ஈடுபடுத்தியாகிறது.

தற்போது யஜுர்வேதபாகம் க்ரந்தாக்ஷரத்தில் ஸ்வரங்களுடன் அச்சிடப்பட்டு ப்ரசாரத்தில் இருந்துவருகின்றது. இருப்பினும் தத்காலத்தில் நாகர (ஸம்ஸ்க்ருத) எழுத்துக்களே அனைவரும் கற்றுள்ளதனாலும் வேதாத்யயனத்தில் ஊற்றமுள்ளவர்கள் ஸௌகர்யமாக அத்யயநம் பண்ண ஸ்வரப்பிழையில்லாமல் நாகராக்ஷரத்தில் ஒரு புஸ்தகம் வெளிவர ஸ்ரீமதழகியசிங்கர் திருவுள்ளம் பற்றியாயிற்று. அதன்படி ஸ்ரீந்ருஸிம்ஹ ப்ரியா ட்ரஸ்ட் மூலம் ஸ்ரீமான் S.V.S. ராகவன் அவர்கள் சிறந்த ஶாஸ்த்ரஜ்ஞரும், வேதாத்யாயபரராகவுமுள்ள ஸம்ஸ்க்ருத கல்லூரி (சென்னை) முதல்வர் டாக்டர் ப்ரம்ஹஸ்ரீ R. கிருஷ்ணமூர்த்தி சாஸ்திரிகள் அவர்கள் மூலம் இதனை வெளியிட்டுள்ளார்.

அவருக்கு ஸஹாயமாக ப்ரம்ஹ ஸ்ரீ கணேச்வர த்ராவிட் அவர்களும் இணைந்து முதன்முறையாக இப்புத்தகத்தை வெகு பரிச்ரமப்பட்டும் ஸ்வர, அக்ஷர பிழையில்லாமல் சிறந்த முறையில் வெளியிட்டுள்ளனர். இவர்களுக்கு ஸ்ரீமாலோலன் ஸ்ரீமதழகியசிங்கரின் அநுக்ரஹத்தினால் ஸகலக்ஷேமங்களும் ஏற்பட வேணுமாய்ப் ப்ரார்த்திக்கிறோம்.

-ஸம்பாதகர்

# நன்றி

வேதங்களைப் பாதுகாக்கப் பாடுபடும் ஸ்ரீமத் அழகியசிங்கரின் இடைவிடா முயற்சிகள் யாவரும் அறிந்தவையே. பொதுவாக வழக்கத்தில் இல்லாத அதர்வண வேதம், மாத்யந்தின சாகை (சுக்ல யஜுர்வேதம்) ஜைமினீயசாமம் இவைகளை சொல்பவர்களைக் கண்டுபிடித்து அவர்களுக்கு அபரிமிதமான ஸம்பாவனை கொடுத்து ஊக்குவிப்பதையும், இவைகளை நிரந்தர சாற்றுமுறை க்ரமமாக வழக்கத்தில் கொண்டுவந்திருப்பதையும் யாவரும் அறிந்ததே.

சில வருடங்களுக்கு முன் ஒரு நாள் அடியேனிடம் க்ருஷ்ண யஜுர் வேதத்தை அச்சுப்பிழையில்லாமலும், ஸ்வரப்பிழை இல்லாமலும் தேவநாகரிலிபியில் அச்சிட வேண்டும் என்று ஸாதித்தாயிற்று. அதை அடியேன் ப்ரஹ்மஸ்ரீ Dr. R.கிருஷ்ணமூர்த்தி சாஸ்திரிகளிடம் சென்னை சம்ஸ்க்ருத கல்லூரி முதல்வர் - விக்ஞாபித்தேன்.

அவர் உடனே பரம உத்ஸாகத்துடன் தன்னுடைய புதல்வர் ஸ்ரீராமஸுப்பிரமணியனிடமும் சொல்லி ஆரம்பித்தார். கொஞ்சம் கூட ப்ரதிப்ரயோஜனமே எதிர்பாராமல் மிகுந்த ச்ரமத்துடன் அணு அணுவாக பல பேர்களைக் கொண்டு பல தடவை பரிசோதித்து இந்தக்கார்யத்தைச் செய்து முடித்துவிட்டார்கள். ஸத்காரியங்களில் இந்தக்குடும்பம் ஈடுபடும் அளவை வேறு எங்கும் காணமுடியாது. வேதங்கள், சாஸ்த்ரங்கள், வேதபாஷ்யம் இவைகளை நன்ருகக் கற்று அறிந்தவர்கள். அது மட்டும் இல்லாமல், வேறுபாடின்றி யார் வந்தாலும் அவர்களுக்குப் பண உதவி, சாப்பாடு மற்ற உதவிகள் எல்லாம் பண்ணி வேத அதிகாரிகளை உருவாக்கும் குடும்பம். இந்தக் கலிகாலத்தில் இப்படி ஒரு குடும்பத்தைக் காண்பது அபூர்வம்.

அது மட்டுமன்றி ஸ்ரீமத் அழகியசிங்கரிடம் ஆழ்ந்த பக்தி அன்பு உடையவர்கள். ஸ்ரீமத் அழகியசிங்கரின் ஆக்ஞையைச் சிரமேற்கொண்டு இந்தக் காரியத்தை முடித்துக் கொடுத்ததற்கு ஸ்ரீ ந்ருஸிம்ஹப்ரியா டிரஸ்டின் சார்பில் என் நன்றியைத்தெரிவித்துக் கொள்கிறேன். க்ரந்தலிபி வழக்கொழிந்து கொண்டுவரும் இந்த நாட்களில் இம்மாதிரியான வேத புத்தகம் எல்லோருக்கும் ஒரு வரப்ரஸாதமாக அமையும் என்பதில் ஐயமில்லை.

வேணும் தாஸன்
S.V.S.ராகவன்

ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ प्रथमं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

इषे त्वोर्जे त्वा वायवस्स्थोपायवस्स्थ देवो वस्सविता प्राऽर्पयतु श्रेष्ठतमाय कर्मण आ प्यायद्ध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयख्ष्मा मा वस्स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु द्ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ १ ॥ इषे त्रिचत्वारिꣳशत् ॥ १ ॥

यज्ञस्य घोषदसि प्रत्युष्टꣳ रख्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बरुहिरच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बरुहिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबरुहिर्मा त्वाऽन्वङ्मा तिर्यक्पर्व ते राद्ध्यासमाच्छेत्ता ते मा रिषन्देवबरुहिश्शतवल्शँ्वि रोह सहस्रवल्शा ॥ २ ॥ वि वयꣳ रुहेम पृथिव्यास्संपृचः पाहि सुसंभृता त्वा सम्भराम्यदित्यै रास्नाऽसीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिङ्ग्रथ्नातु स ते माऽऽस्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्द्ध्ना हराम्युर्वन्तरिख्षमन्विहि देवङ्गममसि ॥ ३ ॥ सहस्रवल्शा अष्टात्रिꣳशच्च ॥ २ ॥

शुन्धद्ध्वन्दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वार्वसूनां पवित्रमसि शतधारँ्वसूनां पवित्रमसि सहस्रधारꣳ हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा सं पृच्यद्ध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतन्नच्मीन्द्राय दधि विष्णो हव्यꣳ रख्षस्व ॥ ४ ॥ सोमेनाऽष्टौ च ॥ ३ ॥

कर्मणे वान्देवेभ्यश्शकेयँ्वेषाय त्वा प्रत्युष्टꣳ रख्षः प्रत्युष्टा अरातयो धूरसि धूर्व धूर्वन्तन्धूर्व तँ्योऽस्मान्धूर्वति तन्धूर्व यँ्वयन्धूर्वामस्त्वन्देवानामसि सस्नितमं पप्रितमञ्जुष्टतमँ्वह्नितमन्देवहूतममह्रुतमसि हविर्द्धानन्दृꣳहस्व मा ह्वार्मित्रस्य त्वा चख्षुषा प्रेख्षे मा भेर्मा सँ्विक्था मा त्वा ॥ ५ ॥ हिꣳसिषमुरु वाताय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टन्निर्वपाम्यग्नीषोमाभ्यामिदन्देवानामिदमु नस्सह स्फात्यै त्वा नाऽरात्यै सुवरभि वि ख्ये-

षँव्वैश्वान॒रञ्ज्योति॒र्दृꣳहन्ता॒न्दुर्या॒ द्यावा॑पृथि॒व्योरु॒र्वन्तरि॑ख्ष॒मन्वि॒ह्यदि॑त्यास्त्वो॒पस्थे॑ सादया॒म्यग्ने॑ हु॒व्यꣳ र॑ख्षस्व ॥ ६ ॥ मा त्वा॒ षट्च॑त्वारिꣳशच्च ॥ ४ ॥

दे॒वो व॑स्सवि॒तोत्पु॑ना॒त्वच्छि॑द्रेण प॒वित्रे॑ण॒ वसो॒स्सूर्य॑स्य र॒श्मिभि॒राप॑ देवीरग्रेपुवो अग्रे-गु॒वोऽग्र॑ इ॒मँय्य॒ज्ञन्न॑य॒ताऽग्रे॑ य॒ज्ञप॑तिन्धत्त यु॒ष्मानिन्द्रो॑ऽवृणीत वृ॒त्रतू॑र्ये यू॒यमिन्द्र॑मवृणीद्ध्वँव्वृ॒त्रतू॑र्ये प्रोख्षि॑तास्स्था॒ऽग्नये॑ वो॒ जुष्टं॑ प्रोख्षा॑म्य॒ग्नीषोमा॑भ्या॒ꣳ शुन्ध॑द्ध्व॒न्दैव्या॑य॒ कर्म॑णे देवय॒ज्याया॒ अव॑-धूत॒ꣳ रख्षोऽव॑धूता॒ अरा॑त॒योऽदि॑त्या॒स्त्वग॑सि॒ प्रति॑ त्वा ॥ ७ ॥ पृ॒थिवी वे॑त्त्वधि॒षव॑णमसि वान-स्प॒त्यं प्रति॒ त्वाऽदि॑त्या॒स्त्वग्वे॑त्त्व॒ग्नेस्त॒नूर॑सि वा॒चो वि॒सर्ज॑नन्दे॒ववी॑तये त्वा गृह्णा॒म्यद्रि॑रसि वान-स्प॒त्यस्स इ॒दन्दे॒वेभ्यो॑ हु॒व्यꣳ सु॒शमि॑ शमि॒ष्वेष॒मा व॒दोर्ज॒मा व॑द द्यु॒मद्व॑दत व॒यꣳ सङ्घा॒तञ्जे॑ष्म व॒र्ष-वृ॑द्धमसि॒ प्रति॑ त्वा व॒र्षवृ॑द्धँव्वेत्तु॒ परा॑पूत॒ꣳ रख्षः॒ परा॑पूता॒ अरा॑तयो॒ रख्ष॑सां भा॒गो॑ऽसि वा॒युर्वो॒ वि वि॑नक्तु दे॒वो व॑स्सवि॒ता हिर॑ण्यपाणि॒ः प्रति॑ गृह्णातु ॥ ८ ॥ त्वा॒ भा॒ग एका॑दश च ॥ ५ ॥

अव॑धूत॒ꣳ रख्षोऽव॑धूता॒ अरा॑त॒योऽदि॑त्या॒स्त्वग॑सि॒ प्रति॑ त्वा पृथि॒वी वे॑त्तु दि॒वस्स्क॑म्भ॒निर॑सि॒ प्रति॒ त्वाऽदि॑त्या॒स्त्वग्वे॑त्तु धि॒षणा॑ऽसि पर्व॒त्या प्रति॑ त्वा दि॒वस्स्क॑म्भ॒निर्वे॑त्तु धि॒षणा॑ऽसि पार्व॒तेयी॒ प्रति॑ त्वा पर्व॒तिर्वे॑त्तु दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्या॑ पू॒ष्णो हस्ता॑भ्या॒मधि॑ वपामि धा॒न्य॑मसि धि॒नुहि दे॒वान्प्रा॒णाय॑ त्वाऽपा॒नाय॑ त्वा व्या॒नाय॑ त्वा दी॒र्घाम॒नु प्रसि॑ति॒मायु॑षे धान्दे॒वो व॑स्सवि॒ता हिर॑ण्यपाणि॒ः प्रति॑ गृह्णातु ॥ ९ ॥ प्रा॒णाय॑ त्वा॒ पञ्च॑दश च ॥ ६ ॥

धृष्टि॑रसि॒ ब्रह्म॑ य॒च्छाऽपा॑ऽग्ने॒ऽग्निमा॒माद॑ञ्जहि॒ निष्क्र॒व्यादꣳ॑ से॒धाऽऽदे॑व॒यजँ॑व्वह॒ निर्द॑ग्ध॒ꣳ रख्षो॒ निर्द॑ग्धा॒ अरा॑तयो ध्रु॒वम॑सि पृथि॒वीन्दृ॒ꣳहायु॑र्दृꣳह प्र॒जान्दृꣳह सजा॒ताना॒स्मै यज॑मानाय॒ पर्यू॑ह ध॒र्त्रम॑स्य॒न्तरि॑ख्षन्दृꣳह प्रा॒णन्दृꣳहाऽपा॒नन्दृꣳह सजा॒ताना॒स्मै यज॑मानाय॒ पर्यू॑ह ध॒रुण॑मसि॒ दिव॑न्दृ-ꣳहु चख्षु॑- ॥ १० ॥ दृꣳहु॒ श्रोत्र॑न्दृꣳह सजा॒ताना॒स्मै यज॑मानाय॒ पर्यू॑ह धर्मा॑ऽसि॒ दिशो॑ दृꣳहु॒ योनि॑-न्दृꣳह प्र॒जान्दृꣳह सजा॒ताना॒स्मै यज॑मानाय॒ पर्यू॑ह॒ चित॑स्स्थ प्र॒जाम॒स्मै र॒यिम॒स्मै स॑जा॒ताना॒स्मै यज॑मानाय॒ पर्यू॑ह भृगू॑णा॒मङ्गि॑रसा॒न्तप॑सा तप्यद्ध्व॒ँय्यानि॑ घ॒र्मे क॒पाला॑न्युपचि॒न्वन्ति॑ वे॒धस॑ः । पू॒ष्णस्तान्यपि॑ व्र॒त इ॑न्द्रवा॒यू वि मु॑ञ्चताम् ॥ ११ ॥ चख्षु॑र॒ष्टाच॑त्वारिꣳशच्च ॥ ७ ॥

सँव्व॑पामि॒ समापो॑ अ॒द्भिर॑ग्मत॒ समोष॑धयो॒ रसे॑न॒ सꣳ रे॒वती॒र्जग॑तीभि॒र्मधु॑मती॒र्मधु॑मतीभि-स्सृज्यद्ध्वम॒द्भ्यः परि॒ प्रजा॑तास्स्थ॒ सम॒द्भिः पृ॑च्यद्ध्व॒ञ्जन॑यत्यै त्वा॒ सँय्यौ॑म्य॒ग्नये॑ त्वा॒ऽग्नीषोमा॑भ्यां म॒खस्य॒ शिरो॑ऽसि घ॒र्मो॑ऽसि वि॒श्वायु॑रु॒रु प्र॑थस्वो॒रु ते॑ य॒ज्ञप॑तिः प्रथता॒न्त्वच॑ङ्गृह्णीष्वा॒ऽन्तरि॑त॒ꣳ रख्षो॒ऽन्तरि॑ता॒ अरा॑तयो दे॒वस्त्वा॑ सवि॒ता श्र॑पयतु॒ वर्षि॑ष्ठे॒ अधि॒ नाके॒ऽग्निस्ते॑ त॒नुव॒ं माऽति॑ धा॒गग्ने॑ हु॒व्यꣳ र॑ख्षस्व॒ सं ब्रह्म॑णा पृच्यस्वैक॒ताय॒ स्वाहा॑ द्वि॒ताय॒ स्वाहा॑ त्रि॒ताय॒ स्वाहा॑ ॥ १२ ॥ स॒वि॒ता द्वावि॑ꣳशतिश्च ॥ ८ ॥

आ दद इन्द्रस्य बाहुरसि दक्षिणस्सहस्रभृष्टिश्शततेजा वायुरसि तिग्मतेजाः पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमपहतोऽररुः पृथिव्यै व्रजङ्गच्छ गोस्थानव्वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो मा मौगपहतोऽररुः पृथिव्यै देवयजन्यै व्रज- ॥ १३ ॥ ङ्गच्छ गोस्थानव्वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो मा मौगपहतोऽररुः पृथिव्या अदेवयजनो व्रजङ्गच्छ गोस्थानव्वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो मा ॥ १४ ॥ मौगररुस्ते दिवं मा स्कान् वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वा परि गृह्णन्तु जागतेन छन्दसा देवस्य सवितुस्सवे कर्म कृण्वन्ति वेधस ऋतमस्यृतसदनमस्यृतश्रीरसि धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरफ्शिन्नुदादाय पृथिवीञ्जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तान्धीरासो अनुदृश्य यजन्ते ॥ १५ ॥ देवयजन्यै व्रजन्तमतो मा विरफ्शिन्नेकादश च ॥ ९ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि गोष्ठं मा निर्मृक्षव्वाजिनन्त्वा सपत्नसाहꣳ सं मार्ज्मि वाचं प्राणञ्चक्षुश्श्रोत्रं प्रजाय्योनिं मा निर्मृक्षव्वाजिनीन्त्वा सपत्नसाहीꣳ सं मार्ज्म्याशासाना सौमनसं प्रजाꣳ सौभाग्यन्तनूम् । अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम् । सुप्रजसस्त्वा वयꣳ सुपत्नीरुप ॥ १६ ॥ सेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इमव्वि ष्यामि वरुणस्य पाशय्यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि । समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहङ्गच्छे समात्मा तनुवा मम । महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य नि-॥ १७ ॥ र्वपामि महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय तेजोऽसि तेजोऽनु प्रेह्यग्निस्ते तेजो मा वि नैदग्नेर्जिह्वाऽसि सुभूर्देवानान्धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव शुक्रमसि ज्योतिरसि तेजोऽसि देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिश्शुक्रन्त्वा शुक्रायान्धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ॥ १८ ॥ उप नी रश्मिभिश्शुक्रꣳ षोडश च ॥ १० ॥

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा वेदिरसि बर्हिषे त्वा स्वाहा बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीङ्गच्छत विष्णोस्स्तूपोऽस्यूर्णाम्रदसन्त्वा स्तृणामि स्वासस्थन्देवेभ्यो गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इन्द्रस्य बाहुरसि ॥ १९ ॥ दक्षिणो यजमानस्य परिधिरिड ईडितो मित्रावरुणौ त्वोत्तरतः परि धत्तान्ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितस्सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमह्यग्ने

बृहन्तमद्ध्वरे विशो यन्त्रे स्थो वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीद जुहूरुपभृद्ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदैता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि माय्यंज्ञनियम् ॥ २० ॥ बाहुरसि प्रिये सदसि पञ्चदश च ॥ ११ ॥

भुवनमसि वि प्रथस्वाऽग्ने यष्टरिदन्नमः । जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया अग्नाविष्णू मा वामव क्रमिषंव्वि जिहाथां मा मा सन्ताप्तल्लोकं मे लोककृतौ कृणुतव्विष्णोस्स्थानमसीत इन्द्रो अकृणोद्वीर्याणि समारभ्योर्द्ध्वो अद्ध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा बृहद्भाः पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज मखस्य शिरोऽसि सञ्ज्योतिषा ज्योतिरङ्क्ताम् ॥ २१ ॥ अह्रुत एकविꣳशतिश्च ॥ १२ ॥

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाऽधराꣳ अकः । उद्ग्राभश्च निग्राभश्च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् । वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वाऽक्तꣳ रिहाणा वियन्तु वयः । प्रजाय्योनिं मा निर्मृक्षमा प्यायन्तामाप ओषधयो मरुतां पृषतयस्स्थ दिवं- ॥ २२ ॥ ङ्गच्छ ततो नो वृष्टिमेरय । आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि द्ध्रुवाऽसि यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तन्त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै यज्ञस्य पाथ उप समितꣳ सꣳस्रावभागास्स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च ॥ २३ ॥ देवा इमाव्वाचमभि विश्वे गृणन्त आसद्याऽस्मिन्बर्हिषि मादयद्ध्वमग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तन्धुरि धुर्यौ पातमग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषन्नः पितुङ्कृणु सुषदा योनिꣳ स्वाहा देवा गातुविदो गातुव्वित्त्वा गातुमित मनसस्पत इमन्नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥ २४ ॥ दिवञ्च वित्त्वा गातुन्त्रयोदश च ॥ १३ ॥

उभा वामिन्द्राग्नी आहुवद्ध्या उभा राधसस्सह मादयद्ध्यै । उभा दातारा विषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् । अश्रवꣳ हि भूरिदावत्तरा वाव्विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमञ्जनयामि नव्यम् । इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा । शुचिन्नु स्तोमन्नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । ॥ २५ ॥ उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ सद्य उशते धेष्ठा । वयमु त्वा पथस्पते रथन्न वाजसातये । धियेपूषन्नयुज्महि । पथस्पथः परिपतिव्वचस्या कामेन कृतो अभ्यानडर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियन्धियꣳ सीषधाति प्र पूषा । क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो ॥ २६ ॥ मृडातीदृशे । क्षेत्रस्य पते मधुमन्तमूर्मिन्धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतङ्घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु । अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोद्ध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिव्विधेम । आ देवानामपि पन्थामगन्म

यच्छक्रवाम तदनु प्रवोढुम्। अग्निर्विद्वान्थ्स यजा- ॥ २७ ॥ थ्सेदु होता सो अद्ध्वरान्थ्स ऋतून्कल्पयाति। यद्वाहिष्ठन्तदग्नये बृहदर्च विभावसो। महिषीव त्वद्रयिस्त्वद्वाजा उदीरते। अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शय्योः। त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वय्यँज्ञेष्वीड्यः। यद्वो वयं प्रमिनाम व्रतानि विदुषान्देवा अविदुष्टरासः। अग्निष्टद्विश्वमा पृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति ॥ २८ ॥ जुषेथामा स नो यजादा त्रयोविंशतिश्च ॥ १४ ॥

इषे त्वा यज्ञस्य शुन्धद्ध्वङ्कर्मणे देवोऽवधूतन्धृष्टिस्सँव्वपाम्या ददे प्रत्युष्टङ्कृष्णोऽसि भुवनमसि वाजस्योभा वाश्चतुर्दश ॥ १४ ॥ इषे दृꣳह भुवनमष्टाविꣳशतिः ॥ २८ ॥ इषे त्वा कल्पयाति ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ प्रथमकाण्डे द्वितीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्देवश्रूरेतानि प्र वपे स्वस्त्युत्तराण्यशीयाऽऽपो अस्मान्मातरश्शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्र वहन्तु रिप्रमुदाभ्यश्शुचिरा पूत एमि सोमस्य तनूरसि तनुवं मे पाहि महीनां पयोऽसि वर्चोधा असि वर्चो ॥ १ ॥ मयि धेहि वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिस्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमा वो देवास ईमहे सत्यधर्माणो अद्ध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इन्द्राग्नी द्यावापृथिवी आप ओषधीस्त्वन्दीक्षाणामधिपतिरसीह मा सन्तं पाहि ॥ २ ॥ वर्च ओषधीरष्टौ च ॥ १ ॥

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहाऽऽपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा

वृधातु स्वाहा विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यवँविश्वे राय इषुध्यसि द्युम्नँव्वृणीत पुष्यसे स्वाहा॑-
र्क्सामयोश्शिल्पे स्थस्ते वामा रंभे ते मा ॥ ३ ॥ पातमाऽस्य यज्ञस्योदृचं इमान्धियꣳ शिख्षमा-
णस्य देव क्रतुन्दख्षँव्वरुण सꣳ शिशाधि ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमो-
र्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीर्विष्णोश्शर्माऽसि शर्म यजमानस्य
शर्म मे यच्छ नख्षत्राणां माऽतीकाशात्पाहीन्द्रस्य योनिरसि ॥ ४ ॥ मा मा हिꣳसीः कृष्यै त्वा
सुसस्यायै सुपिप्पलाभ्यस्त्वौषधीभ्यस्सूपस्था देवो वनस्पतिरूर्द्ध्वो मा पाह्योदृचस्स्वाहा यज्ञं
मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिख्षात्स्वाहा यज्ञँव्वातादा रंभे ॥ ५ ॥ मा योनिरसि
त्रिꣳशच्च ॥ २ ॥

दैवीन्धियम्मनामहे सुमृडीकामभिष्टये वर्चोधाँय्यज्ञवाहसꣳ सुपारा नो असद्वशे । ये देवा
मनोजाता मनोयुजस्सुदख्षा दख्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहाऽग्ने त्वꣳ
सु जागृहि वयꣳ सु मन्दिषीमहि गोपाय नस्स्वस्तये प्रबुधे नः पुनर्ददः । त्वमग्ने व्रतपा असि देव आ
मर्त्येष्वा । त्वं- ॥ ६ ॥ यँय्यज्ञेष्वीड्यः । विश्वे देवा अभि मामाऽववृत्रन्पूषा सन्या सोमो राधसा
देवस्सविता वसोर्वसुदावा रास्वेयत्सोमाऽऽभूयो भर मा पृणन्पूर्त्या वि राधि माऽहमायुषा चन्द्र-
मसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव हयोऽसि मम भोगाय
भव ॥ ७ ॥ छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव वायवे त्वा वरुणाय त्वा
निरृत्यै त्वा रुद्राय त्वा देवीरापो अपान्नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तँव्वो माऽव
क्रमिषमच्छिन्नन्तन्तुं पृथिव्या अनु गेषं भद्राद्भि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वथेमव स्य वर
आ पृथिव्या आरे शत्रून्कृणुहि सर्ववीर एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्वे
ऋख्सामाभ्याँय्यजुषा सन्तरन्तो रायस्पोषेण समिषा मदेम ॥ ८ ॥ आ त्वꣳ हयोऽसि मम भोगाय भव
स्य पञ्चविꣳशतिश्च ॥ ३ ॥

इयन्ते शुक्र तनूरिदँव्वर्चस्तया सं भव भ्राजङ्गच्छ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते
सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा शुक्रमस्यमृतमसि वैश्वदेवꣳ हविस्सूर्यस्य चख्षुराऽरु-
हमग्नेरख्ष्णः कनीनिकाँय्यदेतशेभिरीयसे भ्राजमानो विपश्चिता चिदसि मनाऽसि धीरसि दख्षिणा-
॥ ९ ॥ ऽसि यज्ञियाऽसि ख्षत्रियाऽस्यदितिरस्युभयतश्शीर्ष्णी सा नस्सुप्राची सुप्रतीची सं भव
मित्रस्त्वा पदि बध्नातु पूषाऽद्ध्वनः पात्विन्द्रायाध्यख्षायानु त्वा माता मन्यतामनु पिताऽनु
भ्राता सगर्भ्योऽनु सखा सयूथ्यस्सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वाऽऽवर्तयतु मित्रस्य पथा
स्वस्ति सोमसखा पुनरेहि सह रय्या ॥ १० ॥ दख्षिणा सोमसखा पञ्च च ॥ ४ ॥

वस्व्यसि रुद्राऽस्यदितिरस्यादित्याऽसि शुक्राऽसि चन्द्राऽसि बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो
वसुभिरा चिकेतु पृथिव्यास्त्वा मूर्द्धन्ना जिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा परिलिखितꣳ

रख्ष॒ः परि॑लिखिता॒ अरा॑तय इ॒दम॒ह॒ꣳ रख्ष॑सो ग्री॒वा अपि॑ कृन्तामि॒ यो॑ऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्म
इ॒दम॑स्य ग्री॒वा ॥ ११ ॥ अपि॑ कृन्ताम्य॒स्मे राय॒स्त्वे राय॒स्तोते॒ रायस्सन्दे॑वि दे॒व्योर्व॑श्या॒ पश्यस्व॒
त्वष्टी॑मती ते सपेय सु॒रेता॒ रेतो॒ दधा॑ना वी॒रव्ँ॑वि॑देय॒ तव॑ स॒न्दृशि॒ माऽह॒ꣳ रा॒यस्पोषे॑ण॒ वि यो॑षम्
॥ १२ ॥ अ॒स्य॒ ग्री॒वा एका॑न्न त्रि॒ꣳशच्च॑ ॥ ५ ॥

अ॒ꣳशुना॑ ते अ॒ꣳशुः पृ॑च्यतां॒ परु॑षा॒ परु॑र्ग॒न्धस्ते॒ काम॑मवतु मदा॑य॒ रसो॒ अच्यु॑तो॒ऽमात्यो॑ऽसि
शु॒क्रस्ते॒ ग्रहो॒ऽभि त्यन्दे॒वꣳ स॑वि॒तार॑मू॒ण्योः॑ क॒विक्र॑तु॒मर्चा॑मि स॒त्यस॑वसꣳ रत्न॒धाम॒भि प्रि॒यं
म॒तिमू॒र्ध्वा यस्या॒ऽमति॒र्भा अदि॑द्युत॒त्सवी॑मनि॒ हिर॑ण्यपाणिरमिमीत सु॒क्रतुः॑ कृ॒पा सुवः॑ । प्र॒जाभ्य॑-
स्त्वा प्रा॒णाय॑ त्वा व्या॒नाय॑ त्वा प्र॒जास्त्वमनु॒ प्राऽणि॑हि प्र॒जास्त्वामनु॒ प्राऽण॑न्तु ॥ १३ ॥ अनु॑ स॒प्त
च॑ ॥ ६ ॥

सोम॑न्ते क्रीणाम्यू॒र्जस्व॑न्तं॒ पय॑स्वन्तव्ँवी॒र्या॑वन्तमभिमाति॒षाहꣳ॑ शु॒क्रन्ते॑ शु॒क्रेण॑ क्रीणामि
च॒न्द्रञ्च॒न्द्रेणा॒ऽमृत॑म॒मृते॑न स॒म्यत्ते॒ गोर॒स्मे च॒न्द्राणि॒ तप॑सस्त॒नूर॑सि प्र॒जाप॑ते॒र्वर्ण॒स्तस्या॑स्ते सहस्रपो॒षं
पुष्य॑न्त्याश्चरमेण॑ प॒शुना॑ क्रीणाम्य॒स्मे ते॒ बन्धु॒र्मयि॑ ते॒ राय॑श्श्रयन्ता॒म॒स्मे ज्योति॑स्सोमविक्र॒यिणि॒
तमो॑ मि॒त्रो न॒ एहि॒ सुमि॑त्रधा॒ इन्द्र॑स्यो॒रुमा वि॑श॒ दख्षि॑ण॒मुश॒न्नुश॑न्तꣳ स्यो॒नस्स्यो॒नꣳ स्वान॒
भ्राजाऽङ्घरि॒ बंभरि॒ हस्त॒ सुह॑स्त॒ कृशा॑नवे॒ते वः॑ सोम॒क्रय॑णा॒स्तान्र॑ख्षद्ध्वं॒ मा वो॑ दभन्न् ॥ १४ ॥
ऊ॒रुन्द्वावि॒ꣳशति॑श्च ॥ ७ ॥

उदायु॑षा स्वा॒युषोदोष॑धीना॒ꣳ रसे॑नोत्प॒र्जन्य॑स्य॒ शुष्मे॒णोद॑स्थाम॒मृता॒ꣳ अनु॑ । उ॒र्व॑न्तरि॑ख्ष-
मन्वि॒ह्यदि॑त्या॒स्सदो॒ऽस्यदि॑त्या॒स्सद॒ आसी॑दाऽस्त॑भ्ना॒द्द्यामृ॑ष॒भो अ॒न्तरि॑ख्ष॒ममि॑मीत वरि॒माण॑ं पृथि॒-
व्या आऽसी॑द॒द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॒ वने॑षु॒ व्य॑न्तरि॑ख्षन्ततान॒ वाज॒म-
र्व॑थ्सु॒ पयो॑ अघ्नि॒यासु॑ हृ॒थ्सु ॥ १५ ॥ क्रतु॒व्वँरु॑णो वि॒ख्ष्व॑ग्निन्दि॒वि सूर्य॑मदधा॒थ्सोम॒मद्रा॒वुदु॒ त्यञ्जा॒त-
वे॑दसन्दे॒वव्ँव॑हन्ति के॒तवः॑ । दृ॒शे विश्वा॑य॒ सूर्य॑म् । उस्रा॒वेतन्धूर्षाहावन॒श्रू अवी॑रहणौ ब्रह्म॒चोद॑नौ॒
वरु॑णस्य॒ स्कं॑भनमसि॒ वरु॑णस्य स्कंभ॒सर्ज॑नमसि॒ प्रत्य॑स्तो॒ वरु॑णस्य॒ पाशः॑ ॥ १६ ॥ हृ॒त्सु पञ्च॑त्रि॒ꣳशच्च
॥ ८ ॥

प्र च्य॑वस्व भुवस्पते॒ विश्वा॑न्य॒भि धामा॑नि॒ मा त्वा॑ परि॒परी॑ विद॒न्मा त्वा॑ परि॒पन्थि॑नो॒ विद-
न्मा त्वा॒ वृका॑ अघा॒यवो॒ मा ग॑न्ध॒र्वो॑ वि॒श्वाव॑सुरा द॑घच्छ्ये॒नो भू॒त्वा परा॑ पत॒ यज॑मानस्य नो गृ॒हे
दे॒वैस्स॑ꣳस्कृ॒तव्ँय्यज॑मानस्य स्व॒स्त्यय॑न्य॒स्यपि॒ पन्था॑मगस्महि स्वस्ति॒गाम॑ने॒हस॒व्ँयेन॒ विश्वाः॒ परि॒
द्विषो॑ वृ॒णक्ति॒ वि॒न्दते॒ वसु॒ नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चख्ष॑से म॒हो दे॒वाय॒ तदृ॒तꣳ स॑पर्यत दूरे॒दृशे॑ दे॒व-
जा॑ताय के॒तवे॑ दि॒वस्पु॒त्राय॒ सूर्या॑य शꣳसत॒ वरु॑णस्य॒ स्कंभ॑नमसि॒ वरु॑णस्य स्कंभ॒सर्ज॑नम॒स्युन्मु॑क्तो॒
वरु॑णस्य॒ पाशः॑ ॥ १७ ॥ मि॒त्रस्य॒ त्रयो॑वि॒ꣳशतिश्च ॥ ९ ॥

अ॒ग्नेरा॑ति॒थ्यम॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्याऽऽति॒थ्यम॑सि॒ विष्ण॑वे॒ त्वाऽति॑थेराति॒थ्यम॑सि॒ विष्ण॑वे त्वा॒ऽग्नये॑ त्वा रायस्पोष॒दाव्न्ने॒ विष्ण॑वे त्वा श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒ या ते॒ धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञङ्ग॑यस्फान॑ः प्र॒तर॑णस्सु॒वीरोऽवी॑रहा॒ प्र च॑रा सोम॒ दुर्या॒नदि॑त्या॒स्सदो॒ऽस्यदि॑त्या॒स्सद॒ आ ॥ १८ ॥ सीद॒ वरु॑णोऽसि धृ॒तव्र॑तो वारु॒णम॑सि शं॒योर्दे॒वा-ना॑ꣳ स॒ख्यान्मा दे॒वाना॑म॒पस॑श्छिथ्स्म॒ह्याप॑तये त्वा गृह्णामि॒ परि॑पतये त्वा गृह्णामि॒ तनू॒नप्त्रे॑ त्वा गृह्णामि शाक्व॒राय॑ त्वा गृह्णामि॒ शक्म॒न्नोजि॑ष्ठाय त्वा गृह्णा॒म्यना॑धृष्टमस्यनाधृ॒ष्यन्दे॒वाना॒मोजोऽभि-श॒स्ति॒पा अ॑नभिशस्ते॒ऽन्यम॒नु॑ मे दी॒क्षान्दी॒क्षाप॑तिर्मन्यता॒मनु॒ तप॒स्तप॑स्पति॒रञ्ज॑सा स॒त्यमुप॑ गेषꣳ सुवि॒ते मा॑ धाः ॥ १९ ॥ आ मैकं च ॥ १० ॥

अ॒ꣳशुर॑ꣳशुस्ते देव सो॒माऽऽप्या॑यता॒मिन्द्रा॒यैकधन॒विद॒ आ तुभ्य॒मिन्द्र॑ः प्यायता॒मा त्वमि-न्द्रा॑य प्याय॒स्वाऽऽप्या॑यय॒ सखी॑न्थ्स॒न्या मे॒धया॑ स्व॒स्ति ते॑ देव सोम सु॒त्याम॑शी॒येष्टा॒ राय॒ः प्रेषे भगा॑य॒र्तम॑ृतवा॒दिभ्यो॒ नमो॑ दि॒वे नम॑ः पृथि॒व्या अग्ने॑ व्रतपते॒ त्वँव्र॒ताना॑ꣳव्र॒तप॑तिरसि॒ या मम॑ त॒नूरे॒षा सा त्वयि॒ ॥ २० ॥ या तव॑ त॒नूरि॒यꣳ सा मयि॑ स॒ह नौ॑ व्रतपते व्र॒तिनो॑र्व्र॒तानि॒ या ते॑ अग्ने॒ रुद्रि॑या त॒नूस्तया॑ नः पाहि॒ तस्या॑स्ते॒ स्वाहा॒ या ते॑ अग्नेऽयाश॒या र॑जाश॒या ह॑राश॒या त॒नूर्व॑र्षिष्ठा गह्वरे॒ष्ठो-ग्रँव्वचो॒ अपा॑वधीन्त्वे॒षँव्वचो॒ अपा॑वधी॒ꣳ स्वाहा॑ ॥ २१ ॥ त्वयि॑ चत्वारि॒ꣳशच्च॑ ॥ ११ ॥

वि॒त्ताय॑नी मेऽसि ति॒क्ताय॑नी मे॒ऽस्यव॑तान्मा नाथि॒तमव॑तान्मा व्यथि॒तँव्वि॒देर॒ग्निर्नभो॒ नामाऽग्ने॑ अङ्गिरो॒ यो॑ऽस्यां पृ॑थि॒व्यामस्यायु॑षा॒ नाम्ने॒हि॒ यत्तेऽना॑धृष्ट॒न्नाम॑ य॒ज्ञिय॒न्तेन॒ त्वाऽऽद॒धेऽग्ने॑ अङ्गिरो॒ यो द्वि॒तीय॑स्यान्तृ॒तीय॑स्यां पृथि॒व्यामस्यायु॑षा॒ नाम्ने॒हि॒ यत्तेऽना॑धृष्ट॒न्नाम॑ ॥ २२ ॥ य॒ज्ञिय॒-न्तेन॒ त्वाऽऽद॑धे सि॒ꣳहीर॑सि महि॒षीर॑स्यु॒रु प्र॑थस्वो॒रु ते॑ य॒ज्ञप॑तिः प्रथता॒न्ध्रुवाऽसि॑ दे॒वेभ्य॑श्शुन्धस्व दे॒वेभ्य॑श्शुंभस्वेन्द्रघो॒षस्त्वा॒ वसु॑भिः पु॒रस्ता॑त्पातु मनो॑जवास्त्वा पि॒तृभि॑र्दक्षिण॒तः पा॑तु प्रचे॑तास्त्वा रु॒द्रैः प॒श्चात्पा॑तु वि॒श्वक॑र्मा त्वाऽऽदि॒त्यैरु॑त्तर॒तः पा॑तु सि॒ꣳहीर॑सि सपत्न॒साही स्वाहा॑ सि॒ꣳहीर॑सि सुप्रजा॒वनि॒स्स्वाहा॑ सि॒ꣳही- ॥ २३ ॥ र॑सि रायस्पोष॒वनि॒स्स्वाहा॑ सि॒ꣳहीर॑स्यादित्य॒वनि॒स्स्वाहा॑ सि॒ꣳहीर॒स्या व॑ह दे॒वान्दे॑वय॒ते यज॑मानाय॒ स्वाहा॑ भू॒तेभ्य॑स्त्वा वि॒श्वायु॑रसि पृथि॒वीन्दृꣳ॑ह द्ध्रुव॒क्षि-द॑स्य॒न्तरि॑क्षन्दृꣳ॒हाऽच्यु॒त॒क्षिद॑सि॒ दिव॑न्दृꣳ॒हाऽग्नेर्भस्मा॒ऽस्यग्नेः पुरी॑षमसि ॥ २४ ॥ नाम॑ सुप्रजा॒वनि॒-स्स्वाहा॑ सि॒ꣳहीः पञ्च॑त्रि॒ꣳशच्च ॥ १२ ॥

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चित॑ः । वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः । सु॒वाग्दे॑व॒ दुर्या॒ꣳ आ व॑द देव॒श्रुतौ॑ दे॒वेष्वा घो॑षेथा॒मा नो॑ वी॒रो जा॑यताङ्क॒र्मण्यो॑ यꣳ सर्वे॑ऽनु॒जीवा॑म॒ यो ब॑हू॒नामस॑द्व॒शी । इ॒दँव्विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम् । समू॑ढमस्य ॥ २५ ॥ पा॒ꣳसुर इरा॑वती धे॒नुम॒ती हि भू॒तꣳ सू॑यव॒सिनी॒ मन॑वे य॒शस्ये॑ । व्य॑स्कभ्ना॒द्रो-द॑सी॒ विष्णु॑रे॒ते दा॒धार॑ पृथि॒वीम॒भितो॑ म॒यूखै॑ः । प्राची॒ प्रेत॑मद्ध्व॒रङ्क॒ल्पय॑न्ती ऊ॒र्द्ध्वँय्य॒ज्ञन्न॑यतं॒ मा

जीँह्वरतमत्रं रमेथाँव्वर्ष्मन्पृथिव्या दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिं-ख्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्र यच्छ ॥ २६ ॥ दख्षिणादोत सव्यात् । विष्णोर्नुकँव्वीर्याणि प्रवोचँय्यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थँव्विचक्रमाणस्त्रेधोरुगायो विष्णो ररार्टमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रे स्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णव-मसि विष्णवे त्वा ॥ २७ ॥ अस्य यच्छैकान्न चत्वारिꣳशच्च ॥ १३ ॥

कृणुष्व पाजः प्रसितिन्न पृथ्वीँय्याहि राजेवामवाꣳ इभेन । तृष्वीमनु प्रसितिन्द्रूणानो-ऽस्ताऽसि विद्ध्य रख्षसस्तपिष्ठैः । तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विष्वगुल्काः । प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसो ॥ २८ ॥ यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् । उदग्ने तिष्ठ प्रत्याऽऽतनुष्व न्यमित्राꣳ ओषतात्तिग्महेते । यो नो अरातिꣳ समिधान चक्रे नीचा तन्धख्ष्यतसन्न शुष्कम् । ऊर्द्ध्वो भव प्रति विद्ध्याऽद्ध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनाञ्जामिमजामिं प्र मृणीहि शत्रून् । स ते ॥ २९ ॥ जानाति सुमतिँय्यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् । सेदग्ने अस्तु सुभगस्सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना साऽसदिष्टिः । अर्चामि ते सुमतिङ्घोष्यर्वाख्सन्ते वावाता जरता- ॥ ३० ॥ मियङ्गीः । स्वश्वास्त्वा सुरथा मर्जयेमाऽस्मे ख्षत्राणि धारयेरनु द्यून् । इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवाꣳसमनु द्यून् । क्रीडन्तस्त्वा सुमनसस्सपेमाऽभि द्युम्ना तस्थिवाꣳसो जनानाम् । यस्त्वा स्वश्वस्सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् । महो रुजामि ॥ ३१ ॥ बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः । अस्वप्रजस्तरणयस्सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवस्सद्ध्रियञ्चो निषद्याऽग्ने तव नः पान्त्वमूर । ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धन्दुरि-तादरख्षन्न् । ररख्ष तान्थ्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह ॥ ३२ ॥ देभुः । त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण । अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानङ्गृभाय । दहाऽशसो रख्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् । रख्षोहणँव्वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिस्समिद्धस्स नो दिवा ॥ ३३ ॥ स रिषः पातु नक्तम् । वि ज्योतिषा बृहता भात्यग्निरा-विर्विश्वानि कृणुते महित्वा । प्राऽदेवीर्मायास्सहते दुरेवाश्शिशीते भृङ्गे रख्षसे विनिख्षे । उत स्वा-नासो दिवि षन्त्वग्नेस्तिग्मायुधा रख्षसे हन्तवा उ । मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परि-बाधो अदेवीः ॥ ३४ ॥ अघशꣳसस्स ते जरताꣳ रुजामि ह दिवैकचत्वारिꣳशच्च ॥ १४ ॥

आप उन्दन्त्वाकूत्यै दैवीमियन्ते वस्व्यस्यꣳशुना ते सोमन्त उदायुषा प्र च्यवस्वाऽग्नेरातित्थ्यमꣳशुरꣳशुर्वि-त्तायनी मेऽसि युञ्जते कृणुष्व पाजश्चतुर्दश ॥ १४ ॥ आपो वस्व्यसि या तवेयज्ञीश्चतुस्त्रिꣳशत् ॥ ३४ ॥ आप उन्दन्त्वदेवीः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ प्रथमकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददेऽभ्रिरसि नारिरसि परिलिखितꣳ रख्षः परिलिखिता अरातय इदमहꣳ रख्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यश्च वयन्द्विष्म इदमस्य ग्रीवा अपि कृन्तामि दिवे त्वाऽन्तरिख्षाय त्वा पृथिव्यै त्वा शुन्धताँल्लोकः पितृषदनो यवोऽसि यवयाऽस्मद्द्वेषो ॥ १ ॥ यवयाऽरातीः पितृणाꣳ सदनमस्युद्दिवꣳ स्तभानाऽऽन्तरिख्षं पृण पृथिवीन्दृꣳह द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्द्ध्रुवेण धर्मणा ब्रह्मवनिन्त्वा ख्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह ख्षत्रन्दृꣳह प्रजान्दृꣳह रायस्पोषन्दृꣳह घृतेन द्यावापृथिवी आ पृणेथामिन्द्रस्य सदोऽसि विश्वजनस्य छाया परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इन्द्रस्य स्यूरसीन्द्रस्य द्ध्रुवमस्यैन्द्रमसीन्द्राय त्वा ॥ २ ॥ द्वेष इमा अष्टादश च ॥ १ ॥

रख्षोहणो वलगहनो वैष्णवान्खनामीदमहन्तँव्वलगमुद्वपामि यन्नस्समानो यमसमानो निचखानेदमेनमधरङ्करोमि यो नस्समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो वलगः किमत्र भद्रन्तन्नौ सह विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासान्नाष्ट्राणाꣳ हन्ता ॥ ३ ॥ रख्षोहणो वलगहनः प्रोख्षामि वैष्णवान्रख्षोहणो वलगहनोऽव नयामि वैष्णवान् यवोऽसि यवयाऽस्मद्द्वेषो यवयाऽराती रख्षोहणो वलगहनोऽव स्तृणामि वैष्णवान्रख्षोहणो वलगहनोऽभि जुहोमि वैष्णवान्रख्षोहणौ वलगहनावुप दधामि वैष्णवी रख्षोहणौ

वलगहनौ पर्यूहामि वैष्णवी रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी रक्षोहणौ वलगहनौ वैष्णवी बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचँव्वद ॥ ४ ॥ हन्तेन्द्राय द्वे च ॥ २ ॥

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनश्श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बंभारिरवस्युरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयस्सम्राडसि कृशानुः परिषद्योऽसि पवमानः प्रतक्वाऽसि नभस्वानसंमृष्टोऽसि हव्यसूद ऋतधामाऽसि सुवर्ज्योतिर्ब्रह्मज्योतिरसि सुवर्धामाऽजोऽस्येकपादहिरसि बुद्ध्नियो रौद्रेणाऽनीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥ ५ ॥ अनीकेनाऽष्टौ च ॥ ३ ॥

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्ताऽसि वरूथꣳ स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहाऽयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयँव्वाजञ्जयतु वाजसातौ । उरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर । सोमो जिगाति गातुवि- ॥ ६ ॥ द्देवानामेति निष्कृतमृतस्य योनिमासदमदित्यास्सदोऽस्यदित्यास्सद आ सीदैष वो देव सवितस्सोमस्तꣳ रक्षध्वं मा वो दभदेतत्त्वꣳ सोम देवो देवानुपाऽगा इदमहम्मनुष्यो मनुष्यान्थ्सह प्रजया सह रायस्पोषेण नमो देवेभ्यस्स्वधा पितृभ्य इदमहन्निर्वरुणस्य पाशाथ्सुवरभि ॥ ७ ॥ वि ख्येषव्वैश्वानरञ्ज्योतिरग्ने व्रतपते त्वव्व्रतानाव्व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथन्नौ व्रतपते व्रतिनोर्व्रतानि ॥ ८ ॥ गातुविदभ्येकत्रिꣳशच्च ॥ ४ ॥

अत्यन्यानगान्नान्यानुपाऽगामर्वाक्त्वा परैरविदं परोऽवरैस्तन्त्वा जुषे वैष्णवन्देवयज्यायै देवस्त्वा सविता मध्वाऽनक्त्वोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीर्दिवमग्रेण मा लेखीरन्तरिक्षं मद्ध्येन मा हिꣳसीः पृथिव्या सं भव वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयꣳ रुहेम यन्त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायाऽच्छिन्नो रायस्सुवीरः ॥ ९ ॥ यन्दश च ॥ ५ ॥

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा शुन्धतांल्लोकः पितृषदनो यवोऽसि यवयाऽस्मद्द्वेषो यवयाऽरातीः पितृणाꣳ सदनमसि स्वावेशोऽस्यग्रेगा नेतृणाँव्वनस्पतिरधि त्वा स्थास्यति तस्य वित्ताद्देवस्त्वा सविता मध्वाऽनक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीमुपरेण दृꣳह ते ते धामान्युश्मसी ॥ १० ॥ गमद्ध्ये गावो यत्र भूरिशृङ्गा अयासः । अत्राऽह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यस्सखा । तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । ब्रह्मवनिन्त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रन्दृꣳह प्रजान्दृꣳह राय-

स्पोषन्द्दृंह परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या अन्तरिक्षस्य त्वा सानावव गूहामि ॥ ११ ॥ उरुमसी पोषमेकाच्च विꣳशतिश्च ॥ ६ ॥

इषे त्वोपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तान्देव त्वष्टर्वसु रण्व रेवती रमध्वमग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा घृतेनाऽक्ते वृषणन्दधाथाङ्गायत्रञ्छन्दोऽनु प्र जायस्व त्रैष्टुभञ्जागतञ्छन्दोऽनु प्र जायस्व भवत-॥ १२ ॥ न्नस्समनसौ समोकसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः । अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् ॥ १३ ॥ भवतमेकत्रिꣳशच्च ॥ ७ ॥

आ ददं ऋतस्य त्वा देवहविः पाशेनाऽऽ रभे धर्षा मानुषानद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यपां पेरुरसि स्वात्तञ्चित्सदेवꣳ हव्यमापो देवीस्स्वदतैनꣳ सन्ते प्राणो वायुना गच्छताꣳ सँय्यजत्रैरङ्गानि सँय्यज्ञपतिराशिषा घृतेनाऽक्तौ पशुन्त्रायेथाꣳ रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतोरो अन्तरिक्ष सजूर्देवेन ॥ १४ ॥ वातेनाऽस्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिन्धाः पृथिव्यास्संपृचः पाहि नमस्त आतानाऽनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणाऽऽपो देवीश्शुद्धायुवश्शुद्धा यूयन्देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म ॥ १५ ॥ देवेन चतुश्चत्वारिꣳशच्च ॥ ८ ॥

वाक्त आ प्यायतां प्राणस्त आ प्यायताञ्चक्षुस्त आ प्यायताꣳ श्रोत्रन्त आ प्यायताँय्या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रँय्यत्ते क्रूरँय्यदास्थितन्तत्त आ प्यायतान्तत्त एतेन शुन्धतान्नाभिस्त आ प्यायतां पायुस्त आ प्यायताꣳ शुद्धाश्चरित्राश्शमद्भ्य- ॥ १६ ॥ श्शमोषधीभ्यश्शं पृथिव्यै शमहोभ्यामोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसी रक्षसां भागोऽसीदमहꣳ रक्षोऽधमन्तमो नयामि योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म इदमेनमधमन्तमो नयामीषे त्वा घृतेन द्यावापृथिवी प्रोर्ण्वाथामच्छिन्नो रायस्सुवीर उर्वन्तरिक्षमन्विहि वायो वीहि स्तोकानाꣳ स्वाहोर्ध्वनभसं मारुतङ्गच्छतम् ॥ १७ ॥ अद्भ्यो वीहि पञ्च च ॥ ९ ॥

सन्ते मनसा मनस्सं प्राणेन प्राणो जुष्टन्देवेभ्यो हव्यङ्घृतवथ्स्वाहैन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यथ्सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु श्रीरस्यग्निस्त्वा श्रीणात्वापस्समरिणन्वातस्य ॥ १८ ॥ त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै घृतङ्घृतपावानः पिबत वसाँव्वसापावानः पिबताऽन्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय दिशः प्रदिश आदिशो विदिश उद्दिशस्स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥ १९ ॥ वातस्याऽष्टाविꣳशतिश्च ॥ १० ॥

समुद्रङ्गच्छ स्वाहाऽन्तरिक्षङ्गच्छ स्वाहा देवꣳ सवितारङ्गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमङ्गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यङ्गच्छ स्वाहाऽग्निं वैश्वानरङ्गच्छ स्वाहाऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रन्नप्तारमशीय शुगसि तमभि शोच योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ २० ॥ असि षड्विꣳशतिश्च ॥ ११ ॥

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्यः । अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीस्सुम्ने मा धत्तेन्द्राग्नियोर्भागधेयीस्स्थ मित्रावरुणयोर्भागधेयीस्स्थ विश्वेषान्देवानां भागधेयीस्स्थ यज्ञे जागृत ॥ २१ ॥ हविष्मतीश्चतुस्त्रिꣳशत् ॥ १२ ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरङ्कृधि दिवि देवेषु होत्रा यच्छ सोम राजन्नेह्यव रोह मा भेर्मा सवँविक्था मा त्वा हिꣳसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपाव-रोहन्तु शृणोत्वग्निस्समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । शृणोत ग्रावाणो विदुषो नु ॥ २२ ॥ यज्ञꣳ शृणोतु देवस्सविता हवं मे । देवीरापो अपान्नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदि-न्तमस्तन्देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागस्स्थ स्वाहा कार्षिरस्यपाऽपां मृध्रꣳ समुद्रस्य वोऽक्षित्या उन्नये । यमग्ने पृत्सु मर्त्यमावो वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः ॥ २३ ॥ नु सप्तचत्वारिꣳशच्च ॥ १३ ॥

त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्धो मारुतं पृक्ष ईशिषे । त्वँवातैररुणैर्यासि शङ्गय-स्त्वं पूषा विधतः पासि नु त्मना । आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् । अग्निर्होता नि षसादा यजीयानुपस्थे मातुस्सुरभावु लोके । युवा कविः पुरुनिष्ठ ॥ २४ ॥ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः । साध्वीमकर्देववीतिन्नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् । स आयुराऽगात्सुरभिर्वसानो भद्रा-मकर्देवहूतिन्नो अद्य । अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः । त्वे वसूनि पुर्वणीक ॥ २५ ॥ होतर्दोषा वस्तोरेरिरे यज्ञियासः । क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके । तुभ्यन्ता अङ्गिरस्तम विश्वास्सुक्षितयः पृथक् । अग्ने कामाय येमिरे । अश्याम तङ्काममग्ने तवोत्यश्याम रयिꣳ रयि-वस्सुवीरम् । अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराऽजरन्ते । श्रेष्ठँय्यविष्ठ भारताऽग्ने द्युम-न्तमा भर । ॥ २६ ॥ वसो पुरुस्पृहꣳ रयिम् । स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्य-विष्ठः । यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् । आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।

पुनस्ते प्राण आऽयति परा यक्ष्मꣳ सुवामि ते । आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि ॥ २७ ॥ रक्षतादिमम् । तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम् । दिवस्परि प्रथमञ्जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनञ्जरते स्वाधीः । शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वङ्घृतेभिराहुतः । दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुश्श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिः ॥ २८ ॥ यदेनन्द्यौरजनयथ्सुरेताः । आ यदिषे नृपतिन्तेज आनट्छुचि रेतो निषिक्तन्द्यौरभीके । अग्निश्शर्द्धमनवद्यय्युँवानꣳ स्वाधियञ्जनयथ्सूदयच्च । स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः । अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः । अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् । विश्वा य- ॥ २९ ॥ श्चर्षणीरभ्यासा वाजेषु सासहत् । तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर । त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः । उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाऽग्नये । वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाऽज्माऽन्नम् । स त्वन्न ऊर्जसन ऊर्जन्धा राजेव जेरवृके क्षेष्यन्तः । अग्न आयूꣳषि ॥ ३० ॥ पवस आ सुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधत्पोषꣳ रयिं मयि । अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः । अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिः कविः । शुची रोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः ॥ ३१ ॥ पुरुनिष्ठः पुर्वणीक भराऽभि वयोभिर्य आयूꣳषि विप्रश्शुचिश्चतुर्दश च ॥ १४ ॥

देवस्य रक्षोहणो विभूस्त्वꣳ सोमाऽत्यन्यानगां पृथिव्या इषे त्वाऽऽददे वाक्त सन्ते समुद्रꣳ हविष्मतीरुहदे त्वमग्ने रुद्रश्चतुर्दश ॥ १४ ॥ देवस्य गमद्धचे हविष्मतीः पवस एकत्रिꣳशत् ॥ ३१ ॥ देवस्याऽर्चयः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय -तैत्तिरीय-संहितायां प्रथमकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ प्रथमकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्री॒गु॒रु॒भ्यो॒ न॒मः॒ हरिः॒ ओ(४)म्॒ ॥

आ द॑दे॒ ग्रावा᳚ऽस्यद्ध्वर॒कृद्दे॒वेभ्यो॑ गंभी॒रमि॒मम॑द्ध्व॒रङ्कृ॑द्ध्युत्त॒मेन॑ प॒विनेन्द्रा॑य॒ सोम॒ꣳ॒ सुषु॑तं॒ मधु॑मन्तं॒ पय॑स्वन्तँ॒व्वृँष्टि॒वनि॒मिन्द्रा॑य त्वा वृत्र॒घ्न इन्द्रा॑य त्वा वृत्र॒तुर॒ इन्द्रा॑य त्वाऽभिमाति॒घ्न इन्द्रा॑य त्वाऽऽदि॒त्यव॑त॒ इन्द्रा॑य त्वा वि॒श्वदे᳚व्यावते श्वा॒त्रास्स्थ॑ वृत्र॒तुरो॒ राधो॑गूर्ता अ॒मृत॑स्य॒ पत्नी॒स्ता दे॑वीर्देव॒त्रेमँ॒य्य॒ज्ञन्ध॑त्तोप॑हूता॒स्सोम॑स्य पिब॒तोप॑हूतो यु॒ष्माक॒ꣳ॒ ॥ १ ॥ सोम॑ः पिबतु॒ यत्ते॑ सोम दि॒वि ज्योति॒र्यत्पृ॑थि॒व्याँ॒य्यदु॒रावु॒न्तरि॑क्षे॒ तेना॒ऽस्मै यज॑मानायो॒रु रा॒या कृ॒द्ध्यधि॑ दा॒त्रे वो॑चो॒ धिष॑णे वी॒डू स॒ती वी॑डयेथा॒मूर्ज॑न्दधाथा॒मूर्ज॑ मे धत्तं॒ मा वा॒ꣳ॒ हि॒ꣳ॒सिषं॒ मा मा॑ हिꣳसिष्टं॒ प्रागपा॒गुद॑गध॒राक्तास्त्वा॒ दिश॒ आ धा॑व॒न्त्वम्ब॒ नि ष्व॑र । यत्ते॑ सो॒मा॒ऽदा᳚भ्यन्ना॒म॒ जागृ॑वि॒ तस्मै॑ ते सोम॒ सोमा॑य॒ स्वाहा᳚ ॥ २ ॥
यु॒ष्माक॒ꣳ॒ स्वर॒ यत्ते॒ नव॑ च ॥ १ ॥

वा॒चस्पत॑ये पवस्व वाजि॒न्वृषा॒ वृष्णो॑ अ॒ꣳ॒शुभ्या॒ङ्गभ॑स्तिपूतो दे॒वो दे॒वाना᳚ं प॒वित्र॑मसि॒ येषा᳚ं भा॒गोऽसि॒ तेभ्य॑स्त्वा॒ स्वाङ्कृ॑तोऽसि॒ मधु॑मतीर्न॒ इष॑स्कृधि॒ विश्वे᳚भ्यस्त्वेन्द्रि॒येभ्यो॑ दि॒व्येभ्य॒ः पार्थि॑वे॒भ्यो॒ मन॑स्त्वाऽष्टू॒र्व॑न्तरि॑क्ष॒मन्वि॑हि॒ स्वाहा᳚ त्वा सुभ॒वस्सूर्या॑य दे॒वेभ्य॑स्त्वा मरीचि॒पेभ्य॑ ए॒ष ते॒ योनि॑ः प्रा॒णाय॑ त्वा ॥ ३ ॥ वा॒चस्स॒प्तच॑त्वारिꣳशत् ॥ २ ॥

उ॒प॒या॒मगृ॑हीतोऽस्य॒न्तर्य॑च्छ मघवन्पा॒हि सोम॑मुरु॒ष्य रा॒यस्स॒मिषो॑ यजस्वा॒ऽन्तस्ते॑ दधामि॒ द्यावा॑पृथि॒वी अ॒न्तरु॒र्व॑न्तरि॑क्ष॒ꣳ॒ स॒जोषा॑ दे॒वैरव॑रै॒ः परै᳚श्चा॒ऽन्तर्या॒मे म॑घवन्मादयस्व॒ स्वाङ्कृ॑तोऽसि॒ मधु॑मतीर्न॒ इष॑स्कृधि॒ विश्वे᳚भ्यस्त्वेन्द्रि॒येभ्यो॑ दि॒व्येभ्य॒ः पार्थि॑वेभ्यो॒ मन॑स्त्वाऽष्टू॒र्व॑न्तरि॑क्ष॒मन्वि॑हि॒ स्वाहा᳚ त्वा सुभ॒वस्सूर्या॑य दे॒वेभ्य॑स्त्वा मरीचि॒पेभ्य॑ ए॒ष ते॒ योनि॑रपा॒नाय॑ त्वा ॥ ४ ॥ दे॒वेभ्य॑स्स॒प्त च॑ ॥ ३ ॥

आ वा॑यो भूष शुचिपा॒ उप॑ न॒स्स॒हस्र॑न्ते नि॒युतो॑ विश्ववार । उपो॑ ते॒ अन्धो॒ मद्य॑मयामि॒ यस्य॑ देव दधि॒षे पू᳚र्व॒पेय᳚म् । उ॒प॒या॒मगृ॑हीतोऽसि वा॒यवे॒ त्वेन्द्र॑वायू इ॒मे सु॒ताः । उप॒ प्रयो॑भि॒रा ग॑त॒मिन्द॑वो वामु॒शन्ति॒ हि । उ॒प॒या॒मगृ॑हीतोऽसीन्द्रवा॒युभ्या᳚न्त्वै॒ष ते॒ योनि॑स्स॒जोषा᳚भ्यान्त्वा ॥ ५ ॥ आ वा॑यो॒ त्रिच॑त्वारिꣳशत् ॥ ४ ॥

अ॒यँव्वा᳚ं मि॒त्रावरुणा सु॒तस्सोम॑ ऋतावृधा । ममेदि॒ह श्रु॑त॒ꣳ॒ हव᳚म् । उ॒प॒या॒मगृ॑हीतोऽसि मि॒त्रावरु॑णाभ्यान्त्वै॒ष ते॒ योनि॑र्‌ऋता॒युभ्या᳚न्त्वा ॥ ६ ॥ अ॒यँव्वा᳚व्विꣳ॒शतिः ॥ ५ ॥

या वाङ्कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्वि-भ्यान्त्वैष ते योनिर्माद्ध्वीभ्यान्त्वा ॥ ७ ॥ या वामष्टादश ॥ ६ ॥

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये । उपयामगृहीतोऽस्य-श्विभ्यान्त्वैष ते योनिरश्विभ्यान्त्वा ॥ ८ ॥ प्रातर्युजावेकान्न विꣳशतिः ॥ ७ ॥

अयँव्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ ९ ॥ अयँव्वेनः पञ्चविꣳशतिः ॥ ८ ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रतीचीनँव्वृजनन्दोहसे गिराऽऽशुञ्जयन्तमनु यासु वर्द्धसे । उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ १० ॥ तं प्रत्नथा षड्विꣳशतिः ॥ ९ ॥

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाऽप्सुषदो महिनैकादश स्थ ते देवा यज्ञ-मिमञ्जुषद्ध्वमुपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञञ्जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशन्त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ११ ॥ ये देवास्त्रिचत्वा-रिꣳशत् ॥ १० ॥

त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीञ्च सचन्ते । एकादशासो अप्सुषद-स्सुतꣳ सोमञ्जुषन्ताꣳ सवनाय विश्वे । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञञ्जि-न्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशन्त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवे-भ्यः ॥ १२ ॥ त्रिꣳशत्त्रयो द्विचत्वारिꣳशत् ॥ ११ ॥

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ॥ १३ ॥ उपयामगृहीतोऽसीन्द्राय द्वाविꣳशतिः ॥ १२ ॥

मूर्द्धानन्दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राजमतिथिञ्जना-नामासन्ना पात्रञ्जनयन्त देवाः । उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रु-वाणान्ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय ॥ १४ ॥ मूर्द्धानं पञ्च-त्रिꣳशत् ॥ १३ ॥

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चो-पयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा ॥ १५ ॥ मधुश्च त्रिꣳशत् ॥ १४ ॥

इन्द्राग्नी आ गतꣳ सुतङ्गीर्भिर्नभो वरेण्यम् । अस्य पातन्धियेषिता । उपयामगृहीतोऽसीद्राग्निभ्याँन्त्वैष ते योनिरिन्द्राग्निभ्याँन्त्वा ॥ १६ ॥ ॥ १५ ॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वाꣳसो दाशुषस्सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १७ ॥ इन्द्राग्नी ओमासो विꣳशतिर्विꣳशतिः ॥ १६ ॥

मरुत्वन्तं वृषभँव्वावृधानमकवारिन्दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १८ ॥ मरुत्वन्तꣳ षड्विꣳशतिः ॥ १७ ॥

इन्द्र मरुत्व इह पाहि सोमँय्यथा शार्याते अपिबस्सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयस्सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १९ ॥ ॥ १८ ॥

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आ सिञ्चस्व जठरे मद्ध्व ऊर्मिन्त्वꣳ राजाऽसि प्रदिवस्सुतानाम् । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २० ॥ इन्द्र मरुत्वो मरुत्वानेकान्न त्रिꣳशदेकान्न त्रिꣳशत् ॥ १९ ॥

महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव । स्तोमैर्वथ्सस्य वावृधे । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ २१ ॥ महानेकान्न विꣳशतिः ॥ २० ॥

महाꣳ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनस्सहोभिः । अस्मद्रियग्वावृधे वीर्यायोरुः पृथुस्सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ २२ ॥ महान्नृवथ्षड्विꣳशतिः ॥ २१ ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानन्देवस्य पृच्यते । उपयामगृहीतोऽस्यादित्येभ्यस्त्वा । कदा चन प्र युच्छस्युभे नि पासि जन्मनी । तुरीयाऽऽदित्य सवनन्त इन्द्रियमा तस्थावमृतन्दिवि । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत् । विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयन्तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ २३ ॥ वस्सप्तविꣳशतिश्च ॥ २२ ॥

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेर्या धिया वामभाजस्स्याम । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ २४ ॥ वामश्चतुर्विꣳशतिः ॥ २३ ॥

अदब्धेभिस्सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् । हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ २५ ॥ अदब्धेभिस्त्रयोविꣳशतिः ॥ २४ ॥

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ २६ ॥ हिरण्यपाणिश्चतुर्दश ॥ २५ ॥

सुशर्माऽसि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २७ ॥ सुशर्मा द्वादश ॥ २६ ॥

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तङ्ग्रहङ्गृह्णाम्यग्ना(३)इ पत्नीवा(३)स्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥ २८ ॥ बृहस्पतिसुतस्य पञ्चदश ॥ २७ ॥

हरिरसि हारियोजनो हर्योस्स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तङ्ग्रहङ्गृह्णामि हरीस्स्थ हर्योर्धानास्सहसोमा इन्द्राय स्वाहा ॥ २९ ॥ हरिरसि षड्विꣳशतिः ॥ २८ ॥

अग्न आयूꣳषि पवस आ सुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् । उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ॥ ३० ॥ अग्न आयूꣳषि त्रयोविꣳशतिः ॥ २९ ॥

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ३१ ॥ उत्तिष्ठन्नेकविꣳशतिः ॥ ३० ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिस्सूर्याय त्वा भ्राजस्वते ॥ ३२ ॥ तरणिर्विꣳशतिः ॥ ३१ ॥

आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नस्सप्रथस्तमः ॥ ३३ ॥ आ प्यायस्व नव ॥ ३२ ॥

ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ३४ ॥ ईयुरेकान्न विꣳशतिः ॥ ३३ ॥

ज्योतिष्मतीन्त्वा सादयामि ज्योतिष्कृतन्त्वा सादयामि ज्योतिर्विदन्त्वा सादयामि भास्वतीन्त्वा सादयामि ज्वलन्तीन्त्वा सादयामि मल्मलाभवन्तीन्त्वा सादयामि दीप्यमानान्त्वा सादयामि रोचमानान्त्वा सादयाम्यजस्रान्त्वा सादयामि बृहज्ज्योतिषन्त्वा सादयामि बोधयन्तीन्त्वा सादयामि जाग्रतीन्त्वा सादयामि ॥ ३५ ॥ ज्योतिष्मतीꣳ षट्त्रिꣳशत् ॥ ३४ ॥

प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा सँय्यासाय स्वाहोँद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ॥ ३६ ॥ प्रयासाय चतुर्विꣳशतिः ॥ ३५ ॥

चित्तꣳ सन्तानेन भवँय्यक्ना रुद्रन्तनिम्ना पशुपतिꣳ स्थूलहृदयेनाऽग्निꣳ हृदयेन रुद्रँल्लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ॥ ३७ ॥ चित्तमष्टादश ॥३६॥

आ तिष्ठ वृत्रहन्रथँय्युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३८ ॥ आ तिष्ठ षड्विꣳशतिः ॥ ३७ ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणाञ्च स्तुतीरुप यज्ञञ्च मानुषाणाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३९ ॥ इन्द्रमित्त्रयोविꣳशतिः ॥ ३८ ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि । आ त्वा पृणक्त्विन्द्रियꣳ रजस्सूर्यन्न रश्मिभिः । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४० ॥ असावि सप्तविꣳशतिः ॥ ३९ ॥

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित । स्योनाऽस्मै सुषदा भव यच्छाऽस्मै शर्म सप्रथाः । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४१ ॥ ॥ ४० ॥

महाꣳ इन्द्रो वज्रबाहुष्षोडशी शर्म यच्छतु । स्वस्ति नो मघवा करोतु हन्तु पाप्मानँय्योऽस्मान्द्वेष्टि । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४२ ॥ सर्वस्य महान्थ्षड्विꣳशतिष्षड्विꣳशतिः ॥ ४१ ॥

सजोषा इन्द्र सगणो मरुद्भिस्सोमं पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूꣳरप मृधो नुदस्वाऽथाऽभयङ्कृणुहि विश्वतो नः । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४३ ॥ सजोषास्त्रिꣳशत् ॥ ४२ ॥

उदु त्यञ्जातवेदसन्देवँव्वहन्ति केतवः । दृशे विश्वाय सूर्यम् । चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च । अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिँव्विधेम । दिवङ्गच्छ सुवः पत रूपेण ॥ ४४ ॥ वो रूपमभ्यैमि वयसा वयः । तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके । एतत्ते अग्ने राध ऐति सोमच्युतन्तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीर्ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं

पैतृमत्यꣳ सुधातुंदक्षिणव्ँवि सुवः पश्य व्यन्तरिक्षय्ँयतस्व सदस्यैरस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशताऽनवहायाऽस्मान्देवयानेन पथेत सुकृताँल्लोके सीदत तन्नस्सꣳस्कृतम् ॥ ४५ ॥ रूपेण सदस्यैरष्टादश च ॥ ४३ ॥

धाता रातिस्सवितेदञ्जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणन्दधातु । समिन्द्र णो मनसा नेषि गोभिस्सꣳ सूरिभिर्मघवन्थ्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतय्ँयदस्ति सन्देवानाꣳ सुमत्या यज्ञियानाम् । सव्ँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा नो अत्र वरिवः कृणो- ॥ ४६ ॥ त्वनु मार्ष्टु तनुवो यद्विलिष्टम् । यद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगयाडृधगुताऽशमिष्ठाः प्रजानन् यज्ञमुप याहि विद्वान् । स्वगा वो देवास्सदनमकर्म य आजग्म सवनेदञ्जुषाणाः । जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि । यानाऽवह उशतो देव देवान्तान् ॥ ४७ ॥ प्रेरय स्वे अग्ने सधस्थे । वहमाना भरमाणा हवीꣳषि वसुङ्घर्मन्दिवमा तिष्ठताऽनु । यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वाय्ँयोनिङ्गच्छ स्वाहैष ते यज्ञो यज्ञपते सहसूक्तवाकस्सुवीरस्स्वाहा देवा गातुविदो गातुव्ँवित्त्वा गातुमित मनसस्पत इमन्नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥ ४८ ॥ कृणोतु तानष्टाचत्वारिꣳशच्च ॥ ४४ ॥

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुताऽपवक्ता हृदयाविधश्चित् । शतन्ते राजन्भिषजस्सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निरृतिं पराचैः कृतञ्चिदेनः प्र मुमुग्ध्यस्मत् । अभिष्ठितो वरुणस्य पाशोऽग्नेरनीकमप आ विवेश । अपान्नपात्प्रतिरक्षन्नसुर्यन्दमेदमे ॥ ४९ ॥ समिधय्ँयक्ष्यग्ने । प्रति ते जिह्वा घृतमुच्चरण्येथ्समुद्रे ते हृदयमप्स्वन्तः । सन्त्वा विशन्त्वोषधीरुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेमाऽवभृथ निचङ्कुण निचेरुरसि निचङ्कुणाऽव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि सुमित्रा न आप ओषधय- ॥ ५० ॥ स्सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो देवीराप एष वो गर्भस्तव्ँवस्सुप्रीतꣳ सुभृतमकर्म देवेषु नस्सुकृतो ब्रूतात्प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आऽगमन्तं मा सꣳ सृज वर्चसा ॥ ५१ ॥ दमेदम ओषधय आ षट्च ॥ ४५ ॥

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् । यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवस्स्योनम् । अश्विनꣳ स पुत्रिणव्ँवीरवन्तङ्गोमन्तꣳ रयिन्नशते स्वस्ति । त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः । न त्वामिन्द्राऽति रिच्यते । उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानꣳ ॥ ५२ ॥ सुतासः । यदीꣳ

सबाधः पितरन्न पुत्रास्समानदख्षा अवसे हवन्ते । अग्ने रसेन तेजसा जातवेदो वि रोचसे । रख्षोहाऽमीवचातनः । अपो अन्वचारिषꣳ रसेन समसृख्महि । पयस्वाꣳ अग्न आऽगमन्तं मा सꣳ सृज वर्चसा । वसुर्वसुपतिर्हिकमस्यग्ने विभावसुः । स्याम ते सुमतावपि । त्वामग्ने वसुपतिंव्व-सूनामभि प्र मन्दे ॥ ५३ ॥ अद्ध्वरेषु राजन् । त्वया वाजव्वाजयन्तो जयेमाऽभि ष्याम पृत्सुतीर्म-र्त्यानाम् । त्वामग्ने वाजसातममँव्विप्रा वर्द्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् । अयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयव्वाजञ्जयतु वाजसातौ । अग्निनाऽग्निस्समिद्ध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्थ्सता । सखा सख्या समिद्ध्यसे । उदग्ने शुचयस्तव वि ज्योतिषा ॥ ५४ ॥ मघवानं मन्दे ह्यग्ने चतुर्दश च ॥ ४६ ॥

वाचः प्राणाय त्वा । उपयामगृहीतोऽस्यपानाय त्वा ।आ वायो वायवे सजोषाभ्यान्त्वा ।अयमृतायुभ्यान्त्वा । या वामश्विभ्यां माद्ध्वीभ्यान्त्वा । प्रातर्युजावश्विभ्यामश्विभ्यान्त्वा । अयꣳ शण्डाय वीरता पाहि । तं मर्काय प्रजाः पाहि । ये देवास्त्रिꣳशदाग्रयणोऽसि विश्वेभ्यस्त्वा देवेभ्यः । उपयामगृहीतोऽसीन्द्राय त्वोक्थायुवे । मूर्द्धानमग्रये त्वा वैश्वानराय । मधुश्च सꣳसर्पोऽसि । इन्द्राग्नी इन्द्राग्निभ्यान्त्वा । ओमासो विश्वेभ्यस्त्वा देवेभ्यः । मरुत्वन्तन्त्री-णीन्द्राय त्वा मरुत्वते । महान्द्धे महेन्द्राय त्वा । कदा चनाऽऽदित्येभ्यस्त्वा । कदा चन स्तरीर्विवस्व आदित्य । इन्द्रꣳ शुचिरपः । वामन्त्रीणि देवाय त्वा सवित्रे । सुशर्माऽसि विश्वेभ्यस्त्वा देवेभ्यः । बृहस्पतिसुतस्य त्वष्ट्रा सोमं पिब स्वाहा । हरिरसि सहसोमा इन्द्राय स्वाहा । अग्न आयूꣳष्यग्रये त्वा तेजस्वते । उत्तिष्ठन्निन्द्राय त्वौजस्वते । तरणि-स्सूर्याय त्वा भ्राजस्वते । आतिष्ठाद्याषडिन्द्राय त्वा षोडशिने । उदु त्यञ्चित्रम् । अग्ने नय दिवङ्गच्छ । उरुमायुष्टे यद्देवा मुमुग्धि । अग्नाविष्णू सुक्रतू मुमुक्तम् । परा वै पङ्क्त्यः । देवा वै ये देवाः पङ्क्त्यौ । परा वै स वाचम् । भूमिर्व्यतृष्यन् । प्रजापतिर्व्यख्युद्ध्यन् । भूमिरादित्या वै । अग्निहोत्रमादित्यो वै । भूमिर्लेकस्सलेकस्सुलेकः । विष्णोरुदुत्तमम् । अन्न-पते पुनस्त्वाऽऽदित्याः । उरुꣳ सꣳ सृज वर्चसा । यस्त्वा सुष्टुतम् । त्वमग्ने युख्वा हि सुष्टुतिम् । त्वमग्ने विचर्षणे । यस्त्वा वि रोचसे ॥

आ ददे वाचस्पतय उपयामगृहीतोऽस्या वायो अयव्वाय्या वा प्रातर्युजावयन्तय्ये देवास्त्रिꣳशदुपयामगृहीतो-ऽसि मूर्द्धानं मधुश्चेन्द्राग्नी ओमासो मरुत्वन्तमिन्द्र मरुत्वो मरुत्वान्महान्महान्नृवत्कदा वाममदब्धेभिर्हिरण्यपाणिꣳ सुशर्मा बृहस्पतिसुतस्य हरिरस्यग्न उत्तिष्ठन्तरणिरा प्यायस्वेयुष्टे ये ज्योतिष्मती प्रयासाय चित्तमा तिष्ठेन्द्रमसावि सर्वस्य महान्थ्सजोषा उदु त्यन्धातोरुꣳ हि यस्त्वा षट्चत्वारिꣳशत् ॥ ४६ ॥ आ ददे ये देवा महानुत्तिष्ठन्थ्सर्वस्य सन्तु दुर्मित्राश्चतुष्पञ्चाशत् ॥ ५४ ॥ आ ददे वि ज्योतिषा ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ प्रथमकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

देवासुरास्सय्यँत्ता आसन्ते देवा विजयमुपयन्तोऽग्नौ वामँव्वसु सन्न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेनाऽपाऽक्रामत्तद्देवा विजित्याऽवरुरुत्समाना अन्वायन्तदस्य सहसाऽऽदित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वय्यँदश्र्वशीयत त- ॥ १ ॥ द्रजत९ हिरण्यमभवत्तस्माद्रजत९ हिरण्यमदक्षिण्यमश्रुज९ हि यो बर्हिषि ददाति पुराऽस्य सँव्वथ्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देय९ सोऽग्निरब्रवीद्भाग्यसान्यर्थ व इदमिति पुनराधेयन्ते केवलमित्यब्रुवन्नृद्धवत्खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति तं पूषाऽऽधत्त तेन ॥ २ ॥ पूषाऽऽर्ध्नोत्तस्मात्पौष्णाः पशव उच्यन्ते तन्त्वष्टाऽऽधत्त तेन त्वष्टाऽऽर्ध्नोत्तस्मात्त्वाष्ट्राः पशव उच्यन्ते तं मनुराऽधत्त तेन मनुरार्ध्नोत्तस्मान्मानव्यः प्रजा उच्यन्ते तन्धाताऽऽधत्त तेन धाताऽऽर्ध्नोथ्सँव्वथ्सरो वै धाता तस्माथ्सँव्वथ्सरं प्रजाः पशवोऽनु प्र जायन्ते य एवं पुनराधेयस्यर्द्धिंव्वेद- ॥ ३ ॥ र्ध्नोत्येव योऽस्यैवं बन्धुताव्वेद बन्धुमान्भवति भागधेयव्वा अग्निराहित इच्छमानः प्रजां पशून् यजमानस्योप दोद्रावोद्वास्य पुनरा दधीत भागधेयेनैवैन९ समर्द्धयत्यथो शान्तिरेवाऽस्यैषा पुनर्वस्वोरा दधीतैतद्वै पुनराधेयस्य नक्षत्रय्यँत्पुनर्वसू स्वायामेवैनन्देवतायामाधाय ब्रह्मवर्चसी भवति दर्भैरा दधात्ययातयामत्वाय दर्भैरा दधात्यद्भ्य एवैनमोषधीभ्योऽवरुद्ध्याऽऽधत्ते पञ्चकपालः पुरोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुद्ध्याऽऽधत्ते ॥ ४ ॥ अशीयत तत्तेन वेद दर्भैः पञ्चविश्शतिश्च ॥ १ ॥

परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे वीरहा वा एष देवानाय्योँऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरन्निरवदायाऽग्निं पुनरा ॥ ५ ॥ धत्ते शताक्षरा भवन्ति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयन्निकामयमानो यदाग्नेय९ सर्वं भवति सैवाऽस्यर्द्धिस्सँव्वा एतस्य गृहे वाक्सृज्यते योऽग्निमुद्वासयते स वाच९ सः सृष्टाय्यँजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्याऽपराभावाय ॥ ६ ॥ विभक्तिङ्करोति ब्रह्मैव तदकरुपाःशु यजति यथा वामँव्वसु विविदानो गूहति तादृगेव तदग्निं प्रति स्विष्टकृतन्निराह यथा

वामँव्वसु विविदानः प्रकाशञ्जिगमिषति तादृगेव तद्विभक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती ॥ ७ ॥ जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति कृतयजुस्संभृतसंभार इत्याहुर्न संभृत्याँस्संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यँय्यजुर्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा पुनरुथ्स्यूतँव्वासः पुनरुथ्सृष्टोऽनड्वान्पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधस्सप्त जिह्वा इत्यग्निहोत्रञ्जुहोति यत्रयत्रैवाऽस्य न्यक्तन्तत ॥ ८ ॥ एवैनमव रुन्धे वीरहा वा एष देवानाँय्योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यञ्चैव हन्ति यश्चाऽस्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः ॥ ९ ॥ आऽपराभावाय पुरोडाशमेते आहुती ततष्षट्त्रिꣳशच्च ॥ २ ॥

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे । आऽयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरञ्च प्रयन्थ्सुवः । त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः । अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषस्सुवः । यत्त्वा ॥ १० ॥ क्रुद्धः परोवप मन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि । यत्ते मन्युपरोप्तस्य पृथिवीमनु दद्ध्वसे । आदित्या विश्वे तद्देवा वसवश्च समाभरन् । मनो ज्योतिर्जुषतामाज्यँव्विच्छिन्नँय्यज्ञꣳ समिमन्दधातु । बृहस्पतिस्तनुतामिमन्नो विश्वे देवा इह मादयन्ताम् । सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्त- ॥ ११ ॥ ऋषयस्सप्त धाम प्रियाणि । सप्त होत्रास्सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन । पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वर्तस्वाऽग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि । लेकस्सलेकस्सुलेकस्ते न आदित्या आज्यञ्जुषाणा वियन्तु केतस्सकेतस्सुकेतस्ते न आदित्या आज्यञ्जुषाणा वियन्तु विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यञ्जुषाणा वियन्तु ॥ १२ ॥ त्वा जिह्वास्सप्त सुकेतस्ते नव्रयोदश च ॥ ३ ॥

भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते सर्पा वै जीर्यन्तोऽमन्यन्त स एतङ्कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैनमजरङ्कृत्वाऽऽधत्तेऽथो पूतमेव पृथिवीमन्नाद्यन्नोपानमथ्सैतं ॥ १३ ॥ मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपाऽनमद्यथ्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्याऽवरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते यत्त्वा क्रुद्धः परोवपेत्याहाऽप ह्नुत एवाऽस्मै तत्पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनँय्यत्ते मन्युपरोप्तस्येत्याह देवताभिरेवै- ॥ १४ ॥ नꣳ सं भरति वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति विच्छिन्नँय्यज्ञꣳ समिमन्दधात्वित्याह सन्तत्यै विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञन्देवेभ्योऽनु दिशति सप्त ते अग्ने समिधस्सप्त जिह्वा ॥ १५ ॥ इत्याह सप्तसप्त वै सप्तधाऽग्नेः

प्रियास्तनुवस्ता एवाऽव रुन्धे पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परि गृह्णात्यादित्या वा अस्माल्लोकादमुँल्लोकमायन्तेऽमुष्मिँल्लोके व्यतृष्यन्त इमल्लोकं पुनरभ्यवेत्याऽग्निमाधायैतान् होमानजुहवुस्त आर्द्ध्नुवन्ते सुवर्गल्लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमाञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्द्ध्नुवन्तामेवर्द्ध्नोति ॥ १६ ॥
सैतन्देवताभिरेव जिह्वा एतान्पञ्चविꣳशतिश्च ॥ ४ ॥

उपप्रयन्तो अद्ध्वरं मन्त्रँव्वोचेमाऽग्नये । आरे अस्मे च शृण्वते । अस्य प्रत्नामनु द्युतꣳ शुक्रन्दुदुह्रे अह्रयः । पयस्सहस्रसामृषिम् । अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति । अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अद्ध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँव्विभ्वँव्विशेविशे । उभा वामिन्द्राग्नी आहुवद्ध्या ॥ १७ ॥ उभा राधसस्सह मादयद्ध्यै । उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् । अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तञ्जानन्नग्न आ रोहाऽथा नो वर्द्धया रयिम् । अग्न आयूꣳषि पवस आ सुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधत्पोषꣳ रयिं ॥ १८ ॥ मयि । अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वख्षि यख्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ वह । उप यज्ञꣳ हविश्च नः । अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिः कविः । शुची रोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः । आयुर्दा अग्नेऽस्यायुर्मे ॥ १९ ॥ देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनन्तन्म आ पृण चित्रावसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा द्युमन्तस्समिधीमहि वयस्वन्तो वयस्कृतँय्यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम् । अग्ने सपत्नदम्भनँव्वर्षिष्ठे अधि नाके । सन्त्वमग्ने सूर्यस्य वर्चसाऽगथास्समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना । त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज ॥ २० ॥ आहुवद्ध्यै पोषꣳ रयिं मे वर्चसा सप्तदश च ॥ ५ ॥

सं पश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे । अम्भस्स्थाऽम्भो वो भख्षीय महस्स्थ महो वो भख्षीय सहस्स्थ सहो वो भख्षीयोर्जस्स्थोर्जँव्वो भख्षीय रेवती रमद्ध्वमस्मिँल्लोकेऽस्मिन्गोष्ठेऽस्मिन्ख्षयेऽस्मिन् योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त ॥ २१ ॥ सꣳहिताऽसि विश्वरूपीरा मोर्जा विशाऽऽ गौपत्येनाऽऽ रायस्पोषेण सहस्रपोषँव्वः पुष्यासं मयि वो रायश्श्रयन्ताम् । उप त्वाऽग्ने दिवेदिवे दोषावस्तर्द्धिया वयम् । नमो भरन्त एमसि । राजन्तमद्ध्वराणाङ्गोपामृतस्य दीदिविम् । वर्द्धमानꣳ स्वे दमे । स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नस्स्वस्तये । अग्ने ॥ २२ ॥ त्वन्नो अन्तमः । उत त्राता शिवो भव वरूथ्यः । तन्त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः । वसुरग्निर्वसुश्रवाः । अच्छा नख्षि द्युमत्तं-

मो रयिन्दाः । ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यते-डास्स्थ मधुकृतस्स्योना माऽऽ विशतेरा मदः । सहस्रपोषव्वः पुष्यासं ॥ २३ ॥ मयि वो राय-श्श्रयन्ताम् । तथ्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते । कुक्षीवन्तय्य औशिजम् । कुदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानन्देवस्य पृच्यते । परि त्वाऽग्ने पुरव्वयव्विप्रꣳ सहस्य धीमहि । धृषद्वर्णन्दिवेदिवे भेत्तारं भङ्गुरावतः । अग्ने गृहपते सुगृहपतिरहन्त्वया गृहपतिना भूयासꣳ सुगृह-पतिर्मया त्वङ्गृहपतिना भूयाश्शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीन्तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीम् ॥ २४ ॥ भूयास्त स्वस्तयेऽग्ने पुष्यासन्धृषद्वर्णमेकान्न त्रिꣳशच्च ॥ ६ ॥

अयञ्ज्ञो वा एष योऽसामोपप्रयन्तो अद्ध्वरमित्याह स्तोममेवाऽस्मै युनक्त्युपेत्याह प्रजा वै पशव उपेमल्लोकं प्रजामेव पशूनिमल्लोकमुपैत्यस्य प्रत्नामनु द्युतमित्याह सुवर्गो वै लोकः प्रत्न-स्सुवर्गमेव लोकꣳ समारोहत्यग्निर्मूर्द्धा दिवः ककुदित्याह मूर्द्धानं- ॥ २५ ॥ मेवैनꣳ समानानाङ्करो-त्यथो देवलोकादेव मनुष्यलोके प्रति तिष्ठत्ययमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनङ्करो-त्युभा वामिन्द्राग्नी आहुवद्ध्या इत्याहौजो बलमेवाऽव रुन्धेऽयन्ते योनिरृत्विय इत्याह पशवो वै रयिः पशूनेवाऽव रुन्धे षड्भिरुप तिष्ठते षड्वा ॥ २६ ॥ ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भिरुत्तरा भिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासास्सव्वथ्सरस्सव्वथ्सर एव प्रति तिष्ठति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति सव्वथ्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते पुनर्न-वमेवैनमजरङ्करोत्यथो पुनात्येवोप तिष्ठते योग एवाऽस्यैष उप तिष्ठते ॥ २७ ॥ दम एवाऽस्यैष उप तिष्ठते याच्ञैवाऽस्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तदायुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह ॥ २८ ॥ तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनन्तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनन्तन्म आ पूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रा-वसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाऽव रुन्ध इन्धानास्त्वा शतꣳ ॥ २९ ॥ हिमा इत्याह शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीय्यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछंबट्कारꣳ सन्त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिषमेवैतामा शास्ते ॥३०॥ मूर्द्धानꣳ षड्वा एष उप तिष्ठते पाहीत्याह शतमहꣳ षोडश च ॥७॥

सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाऽव रुन्धेऽम्भस्स्थाऽम्भो वो भक्षीयेत्याहाऽम्भो ह्येता महस्स्थ महो वो भक्षीयेत्याह महो ह्येतास्सहस्स्थ सहो वो

भक्षीयेत्याह सहो होता ऊर्जस्स्थोर्जं व्वो भक्षीयेत्या- ॥ ३१ ॥ होर्जो होता रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवाऽऽत्मन्रमयत इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यस्सꣳहितासि विश्वरूपीरिति वथ्समभि मृशत्युपैवैनन्धत्ते पशुचितमेनङ्कुरुते प्र ॥ ३२ ॥ वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुपतिष्ठते गार्हपत्यमुप तिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवाऽऽत्मन्धत्तेऽथो यदेतन्तृचमन्वाह सन्तत्यै गार्हपत्यꣳव्वा अनु द्विपादो वीराः प्र जायन्ते य एवव्ँविद्वान्द्विपदाभिर्गार्हपत्यमुपतिष्ठत ॥ ३३ ॥ आऽस्य वीरो जायत ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते तथ्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाऽव रुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाऽव रुन्धे कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिꣳव्वसति ॥ ३४ ॥ य एवव्ँविद्वानग्निमुपतिष्ठते परि त्वाऽग्ने पुरꣳव्व- यमित्याह परिधिमेवैतं परि दधात्यस्कन्दायाऽग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतन्त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनङ्करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातस्स्यात्तेजस्व्येवाऽस्य ब्रह्मवर्चसी पुत्रो जायते तामा- शिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातस्स्यात्तेज एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ॥ ३५ ॥ ऊर्जं व्वो भक्षीयेति प्र गार्हपत्यमुपतिष्ठते वसति ज्योतिष्मतीमेकान्न त्रिꣳशच्च ॥ ८ ॥

अग्निहोत्रञ्जुहोति यदेव किञ्च यजमानस्य स्वन्तस्यैव तद्रेतस्सिञ्चति प्रजनने प्रजननꣳ हि वा अग्निरथौषधीरन्तगता दहति तास्ततो भूयसीः प्र जायन्ते यथ्सायञ्जुहोति रेत एव तथ्सिञ्चति प्रैव प्रातस्तनेन जनयति तद्रेतस्सिक्तन्न त्वष्ट्राऽविकृतं प्रजायते यावच्छो वै रेतसस्सिक्तस्य ॥ ३६ ॥ त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्र जायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति स प्रैव जायते श्वश्श्वो भूयान्भवति य एवव्ँविद्वानग्नि- मुपतिष्ठतेऽहर्देवानामासीद्रात्रिरसुराणान्तेऽसुरा यद्देवानाव्ँवित्तव्ँवेद्यमासीत्तेन सह ॥ ३७ ॥ रात्रिं प्राऽविशन्ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाऽग्निꣳ स्तवाम स नस्स्तुतः पशून्पुनर्दास्यतीति तेऽग्निमस्तुवन्थ्स एभ्यस्स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून् वित्त्वा कामाꣳ अकुर्वत य एवव्ँविद्वानग्निमुपतिष्ठते पशुमान्भव- ॥ ३८ ॥ त्यादित्यो वा अस्माल्लोकादमुल्ँलोकमैथ्सोऽमुल्ँलोकङ्गत्वा पुनरिमल्ँलोकमभ्यध्यायथ्स इमल्ँलोकमागत्य मृत्यो-रबिभेन्मृत्युसꣳयुत इव ह्ययल्ँलोकस्सोऽमन्यतेममेवाऽग्निꣳ स्तवानि स मा स्तुतस्सुवर्गल्ँलो- कङ्गमयिष्यतीति सोऽग्निमस्तौथ्स एनꣳ स्तुतस्सुवर्गल्ँलोकमगमयद्य ॥ ३९ ॥ एवव्ँविद्वानग्निमुप- तिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्यभि वा एषोऽग्नी आ रोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुप तिष्ठते न प्रातस्सꣳ हि नक्तव्ँव्रतानि सृज्यन्ते सह

श्रेयाꣳश्च पापीयाꣳश्चाऽऽसाते ज्योतिर्वा अग्निस्तमो रात्रिर्य- ॥ ४० ॥ न्नक्तमुपतिष्ठते ज्योतिषैव तमस्तरत्युपस्थेयोऽग्नी(३)र्नोपस्थेया(३) इत्याहुर्मनुष्यायेन्वै योऽहरहराहृत्याऽथैनय्यँाचति स इन्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कय्यँजमानो यजत इत्येषा खलु वा ॥ ४१ ॥ आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राऽविशन्ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभिरुपतिष्ठते स्वमेव तदन्विच्छति न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ्प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठेत नैनं प्रत्योषति न विष्वङ्प्रजया पशुभिरेति ॥ ४२ ॥ सिक्तस्य सह भवति यो यत्खलु वै पशुभिस्त्रयोदश च ॥ ९ ॥

मम नाम प्रथमञ्जातवेदः पिता माता च दधतुर्यदग्रे । तत्त्वं बिभृहि पुनरा मदैतोस्तवाऽहन्नाम बिभराण्यग्ने । मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः । आयुषे त्वञ्जीवसे वयय्यँथायथवँ वि परि दधावहै पुनस्ते । नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमस्सम्राजे । अषाढो ॥ ४३ ॥ अग्निर्बृहद्वया विश्वजिथ्सहन्त्यश्श्रेष्ठो गन्धर्वः । त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः । सं मामायुषा सङ्गौपत्येन सुहिते मा धाः । अयमग्निश्श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः । अस्मा अस्तु सुवीर्यम् । मनो ज्योतिर्जुषतामाज्यवँविच्छिन्नय्यँज्ञꣳ समिमन्दधातु । या इष्टा उषसो निम्रुचश्च तास्सन्दधामि हविषा घृतेन । पयस्वतीरोषधयः ॥ ४४ ॥ पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सꣳ सृज । अग्ने व्रतपते व्रतञ्चरिष्यामि तच्छकेयन्तन्मे राध्यताम् । अग्निꣳ होतारमिह तꣳ हुवे देवान् यज्ञियानिह यान् हवामहे । आ यन्तु देवास्सुमनस्यमाना वियन्तु देवा हविषो मे अस्य । कस्त्वा युनक्ति स त्वा युनक्तु यानि घर्मे कपालान्युपचिन्वन्ति ॥ ४५ ॥ वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम् । अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनु सञ्चरन्ति । त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमय्यँज्ञꣳ स्वधया ददन्ते तेषाञ्छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु ॥ ४६ ॥
अषाढ ओषधय उपचिन्वन्ति पञ्चचत्वारिꣳशच्च ॥ १० ॥

वैश्वानरो न ऊत्याऽऽ प्र यातु परावतः । अग्निरुक्थेन वाहसा । ऋतावानवैँश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रङ्घर्ममीमहे । वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकस्स्वपस्यया कविः । उभा पितरा महयन्नजायताऽग्निर्द्यावापृथिवी भूरिरेतसा । पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश । वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स ॥ ४७ ॥ रिषः पातु नक्तम् । जातो यदग्ने भुवना व्यख्यः पशुन्न गोपा इर्यः परिज्मा । वैश्वानर ब्रह्मणे विन्द गातुय्यूँयं पात स्वस्तिभिस्सदा नः । त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः । त्वन्देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा । अस्माकमग्ने मघवथ्सु धारयाऽनामि क्षत्रमजरꣳ सुवीर्यम् । वयञ्जयेम

शतिनꣳ सहस्रिणँव्वैश्वानर ॥ ४८ ॥ वाजमग्ने तवोतिभिः । वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः । इतो जातो विश्वमिदवँ्वि चष्टे वैश्वानरो यतते सूर्येण । अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि । उदुत्तमँव्वरुण पाशमस्मदवाऽधमवँ्वि मद्ध्यमꣳ श्रथाय । अथा वयमादित्य ॥ ४९ ॥ व्रते तवाऽनागसो अदितये स्याम । दधिक्राव्ण्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत् । आ दधिक्राश्शवसा पञ्च कृष्टीस्सूर्य इव ज्योतिषाऽपस्ततान । सहस्रसाश्शतसा वाज्यर्वा पृणक्तु मद्ध्वा समिमा वचाꣳसि । अग्निर्मूर्द्धा भुवः । मरुतो यद्ध वो दिवस्सुम्नायन्तो हवामहे । आ तू न ॥ ५० ॥ उप गन्तन । या वश्शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताऽधि । अस्मभ्यन्तानि मरुतो वि यन्त रयिन्नो धत्त वृषणस्सुवीरम् । अदितिर्न उरुष्यत्वदितिश्शर्म यच्छतु । अदितिः पात्वꣳहसः । महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् । सुत्रामाणं पृथिवीन्द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् । दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये । इमाꣳ सु नावमाऽरुहꣳ शतारित्राꣳ शतस्प्याम् । अच्छिद्रां पारयिष्णुम् ॥ ५१ ॥ दिवा स संहस्रिणंव्वैश्वानराऽऽदित्य तू नोऽनेहसꣳ सुशर्माणमेकान्न विꣳशतिश्च ॥ ११ ॥

देवासुराः परा भूमिर्भूमिरुपप्रयन्तस्सं पश्याम्ययंज्ञस्सं पश्याम्यग्निहोत्रं मम नाम वैश्वानर एकादश ॥ ११ ॥ देवासुराः क्रुद्धस्सं पश्यामि सं पश्यामि नक्तमुप गन्तनैकपञ्चाशत् ॥ ५१ ॥ देवासुराः पारयिष्णुम् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ प्रथमकाण्डे षष्ठप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

सन्त्वा सिञ्चामि यजुषा प्रजामायुर्द्धनञ्च । बृहस्पतिप्रसूतो यजमान इह मा रिषत् । आज्यमसि सत्यमसि सत्यस्याऽद्ध्यक्षमसि हविरसि वैश्वानरँव्वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजास्सहोऽसि सहमानमसि सहस्वाऽरातीस्सहस्वाऽरातीयतस्सहस्व पृतनास्सहस्व पृतन्यतः । सहस्रवीर्य-

मसि तन्मा जिन्वाऽऽज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्यायु- ॥ १ ॥ रसि सत्यशुष्ममसि सत्येन त्वाऽभि घारयामि तस्य ते भक्षीय पञ्चानान्त्वा वातानाँय्यन्त्राय धर्त्राय गृह्णामि पञ्चानान्त्वर्तूनाँय्यन्त्राय धर्त्राय गृह्णामि पञ्चानान्त्वा दिशाँय्यन्त्राय धर्त्राय गृह्णामि पञ्चानान्त्वा पञ्चजनानाँय्यन्त्राय धर्त्राय गृह्णामि चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय ॥ २ ॥ धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामि भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य देवानान्त्वा देवताभ्यो गृह्णामि कामाय त्वा गृह्णामि ॥ ३ ॥ सत्यायुरोजसे यन्त्राय त्रयस्त्रिꣳशच्च ॥ १ ॥

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासन्धीरश्चेत्ता वसुविदुग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविदभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविद्युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायाऽस्मै वोढवे जातवेदः । इन्धानास्त्वा सुप्रजसस्सुवीरा ज्योग्जीवेम बलिहृतो वयन्ते । यन्मे अग्ने अस्य यज्ञस्य रिष्या- ॥ ४ ॥ द्यद्वा स्कन्दादाज्यस्योत विष्णो । तेन हन्मि सपत्नन्दुर्मरायुमैनन्दधामि निर्ऋत्या उपस्थे । भूर्भुवस्सुवरुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वाऽमर्त्यस्य ते होतर्मूर्द्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽ विश वागस्यैन्द्री सपत्नक्षयणी ॥ ५ ॥ वाचा मेन्द्रियेणाऽऽ विश वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामग्नीषोमयोरहन्देवयज्यया चक्षुष्मान्भूयासमग्नेरहन्देवयज्ययाऽन्नादो भूयास- ॥ ६ ॥ न्दब्धिरस्यदब्धो भूयासममुन्दभेयमग्नीषोमयोरहन्देवयज्यया वृत्रहा भूयासमिन्द्राग्नियोरहन्देवयज्ययेन्द्रियाव्यन्नादो भूयासमिन्द्रस्याऽहन्देवयज्ययेन्द्रियावी भूयासं महेन्द्रस्याऽहन्देवयज्यया जेमानं महिमानङ्गमेयमग्नेस्स्विष्टकृतोऽहन्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठाङ्गमेयम् ॥ ७ ॥ रिष्याथ्सपत्नक्षयण्यन्नादो भूयासꣳ षट्त्रिꣳशच्च ॥ २ ॥

अग्निर्मा दुरिष्टात्पातु सविताऽघशꣳसाद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषꣳ सुरूपवर्षवर्ण एहीमान्भद्रान्दुर्याꣳ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिन्तेऽशीयोपहूत उपहव- ॥ ८ ॥ न्तेऽशीय सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयँय्यज्ञो दिवꣳ रोहतु यज्ञो दिवङ्गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियन्दधात्वस्मान्राय उत यज्ञास्सचन्तामस्मासु सन्त्वाशिषस्सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टा नो- ॥ ९ ॥ ऽसि जुष्टिन्ते गमेयं मनो ज्योतिर्जुषतामाज्यँविच्छिन्नँय्यज्ञꣳ समिमन्दधातु । बृहस्पतिस्तनुतामिमन्नो

विश्वे देवा इह मादयन्ताम् । ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसत्प्रजापतेर्भा-
गोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षि-
तोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्राऽमुष्मिँल्लोके ॥ १० ॥ उपहवश्चुष्टा नस्त्वा षट्च ॥ ३ ॥

बर्हिषोऽहन्देवयज्यया प्रजावान्भूयासन्नराशꣳसस्याऽहन्देवयज्यया पशुमान्भूयासम-
ग्नेस्स्विष्टकृतोऽहन्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठाङ्गमेयमग्नेरहमुज्जितिमनूज्जेषꣳ सोमस्याऽह-
मुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नीषोमयोरहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेष-
मिन्द्रस्याऽह- ॥ ११ ॥ मुज्जितिमनूज्जेषं महेन्द्रस्याऽहमुज्जितिमनूज्जेषमग्नेस्स्विष्टकृतोऽहमुज्जिति-
मनूज्जेषँव्वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाऽधराꣳ अकः ।
उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् । एमा
अगमन्नाशिषो दोहकामा इन्द्रवन्तो ॥ १२ ॥ वनामहे धुक्षीमहि प्रजामिषम् । रोहितेन
त्वाऽग्निर्देवताङ्गमयतु हरिभ्यान्त्वेन्द्रो देवताङ्गमयत्वेतशेन त्वा सूर्यो देवताङ्गमयतु वि ते मुञ्चामि
रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणँय्यच्च भद्रं प्र णो
ब्रूताद्भागधान्देवतासु । विष्णोश्शँय्योरहन्देवयज्यया यज्ञेन प्रतिष्ठाङ्गमेयꣳ सोमस्याऽहन्देवयज्य-
या ॥ १३ ॥ सुरेता रेतो धिषीय त्वष्टुरहन्देवयज्यया पशूनाꣳ रूपं पुषेयन्देवानां पत्नीरग्निर्गृहपतिर्य-
ज्ञस्य मिथुनन्तयोरहन्देवयज्यया मिथुनेन प्र भूयासँव्वेदोऽसि वित्तिरसि विदेय कर्माऽसि करुणम-
सि क्रियासꣳ सनिरसि सनिताऽसि सनेयङ्घृतवन्तङ्कुलायिनꣳ रायस्पोषꣳ सहस्रिणँव्वेदो ददातु
वाजिनम् ॥ १४ ॥ इन्द्रस्याऽहमिन्द्रवन्तस्सोमस्याऽहन्देवयज्यया चतुश्चत्वारिꣳशच्च ॥ ४ ॥

आ प्यायतान्ध्रुवा घृतेन यज्ञँय्यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा
पृथिवी यज्ञे अस्मिन् । प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेन सदसि सन्मे
भूयास्सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः प्राच्यान्दिशि देवा
ऋत्विजो मार्जयन्तान्दक्षिणाया- ॥ १५ ॥ न्दिशि मासाः पितरो मार्जयन्तां प्रतीच्यान्दिशि गृहाः
पशवो मार्जयन्तामुदीच्यान्दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायान्दिशि यज्ञस्सँव्व-
थ्सरो यज्ञपतिर्मार्जयन्ताँव्विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भ-
क्तस्स यन्द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु वि क्रमे निर्भक्तस्स
यन्द्विष्मो विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तस्स यन्द्विष्मो
विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु वि क्रमे निर्भक्तस्स यन्द्विष्मः
॥ १६ ॥ दक्षिणायामन्तरिक्षमनु वि क्रमे निर्भक्तस्स यन्द्विष्मो विष्णोरेकान्न त्रिꣳशच्च ॥ ५ ॥

अगन्म सुवस्सुवरगन्म सन्दृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षि सुभूरसि
श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहममुं भ्रातृव्यमाभ्यो

दिग्भ्यों॑ऽस्यै दि॒वों॑ऽस्मादु॒न्तरि॑क्षादु॒स्यै पृ॑थि॒व्या अ॒स्माद॒न्नाद्या॒न्निर्भ॑जामि॒ निर्भ॑क्त॒स्स यन्द्वि॒ष्मः । ॥ १७ ॥ सञ्ज्योति॑षाऽभूवमै॒न्द्रीमा॒वृत॒म॒न्वाव॑र्ते॒ सम॒हं प्र॒जया॒ सं मया॑ प्र॒जा सम॒हꣳ रा॒यस्पोषे॑ण॒ सं मया॑ रा॒यस्पोष॒स्समि॑द्धो अग्ने मे दीदिहि समे॒द्धा ते॑ अग्ने दीद्यासꣳ॒ वसु॑मान् य॒ज्ञो वसी॑यान्भूयासम॒ग्न॒ आयूꣳ॑षि पवस॒ आ सुवोर्ज॒मिषं॑ च नः । आ॒रे बा॑धस्व दु॒च्छुनां॑म् । अग्ने॒ पव॑स्व॒ स्वपा॑ अ॒स्मे वर्च॑-स्सु॒वीर्यं॑म् । ॥ १८ ॥ दध॒त्पोषꣳ॑ र॒यिं मयि॑ । अग्ने॑ गृहपते सुगृहप॒ति॒र॒हन्त्वया॑ गृ॒ह॑पतिना भूयासꣳ सुगृहप॒तिर्मया॒ त्वङ्गृ॒ह॑पतिना भूयाश्शत॒ꣳ हिमा॒स्तामा॒शिषमा शा॑से॒ तन्त॑वे ज्योति॑ष्मतीन्तामाशिष-माशा॑से॒ऽमुष्मै॒ ज्योति॑ष्मतीङ्कस्त्वा॑ युनक्ति॒ स त्वा॒ विमु॑ञ्चत्वग्ने॑ व्रतपते व्र॒तम॑चारिष॒न्तद॑शक॒न्तन्मे॑-ऽराधि य॒ज्ञो ब॑भूव स आ ॥ १९ ॥ ब॑भूव॒ स प्र ज॑ज्ञे॒ स वा॑वृधे । स दे॒वाना॒मधि॑पतिर्बभूव॒ सो अ॒स्मा-ꣳ अधि॑पतीन्करोतु व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम् । गोमाꣳ॑ अग्ने॒ऽविमाꣳ अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा सद॒मिद॑प्रमृ॒ष्यः । इडा॑वाꣳ ए॒षो अ॑सुर प्र॒जावा॑न्दी॒र्घो र॒यिः पृ॑थुबु॒द्ध्नस्स॒भावा॑न् ॥ २० ॥ द्विष्मस्सु॒वीर्यꣳ॑ स आ पञ्च॑त्रिꣳशच्च ॥ ६ ॥

यथा॒ वै स॑मृतसो॒मा ए॒वव्वा ए॒ते स॑मृतय॒ज्ञा यद्द॑र्शपूर्णमा॒सौ कस्य॒ वाऽह॒ दे॒वा य॒ज्ञमाग-च्छ॑न्ति॒ कस्य॑ वा॒ न ब॑हू॒नाय्यँज॑मानाना॒य्यँो वै दे॒वताः॒ पूर्वः॑ परिगृ॒ह्णाति॒ स ए॑नाश्श्वो भू॒ते य॑जत ए॒तद्वै दे॒वाना॑मा॒यत॑नय्यँ॒दाह॒वनीयो॑ऽन्तराऽग्नी प॑शूनाङ्गार्ह॒पत्यो मनुष्या॑णामन्वाहार्य॒पच॑नः पितृ॒णाम॒ग्नि-ङ्गृ॑ह्णाति॒ स्व ए॒वाय॑त॑ने दे॒वताः॒ परि॑ ॥ २१ ॥ गृ॒ह्णाति॒ ताश्श्वो भू॒ते य॑जते व्र॒तेन॒ वै मेद्ध्योऽग्निर्व्रत-प॑तिर्ब्राह्म॒णो व्र॑त॒भृद्व्र॒तमु॑पैष्यन्ब्रू॒यादग्ने॑ व्रतपते व्र॒तञ्च॑रिष्यामीत्य॒ग्निर्वै दे॒वाना॑व्व्र॒तप॑ति॒स्तस्मा॑ ए॒व प्र॒ति॒प्रोच्य॑ व्र॒तमा ल॑भते ब॒र्हिषा॑ पू॒र्णमा॑से व्र॒तमु॑पैति व॒त्सैर॑मावा॒स्या॑यामे॒तद्ध्येत॒योरा॒यत॑नमुप-स्ती॒र्यः पूर्व॑श्चाऽग्निरप॑रश्चेत्या॑हु॒र्मनुष्या॑ ॥ २२ ॥ इन्वा उप॑स्तीर्ण॒मिच्छ॑न्ति॒ किमु॑ दे॒वा येषा॒न्नवा॑वसा-न॒मुपा॑ऽस्मि॒ञ्छ्वो य॒क्ष्यमा॑णे दे॒वता॑ वसन्ति॒ य ए॒वव्वि॒द्वान॒ग्निमु॑पस्तृ॒णाति॒ यज॑मानेन ग्रा॒म्याश्च॑ प॒शवो॑ऽवरुद्ध्या॑ आ॒र॒ण्याश्चेत्या॑हु॒र्यद्ग्रा॒म्यानु॑पव॒स॑ति॒ तेन॑ ग्रा॒म्यानव॑ रुन्धे॒ यदा॑र॒ण्यस्या॒ऽश्नाति॒ ते-ना॒ऽऽर॒ण्यान् यदना॑श्वा॒नुप॒वसे॑त्पितृदेव॒त्य॑स्स्यादार॒ण्यस्या॑ऽश्नातीन्द्रिय- ॥ २३ ॥ व्वा आ॑र॒ण्यमि॑-न्द्रि॒यमे॒वाऽऽत्मन्ध॑त्ते॒ यदना॑श्वानु॒पव॒सेत्क्षोधु॑कस्स्याद्यद॑श्नी॒याद्रु॒द्रो॑ऽस्य प॒शून॒भि म॑न्येता॒ऽपो॑ऽश्ना-ति॒ तन्नेवा॑ऽशि॒तन्नेवाऽन॑शित॒न्न क्षोधु॑को॒ भव॑ति॒ नाऽस्य॑ रु॒द्रः प॒शून॒भि म॑न्यते॒ वज्रो॒ वै य॒ज्ञः क्षु॒त्खलु॒ वै म॑नु॒ष्य॑स्य॒ भ्रातृ॑व्यो॒ यदना॑ऽश्वानु॒पव॒स॑ति॒ वज्रे॑णैव सा॒क्षात्क्षुध॑ं भ्रातृ॑व्यꣳ हन्ति ॥ २४ ॥ परि॑ मनु॒ष्या॑ इन्द्रियꣳ सा॒क्षात्त्रीणि॑ च ॥ ७ ॥

यो वै श्र॒द्धामना॑रभ्य य॒ज्ञेन॒ यज॑ते॒ नाऽस्येष्टाय॒ श्रद्द॑धते॒ऽपः प्र ण॑यति॒ श्र॒द्धा वा आप॑श्श्र॒द्धा-मे॒वाऽऽरभ्य॑ य॒ज्ञेन॑ यजत उ॒भये॑ऽस्य देवमनु॒ष्या इ॒ष्टाय॒ श्रद्द॑धते॒ तदा॑हुरति॒ वा ए॒ता वर्त्र॑न्नेद॒न्त्यति॒ वाचं॒ मनो॒ वावैता नाति॑ नेद॒न्तीति॒ मन॑सा॒ प्र ण॑यती॒यव्वै मनो॒- ॥ २५ ॥ ऽनयै॒वैनाः॒ प्र ण॑यत्य-स्क॑न्नहविर्भवति॒ य ए॒वव्वेद॑ यज्ञायु॒धानि॒ सं भ॑रति य॒ज्ञो वै य॑ज्ञायु॒धानि॑ य॒ज्ञमे॒व तथ्सं भ॑रति॒ यदेक॑मे-

कꣳ संभरैत्पितृदेवत्यानि स्युर्यत्सह सर्वाणि मानुषाणि द्वेद्वे सं भरति याज्यानुवाक्ययोरेव रूपङ्करो-
त्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते स्फ्य- ॥ २६ ॥ श्च कपा-
लानि चाऽग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै
दश यज्ञायुधानि य एवव्ँवेद मुखतोऽस्य यज्ञः कल्पते यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुष-
न्तेऽस्य देवा हव्यꣳ हविर्निरुप्यमाणमभि मन्त्रयेताऽग्निꣳ होतारमिह तꣳ हुव इति ॥ २७ ॥ देवेभ्य
एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यमेष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते तदुदि-
त्वा वाचय्ँयच्छति यज्ञस्य धृत्या अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञन्तनुते रक्षसा-
मनन्ववचाराय यो वै यज्ञय्ँयोग आगते युनक्ति युङ्क्ते युञ्जानेषु कस्त्वा युनक्ति स त्वा युनक्त्वित्याह
प्रजापतिर्वै कः प्रजापतिनैवैनय्ँयुनक्ति युङ्क्ते युञ्जानेषु ॥ २८ ॥ वै मनस्स्फ्य इति युनक्त्वेकादश च ॥ ८ ॥

प्रजापतिर्यज्ञानसृजताऽग्निहोत्रञ्चाऽग्निष्टोमञ्च पौर्णमासीञ्चोक्थ्यञ्चाऽमावास्याञ्चाऽतिरात्रञ्च
तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या
तावानतिरात्रो य एवव्ँविद्वानग्निहोत्रञ्जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाऽऽप्नोति य एव-
व्ँविद्वान्पौर्णमासीय्ँयजते यावदुक्थ्येनोपाप्नोति ॥ २९ ॥ तावदुपाऽऽप्नोति य एवव्ँविद्वानमावा-
स्याय्ँयजते यावदतिरात्रेणोपाप्नोति तावदुपाऽऽप्नोति परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स पर-
माङ्काष्ठामगच्छत्तेन प्रजापतिन्निरवासाययत्तेन प्रजापतिः परमाङ्काष्ठामगच्छत्तेनेन्द्रन्निरवासाययत्ते-
नेन्द्रः परमाङ्काष्ठामगच्छत्तेनाऽग्नीषोमौ निरवासाययत्तेनाऽग्नीषोमौ परमाङ्काष्ठामगच्छताय्ँय ॥३०॥
एवव्ँविद्वान्दर्शपूर्णमासौ यजते परमामेव काष्ठाङ्गच्छति यो वै प्रजातेन यज्ञेन यजते प्र प्रजया
पशुभिर्मिथुनैर्जायते द्वादश मासास्सव्ँवथ्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्या-
हुर्वथ्सञ्चोपावसृजत्युखाञ्चाऽधि श्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोप
दधाति पुरोडाशञ्चा- ॥ ३१ ॥ ऽधिश्रयत्याज्यञ्च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिञ्च परिगृह्णाति
पत्नीञ्च सन्नह्यति प्रोक्षणीश्चाऽऽसादयत्याज्यञ्चैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य
एवꣳ संपाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ॥ ३२ ॥ उक्थ्येनोपाप्नोत्य-
गच्छताय्ँयः पुरोडाशञ्च चत्वारिꣳशच्च ॥ ९ ॥

ध्रुवोऽसि द्ध्रुवोऽहꣳ संजातेषु भूयासमित्याह द्ध्रुवानेवैनान्कुरुत उग्रोऽस्युग्रोऽहꣳ संजातेषु
भूयासमित्याहाऽप्रतिवादिन एवैनान्कुरुतेऽभिभूरस्यभिभूरहꣳ संजातेषु भूयासमित्याह य एवैनं
प्रत्युत्पिपीते तमुपाऽस्यते युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनै- ॥ ३३ ॥ वैनय्ँयु-
नक्ति यज्ञस्य वै समृद्धेन देवास्सुवर्गल्ँलोकमायन् यज्ञस्य व्यृद्धेनाऽसुरान्पराऽभावयन् यन्मे अग्ने
अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तथ्समृद्धेन यजमानस्सुवर्गल्ँलोकमेति यज्ञस्य व्यृद्धेन भ्रातृ-
व्यान्परा भावयत्यग्निहोत्रमेताभिर्व्याहृतीभिरुप सादयेद्यज्ञमुखव्ँवा अग्निहोत्रं ब्रह्मैता व्याहृतयो

यज्ञमुख एव ब्रह्म ॥ ३४ ॥ कुरुते सँव्वथ्सरे पर्यागत एताभिरिवोप सादयेद्ब्रह्मणैवोभयतस्सँव्वथ्सरं परि गृह्णाति दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्या सादयेद्यज्ञमुखँव्वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते सँव्वथ्सरे पर्यागत एताभिरिवाऽऽ सादयेद्ब्रह्मणैवोभयतस्सँव्वथ्सरं परि गृह्णाति यद्वै यज्ञस्य साम्ना क्रियते राष्ट्र- ॥ ३५ ॥ य्यँज्ञस्याऽऽशीर्गच्छति यदृचा विशँय्यज्ञस्याऽऽशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवख्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदङ्कुरुते तथा ब्राह्मणस्साशीर्केण यज्ञेन यजते यङ्कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याऽऽशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोनुवाक्यायान्दध्याद्भ्रातृव्यदेवत्या वै पुरोनुवाक्या भ्रातृव्यमेवाऽस्य यज्ञस्या- ॥ ३६ ॥ ऽऽशीर्गच्छति यान्कामयेत यजमानान्थ्समावत्येनान् यज्ञस्याऽऽशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोनुवाक्याया अर्द्धर्च एकान्दध्याद्याज्यायै पुरस्तादेकाय्याज्याया अर्द्धर्च एकान्तथैनान्थ्समावती यज्ञस्याऽऽशीर्गच्छति यथा वै पर्जन्यस्सुवृष्टँव्वर्षत्येवय्यँज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञय्यँजमानः परि गृह्णाति मनोऽसि प्राजापत्यं ॥ ३७ ॥ मनसा मा भूतेनाऽऽ विशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन्धत्ते वागस्यैन्द्री सपत्नख्षयणी वाचा मैन्द्रियेणाऽऽ विशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन्धत्ते ॥ ३८ ॥ तेनैव ब्रह्म राष्ट्रमेवाऽस्य यज्ञस्य प्राजापत्यꣳ षट्त्रिꣳशच्च ॥ १० ॥

यो वै सप्तदशं प्रजापतिय्यँज्ञमन्वायत्तँव्वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशत आ श्रावयेति चतुरख्षरमस्तु श्रौषडिति चतुरख्षरय्यँजेति द्व्यख्षरय्यँये यजामह इति पञ्चाख्षरन्द्व्यख्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवँव्वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते यो वै यज्ञस्य प्रायणं प्रतिष्ठा- ॥ ३९ ॥ मुदयनँव्वेद प्रतिष्ठितेनाऽरिष्टेन यज्ञेन सꣳस्थाङ्गच्छत्या श्रावयाऽस्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनय्यँ एवँव्वेद प्रतिष्ठितेनाऽरिष्टेन यज्ञेन सꣳस्थाङ्गच्छति यो वै सूनृतायै दोहँव्वेद दुह एवैनाय्यँज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु ॥ ४० ॥ श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह इत्युपाऽसदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवँव्वेद दुह एवैनान्देवा वै सत्रमासत तेषान्दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति विद्युत- ॥ ४१ ॥ मजनयन् ये यजामह इति प्राऽवर्षयन्नभ्यस्तनयन्वषट्कारेण ततो वै तेभ्यो दिशः प्राऽप्यायन्त य एवँव्वेद प्राऽस्मै दिशः प्यायन्ते प्रजापतिन्त्वो वेद प्रजापतिस्त्वँव्वेद यं प्रजापतिर्वेद स पुण्यो भवत्येष वै छन्दस्यः प्रजापतिरा श्रावयाऽस्तु श्रौषड्यज ये यजामहे वषट्कारो य एवँव्वेद पुण्यो भवति वसन्त- ॥ ४२ ॥ मृतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वङ्कल्पन्ते

कल्पन्तेऽस्मा ऋतवो य एवव्ँवेदाऽग्नीषोमयोरहन्देवयज्यया चख्खुष्मान्भूयासमित्याहाऽग्नीषोमा-
भ्याव्ँवै यज्ञश्चख्खुष्मान्ताभ्यामेव चख्खुरात्मन्धत्तेऽग्नेरहन्देवयज्ययाऽन्नादो भूयासमित्याहाऽग्निर्वै
देवानामन्नादस्तेनैवा- ॥ ४३ ॥ ऽन्नाद्यमात्मन्धत्ते दब्धिरस्यदब्धो भूयासममुन्दभेयमित्याहैतया वै
दब्ध्या देवा असुरानदभ्नुवन्तयैव भ्रातृव्यन्दभ्नोत्यग्नीषोमयोरहन्देवयज्यया वृत्रहा भूयासमित्या-
हाऽग्नीषोमाभ्याव्ँवा इन्द्रो वृत्रमहन्ताभ्यामेव भ्रातृव्यꣳ स्तृणुत इन्द्राग्नियोरहन्देवयज्ययैन्द्रियाव्य-
न्नादो भूयासमित्याहेन्द्रियाव्येवाऽन्नादो भवतीन्द्रस्या- ॥ ४४ ॥ ऽहन्देवयज्ययैन्द्रियावी भूया-
समित्याहेन्द्रियाव्येव भवति महेन्द्रस्याऽहन्देवयज्यया जेमानं महिमानङ्गमेयमित्याह जेमानमेव
महिमानङ्गच्छत्यग्नेस्स्विष्टकृतोऽहन्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठाङ्गमेयमित्याहाऽऽयुरेवाऽऽ-
त्मन्धत्ते प्रति यज्ञेन तिष्ठति ॥ ४५ ॥ प्रतिष्ठामह्नदस्तु विद्युतव्ँसन्तन्तेनैवेन्द्रस्याऽष्टात्रिꣳशच्च ॥ ११ ॥

इन्द्रव्ँवो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । इन्द्रन्नरो नेमधिता हवन्ते
यत्पार्या युनजते धियस्ताः । शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वन्नः । इन्द्रियाणि
शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे । अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु
वृत्रहत्ये । अनु ॥ ४६ ॥ ख्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये । आ यस्मिन्थ्सप्त वासवा-
स्तिष्ठन्ति स्वारुहो यथा । ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः । आमासु पक्वमैरय आ सूर्यꣳ
रोहयो दिवि । घर्मन्न सामन्तपता सुवृक्तिभिर्जुष्टङ्गिर्वणसे गिरः । इन्द्रमिद्गाथिनो बृहदिन्द्रमर्के-
भिरर्किणः । इन्द्रव्ँवाणीरनूषत । गायन्ति त्वा गायत्रिणो- ॥ ४७ ॥ ऽर्चन्त्यर्कमर्किणः । ब्रह्मा-
णस्त्वा शतक्रतवुद्वꣳशमिव येमिरे । अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिङ्गृणानाः ।
इदमिन्द्र प्रति हव्यङ्गृभाय सत्यास्सन्तु यजमानस्य कामाः । विवेष यन्मा धिषणा जजान स्तवै पुरा
पार्यादिन्द्रमह्नः । अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते । प्र सम्राजं प्रथममध्वरा-
णा- ॥ ४८ ॥ मꣳहोमुचव्ँवृषभय्ँयज्ञियानाम् । अपान्नपातमश्विना हयन्तमस्मिन्नर इन्द्रियन्धत्त-
मोजः । वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । अधस्पदन्तमीङ्कृधि यो अस्माꣳ अभिदासति ।
इन्द्र ख्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् । अपाऽनुदो जनममित्रयन्तमुरुन्देवेभ्यो
अकृणोरु लोकम् । मृगो न भीमः कुचरो गिरिष्ठाः परावत ॥ ४९ ॥ आ जगामा परस्याः । सृकꣳ
सꣳशाय पविमिन्द्र तिग्मव्ँवि शत्रून्ताढि वि मृधो नुदस्व । वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू
रुज । वि मन्युमिन्द्र भामितोऽमित्रस्याऽभिदासतः । त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ
शूरमिन्द्रम् । हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः । मा ते अस्याꣳ ॥ ५० ॥
सहसावन्परिष्टावघाय भूम हरिवः परादै । त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासस्सूरिषु स्याम ।

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् । ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्द्धयन्नहये हन्तवा उं । वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिस्सजोषाः । अनश्वासो ये पवयों-ऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ५१ ॥ वृत्रहत्येऽनु गायत्रिणोऽध्वराणां परावतोऽस्यामष्टाचत्वा-रिꣳशच्च ॥ १२ ॥

सन्त्वा सिञ्चामि दध्नुवोऽस्यग्निमां बर्हिषोऽहमा प्यायतामगन्म यथा वै यो वै श्रद्धां प्रजापति-र्यज्ञान्ध्रुवोऽसीत्याह यो वै सप्तदशमिन्द्रँव्वो द्वादश ॥ १२ ॥ सन्त्वा बर्हिषोऽहय्यथा वा एववूँविद्वाञ्छ्रैषट्थ्स-हसावचनेकपञ्चाशत् ॥ ५१ ॥ सन्त्वा सिञ्चामि दस्यून् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे षष्ठः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ प्रथमकाण्डे सप्तमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

पाकयज्ञव्वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञस्सैषाऽन्तरा प्रयाजा-नूयाजान् यजमानस्य लोकेऽवहिता तामाँह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते यज्ञव्वै देवा अदुहन् यज्ञोऽसुराꣳ अदुहत्तेऽसुरा यज्ञदुग्धाः पराऽभवन् यो वै यज्ञस्य दोहव्विद्वान् ॥ १ ॥ यजतेऽप्यन्यय्यँजमानन्दुहे सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनन्दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वथ्सो यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेः ॥ २ ॥ न्मात्रे वथ्समुपावसृजति सर्वेण वै यज्ञेन देवास्सुवर्गल्लोकमायन्पाकयज्ञेन मनुरश्राम्यथ्सेडा मनुमुपावर्तत तान्देवासुरा व्यह्वयन्त प्रतीचीन्देवाः पराचीमसुरास्सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुर्यङ्कामयेताऽपशुस्स्यादिति पराचीन्तस्येडामुप ह्वयेताऽप-शुरेव भवति य- ॥ ३ ॥ ङ्कामयेत पशुमान्थ्स्यादिति प्रतीचीन्तस्येडामुप ह्वयेत पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडायामुपह्वयेतेति सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽत्मानमिडायामुप ह्वयते व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि

प्राश्नन्ति ॥ ४ ॥ सामि मार्जयन्त एतत्प्रति वा असुराणाय्यँज्ञो व्यच्छिद्यत ब्रह्मणा देवास्समदधु-र्बृहस्पतिस्तनुतामिमन्न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सन्दधाति विच्छिन्नय्यँज्ञꣳ समिमन्दधात्वित्याह सन्तत्यै विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञन्देवेभ्योऽनु दिशति याव्वै ॥ ५ ॥ यज्ञे दक्षिणान्ददाति तामस्य पशवोऽनु सङ्क्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तङ्कुर्वीताऽऽत्मन्पशून्रमयेतेति ब्रद्ध्न पिन्वस्वेत्याह यज्ञो वै ब्रद्ध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तङ्कुरुत आत्मन्पशून्रमयते ददतो मे मा क्षायीत्याहाऽक्षितिमेवोपैति कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति ॥ ६ ॥ विद्वान्ध्यायेद्भवति यं प्राश्नन्ति याव्वै म एकान्न विꣳशतिश्च ॥ १ ॥

सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच यत्सत्रिणाꣳ होताऽभूः कामिडामुपाऽह्वथा इति तामुपाऽह्व इति होवाच या प्राणेन देवान्दाधार व्यानेन मनुष्यानपानेन पितॄनिति छिनत्ति सा न छिनत्ती(३) इति छिनत्तीति होवाच शरीरव्वा अस्यै तदुपाऽह्वथा इति होवाच गौर्वा ॥ ७ ॥ अस्यै शरीरङ्गाव्वाव तौ तत्पर्यवदतांय्या यज्ञे दीयते सा प्राणेन देवान्दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान् यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन् य एवव्वेद पशुमान्भवत्यथ वै तामुपाऽह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्यन्नव्वा अस्यै तदु- ॥ ८ ॥ पाऽह्वथा इति होवाचौष-धयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्या भवन्ति य एवव्वेदाऽन्नादो भवत्यथ वै तामुपाऽह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति प्रतिष्ठाव्वा अस्यै तदुपाऽह्वथा इति होवाचेयव्वा अस्यै प्रतिष्ठे- ॥ ९ ॥ यव्वै प्रजाः पराभवन्तीरनु गृह्णाति प्रत्याभव-न्तीर्गृह्णाति य एवव्वेद प्रत्येव तिष्ठत्यथ वै तामुपाऽह्व इति होवाच यस्यै निक्रमणे घृतं प्रजास्स-ञ्जीवन्तीः पिबन्तीति छिनत्ति सा न छिनत्ती(३) इति न छिनत्तीति होवाच प्र तु जनयतीत्येष वा इडामुपाऽह्वथा इति होवाच वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजास्सञ्जीवन्तीः पिबन्ति य एवव्वेद प्रैव जायतेऽन्नादो भवति ॥ १० ॥ गौर्वा अस्यै तत्प्रतिष्ठाऽह्वथा इति विꣳशतिश्च ॥ २ ॥

परोक्षव्वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षय्यँद्ब्राह्मणास्तानेव तेन प्रीणात्यथो दक्षिणै-वाऽस्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति यद्वै यज्ञस्य क्रूरय्यँद्विलिष्टन्तदन्वाहार्येणा- ॥ ११ ॥ ऽन्वा-हरति तदन्वाहार्यस्याऽन्वाहार्यत्वन्देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति प्रजापतिर्देवेभ्यो यज्ञान्व्यादिश्य स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत्तमात्म-न्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवव्विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापति-मृद्ध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापते- ॥ १२ ॥ रास्यै देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन्तमन्वाहरन्त ततो देवा अभवन्पराऽसुरा

यस्यैववँ्विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैववँ्विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती प्रजापतेर्भागोऽसी- ॥ १३ ॥ त्याह प्रजापतिमेव भागधेयेन समर्द्धयत्यूर्जस्वान्पयस्वानित्याहोर्जमेवाऽस्मिन्पयो दधाति प्राणापानौ मे पाहि समान-व्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्तेऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रा-ऽमुष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्नमितःप्रदानँ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नाऽस्याऽमुष्मिँल्लोकेऽन्नङ्क्षीयते ॥ १४ ॥ अन्वाहार्येण प्रजापते- रसि ह्यमुष्मिँल्लोके पञ्चदश च ॥ ३ ॥

बर्हिषोऽहन्देवयज्यया प्रजावान्भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजास्सृजते नराशꣳसस्याऽहन्देवयज्यया पशुमान्भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशून-सृजत तेनैव पशून्थ्सृजतेऽग्नेस्स्विष्टकृतोऽहन्देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठाङ्गमेयमित्या-हाऽऽयुरेवाऽऽत्मन्धत्ते प्रति यज्ञेन तिष्ठति दर्शपूर्णमासयो- ॥ १५ ॥ र्वै देवा उज्जितिमनूदजय-न्दर्शपूर्णमासाभ्यामसुरानपाऽनुदन्ताऽग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवताना-य्यँजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते वाजवतीभ्याव्यूँहत्यन्नव्वै वाजोऽन्नमेवाऽव रुन्धे द्वाभ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयत ॥ १६ ॥ एव यज्ञन्दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञन्दुहे पुरस्ताच्चोपरिष्टाच्च रोहितेन त्वाऽग्निर्देवताङ्गमयत्वित्याहैते वै देवाश्वा ॥ १७ ॥ यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गल्लोकङ्गमयति वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनव्विँ मुञ्चति विष्णोश्शय्योँरहन्देवयज्यया यज्ञेन प्रतिष्ठा-ङ्गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवाऽन्ततः प्रति तिष्ठति सोमस्याऽहन्देवयज्यया सुरेता ॥ १८ ॥ रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन्धत्ते त्वष्टुरहन्देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते देवानां पत्नी-रग्निर्गृहपतिर्यज्ञस्य मिथुनन्तयोरहन्देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात्प्र-जापतिर्मिथुनेन ॥ १९ ॥ प्राऽजायत तस्मादेव यजमानो मिथुनेन प्र जायते वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणावि्ँत्तव्वेँद्यमविन्दन्त तद्वेदस्य वेदत्वय्यँद्यद्भ्रातृव्यस्या-ऽभिद्ध्यायेत्तस्य नाम गृह्णीयात्तदेवाऽस्य सर्व-व्वृँङ्क्ते घृतवन्तङ्कुलायिनꣳ रायस्पोषꣳ सहस्रिणव्वेँदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायाव्वाँजी जायते य एवव्वेँद ॥ २० ॥ दर्शपूर्णमासयोरुभयतो देवाश्वास्सुरेताः प्रजापतिर्मिथुनेनाऽऽप्नोत्यष्टौ च ॥ ४ ॥

ध्रुवाँव्वै रिच्यमानाँय्यँज्ञोऽनु रिच्यते यज्ञँय्यजमानो यजमानं प्रजा दध्रुवामाप्यायमानाँय्य-ज्ञोऽन्वा प्यायते यज्ञँय्यजमानो यजमानं प्रजा आ प्यायतान्ध्रुवा घृतेनेत्याह दध्रुवामेवाऽऽ प्याययति तामाप्यायमानाँय्यँज्ञोऽन्वा प्यायते यज्ञँय्यजमानो यजमानं प्रजाः प्रजापतेर्विभान्नाम लोकस्तस्मि-ँस्त्वा दधामि सह यजमानेनेत्या-॥ २१ ॥ हाऽयँव्वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनन्दधाति सह यजमानेन रिच्यत इव वा एतद्यद्यजते यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणात्येतावान् वै यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रति ष्ठापयत्ये-तद्वै सूयवसꣳ सोदकँय्यद्बर्हिश्चाऽऽपश्चैत- ॥ २२ ॥ द्यजमानस्याऽऽयतनँय्यद्वेदिर्यत्पूर्णपात्रमन्त-र्वेदि निनयति स्व एवाऽऽयतने सूयवसꣳ सोदकङ्कुरुते सदसि सन्मे भूया इत्याहाऽऽपो वै यज्ञ आपोऽमृतँय्यज्ञमेवाऽमृतमात्मन्धत्ते सर्वाणि वै भूतानि व्रतमुपयन्तमनूप यन्ति प्राच्यान्दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष वै दर्शपूर्णमासयोरवभृथो ॥ २३ ॥ यान्येवैनं भूतानि व्रतमुपयन्त-मनूपयन्ति तैरेव सहाऽवभृथमवैति विष्णुमुखा वै देवाश्छन्दोभिरिमाल्लँोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाल्लँोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षञ्जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरे-वेमाल्लँोकान् यथापूर्वमभि जयति ॥ २४ ॥ यजमानेनेति चैतदवभृथो दिशस्सप्त च ॥ ५ ॥

अगन्म सुवस्सुवरगन्मेत्याह सुवर्गमेव लोकमेति सन्दृशस्ते मा छिथ्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षीत्याह यथायजुरेवैतथ्सुभूरसि श्रेष्ठो रश्मीनामायुर्द्धा अस्यायुर्मे धेहीत्याहाऽऽशिषमेवै-तामा शास्ते प्र वा एषोऽस्माल्लोकाच्च्यवते यो ॥ २५ ॥ विष्णुक्रमान्क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान्क्रमेत य इमाल्लँोकान्भ्रातृव्यस्य सँव्विद्य पुनरिमल्लोकं प्रत्यवरोहेदित्येष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्य-माभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान्भ्रातृव्यस्य सँव्विद्य पुनरिमल्लोकं प्रत्यवरोहति स- ॥ २६ ॥ ञ्ज्योतिषाऽभूवमित्याहाऽस्मिन्नेव लोके प्रति तिष्ठत्यैन्द्रीमावृतमन्वावर्त इत्याहाऽसौ वा आदित्य इन्द्रस्तस्यैवाऽऽवृतमनु पर्यावर्तते दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्द्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते समहं प्रजया सं मया प्रजेत्याहाऽऽशिषं- ॥ २७ ॥ मेवैतामा शास्ते समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैतद्वसुमान् यज्ञो वसीयान्भूयासमित्याहाऽऽशिषमेवैतामा शास्ते बहु वै गार्हपत्यस्याऽन्ते मिश्रमिव चर्यत आग्निपावमानीभ्याङ्गार्हपत्यमुप तिष्ठते पुनात्येवाऽग्निं पुनीत आत्मानन्द्वाभ्यां प्रतिष्ठित्या अग्ने गृहपत इत्याह ॥ २८ ॥ यथायजुरेवैतच्छतꣳ हिमा इत्याह शतन्त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनङ्करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातस्स्यात्तेजस्व्येवाऽस्य ब्रह्मवर्चसी पुत्रो जायते

तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो ॥ २९ ॥ जातस्स्यात्तेज एवाऽस्मिन्ब्रह्मवर्चसन्दधाति यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा वि मुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनंय्युनक्ति प्रजापतिना वि मुञ्चति प्रतिष्ठित्या ईश्वरंव्वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव ॥ ३० ॥ वि सृजते शान्त्या अप्रदाहाय पराङ् वाव यज्ञ एति न नि वर्तते पुनर्यो वै यज्ञस्य पुनरालम्भवँ्विद्वान् यजते तमभि नि वर्तते यज्ञो बभूव स आ बभूवेत्याहैष वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरा लभतेऽनवरुद्धा वा एतस्य विराड्य आहिताग्निस्सन्नसभः पशवः खलु वै ब्राह्मणस्य सभेष्ट्वा प्राङुत्क्रम्य ब्रूयाद्गोमाꣳ अग्नेऽवि-माꣳ अश्वी यज्ञ इत्यव सभाꣳ रुन्धे प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायांव्वाजी जायते ॥ ३१ ॥
यस्समाशिषङ्गृहपत इत्याहाऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो व्रतमेव खलु वै चतुर्विꣳशतिश्च ॥ ६ ॥

देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतन्नः पुनातु वाच-स्पतिर्वाचमद्य स्वदाति नः । इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयंव्वृत्रंव्वध्यात् । वाजस्य नु प्रसवे मातरं महीमदितिन्नाम वचसा करामहे । यस्यामिदवँ्विश्वं भुवनमाविवेश तस्यान्नो देवस्सविता धर्म साविषत् । अप्स्व- ॥ ३२ ॥ न्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः । वायुर्वा त्वा मनुर्वा त्वा गन्धर्वास्सप्तविꣳशतिः । ते अग्रे अश्वमायुञ्जन्ते अस्मिञ्जवमाऽदधुः । अपान्नपादाशुहेमन् य ऊर्मिः ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनाऽयंव्वाजꣳ सेत् । विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमस्यङ्कौ न्यङ्कावभितो रथय्यौ दध्वान्तंव्वाताग्रमनु सञ्चरन्तौ दूरेहेतिरिन्द्रियावान्पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ॥ ३३ ॥ अप्सु न्यङ्कौ पञ्चदश च ॥ ७ ॥

देवस्याऽहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजञ्जेषन्देवस्याऽहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठन्नाकꣳ रुहेयमिन्द्राय वाचंव्वदतेन्द्रंव्वाजञ्जापयतेन्द्रो वाजमजयित् । अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजय । अर्वाऽसि सप्तिरसि वाज्यसि वाजिनो वाजन्धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वनस्स्कभ्नीत ॥ ३४ ॥ काष्ठा-ङ्गच्छत वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादय-ध्वन्तृप्ता यात पथिभिर्देवयानैः । ते नो अर्वन्तो हवनश्रुतो हवँ्विश्वे शृण्वन्तु वाजिनः । मितद्र-वस्सहस्रसा मेधसाता सनिष्यवः । महो ये रत्नꣳ समिथेषु जभ्रिरे शन्नो भवन्तु वाजिनो हवेषु । देवताता मितद्रवस्स्वर्काः । जम्भयन्तोऽहिंव्वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयव- ॥ ३५ ॥ न्नमीवाः । एष स्य वाजी क्षिपणिन्तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुन्दधिक्रा अनु सन्तवीत्व-त्पथामङ्काꣳस्यन्वापनीफणत् । उत स्माऽस्य द्रवतस्तुरण्यतः पर्णन्न वेरनु वाति प्रगर्धिनः । श्येन-स्येव ध्रजतो अङ्कसं परि दधिक्राव्णस्सहोर्जा तरित्रतः । आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशंभू । आ मा गन्तां पितरा ॥ ३६ ॥ मातरा चाऽऽ मा सोमो अमृतत्वाय

गम्यात् । वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजञ्जेष्यन्तो बृहस्पतेर्भागमव जिघ्रत वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजञ्जिगिवाꣳसो बृहस्पतेर्भागे नि मृढ्वमियँव्वस्सा सत्या सन्धाऽभूद्यामिन्द्रेण समधद्ध्वमजीजिपत वनस्पतय इन्द्रँव्वाजवूँवि मुच्यद्ध्वम् ॥ ३७ ॥ स्कुभ्नीत युयवन्नितरा द्विचत्वारिꣳशच्च ॥ ८ ॥

ख्षत्रस्योल्बमसि ख्षत्रस्य योनिरसि जाय एहि सुवो रोहाव रोहाव हि सुवरहन्नावुभयो-स्सुवो रोख्ष्यामि वाजश्च प्रसवश्चाऽपिजश्च क्रतुश्च सुवश्च मूर्द्धा च व्यश्नियश्चाऽऽन्त्यायनश्चाऽ-न्त्यश्च भौवनश्च भुवनश्चाऽधिपतिश्च । आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो ॥ ३८ ॥ यज्ञेन कल्पताँव्यानो यज्ञेन कल्पताञ्चख्षुर्यज्ञेन कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पतां मनो यज्ञेन कल्पता-ँव्वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पताँय्यज्ञो यज्ञेन कल्पताꣳ सुवर्देवाꣳ अगन्माऽमृता अभूम प्रजापतेः प्रजा अभूम समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषोऽन्नाय त्वाऽन्नाद्याय त्वा वाजाय त्वा वाजजित्यायै त्वाऽमृतमसि पुष्टिरसि प्रजननमसि ॥ ३९ ॥ अपानो वाजाय नव च ॥ ९ ॥

वाजस्येमं प्रसवस्सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः । वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः । स विराजं पर्येति प्रजानन्प्रजां पुष्टिँव्वर्द्धयमानो अस्मे । वाजस्येमां प्रसवश्शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदिथ्सन्तन्दापयतु प्रजानन्रयि- ॥ ४० ॥ श्च नस्सर्ववीरान्नि यच्छतु । अग्ने अच्छा वदेह नः प्रति नस्सुमना भव । प्र णो यच्छ भुवस्पते धनदा असि नस्त्वम् । प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः । प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः। अर्यमणं बृहस्पतिमिन्द्रन्दानाय चोदय । वाचँव्विष्णुꣳ सरस्वतीꣳ सवितारं- ॥ ४१ ॥ श्च वाजिनम् । सोमꣳ राजानँव्वरुणमग्निमन्वारभामहे । आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम् । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाऽग्नेस्त्वा साम्राज्येनाऽभि षिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाऽभि षिञ्चामि ॥ ४२ ॥ रयिꣳ सवितारꣳ षट्त्रिꣳशच्च ॥ १० ॥

अग्निरेकाख्षरेण वाचमुदजयदश्विनौ द्व्यख्षरेण प्राणापानावुदजयताँव्विष्णुस्त्र्यख्षरेण त्रीँल्लोकानुदजयथ्सोमश्चतुरख्षरेण चतुष्पदः पशूनुदजयत्पूषा पञ्चाख्षरेण पङ्क्तिमुदजयद्धाता षडख्षरेण षड़ृतूनुदजयन्मरुतस्सप्ताख्षरेण सप्तपदाꣳ शक्वरीमुदजयन्बृहस्पतिरष्टाख्षरेण गायत्री मुदजयन्मित्रो नवाख्षरेण त्रिवृतꣳ स्तोममुदजय- ॥ ४३ ॥ द्वरुणो दशाख्षरेण विराजमुदजय-दिन्द्र एकादशाख्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाख्षरेण जगतीमुदजयन्वसवस्त्रयोदशाख्षरेण त्रयोदशꣳ स्तोममुदजयन्रुद्राश्चतुर्दशाख्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाख्षरेण

पञ्चदशꣳ स्तोममुदजयन्नदितिष्षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्प्रजापतिस्सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् ॥ ४४ ॥ त्रिवृतꣳ स्तोममुदजयथ्षट्चत्वारिꣳशच्च ॥ ११ ॥

उपयामगृहीतोऽसि नृषदन्त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽस्यप्सुषदन्त्वा घृतसदंव्योमसदमिन्द्राय जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि पृथिविषदन्त्वाऽन्तरिक्षसदन्नाकसदमिन्द्राय जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा । ये ग्रहाः पञ्चजनीना येषान्तिस्रः परमजाः । दैव्यः कोशं- ॥४५॥ स्समुब्जितः । तेषांविशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा । अपाꣳ रसमुद्वयसꣳ सूर्यैरश्मिꣳ समाभृतम् । अपाꣳ रसस्य यो रसस्तंवो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा । अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः । स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायांयत्तनुवान्तनूमैरयत । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिः प्रजापतये त्वा ॥ ४६ ॥ कोशस्तनुवान्त्रयोदश च ॥ १२ ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः । अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानम् । अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये । इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरञ्चन जरसा ॥ ४७ ॥ मरते पतिः । नाऽहमिन्द्राणि रारण सख्युर्वृषाकपेरृते । यस्येदमप्यꣳ हविः प्रियन्देवेषु गच्छति । यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतान्नृम्णस्य मह्ना स जनास इन्द्रः । आ ते मह इन्द्रोत्युग्र समन्यवो यथ्समरन्त सेनाः । पताति दिद्युन्नर्यस्य बाहुवोर्मा ते ॥ ४८ ॥ मनो विष्वद्रियग्विचारीत् । मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते । नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः । आ तू भर माकिरेतत्परि ष्ठाद्विद्मा हि त्वा वसुपतिंवसूनाम् । इन्द्र यत्ते माहिनन्दत्रमस्त्यस्मभ्यन्तद्धर्यश्व ॥ ४९ ॥ प्र यन्धि । प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् । उभा हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणादोत सव्यात् । प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा । अस्मिन् यज्ञे बर्हिष्या निषद्याऽथा भव यजमानाय शंयोः । इन्द्रस्सुत्रामा स्ववाꣳ अवोभिस्सुमृडीको भवतु विश्ववेदाः । बाधतान्द्वेषो अभयङ्कृणोतु सुवीर्यस्य ॥ ५० ॥ पतयस्स्याम । तस्य वयꣳ सुमतौ यज्ञियस्याऽपि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाꣳ इन्द्रो अस्मे आराच्चिद्द्वेषस्सनुतर्युयोतु । रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृथ्सङ्गे समथ्सु वृत्रहा । अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु ॥ ५१ ॥ जरसा मा ते हर्यश्व सुवीर्यस्याऽद्धचेकञ्च ॥ १३ ॥

पाकयज्ञꣳ-सꣳश्रवाः परोख्षं बर्हिषोऽहन्ध्रुवामगन्मेत्याह देवसवितर्देवस्याऽहङ्ख्षत्रस्योल्बव्वाँजस्येमम-ग्निरेकांख्षरेणोपयामगृहीतोऽस्यन्वह मासास्त्रयोदश ॥ १३ ॥ पाकयज्ञं परोख्षन्ध्रुवाव्वि सृजते च नस्सर्वेवीरां पतय-स्स्यामैकपञ्चाशत् ॥ ५१ ॥ पाकयज्ञन्धन्वसु ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे सप्तमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिताया

॥ प्रथमकाण्डे अष्टमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

अनुमत्यै पुरोडाशमष्टाकपालन्निर्वपति धेनुर्दख्षिणा ये प्रत्यञ्चश्शम्याया अवशीयन्ते तन्नै-र्ऋतमेककपालङ्कृष्णव्वाँसः कृष्णतूषन्दख्षिणा वीहि स्वाहाऽऽहुतिञ्जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसस्स्वाहा नमो य इदञ्चकाराऽऽदित्यञ्चरुन्निर्वपति वरो दख्षिणाऽऽ-ग्रावैष्णवमेकादशकपालव्वाँमनो वही दख्षिणाऽग्नीषोमीय- ॥ १ ॥ मेकादशकपालꣳ हिरण्यन्द-ख्षिणैन्द्रमेकादशकपालमृषभो वही दख्षिणाऽऽग्नेयमष्टाकपालमैन्द्रन्दध्यृषभो वही दख्षिणैन्द्रा-ग्रन्द्वादशकपालव्वैँश्वदेवञ्चरुं प्रथमजो वथ्सो दख्षिणा सौम्यꣳ श्यामाकञ्चरुव्वाँसो दख्षिणा सर-स्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दख्षिणा ॥ २ ॥ अग्नीषोमीयश्चतुस्त्रिꣳशच्च ॥ १ ॥

आग्नेयमष्टाकपालन्निर्वपति सौम्यञ्चरुꣳ सावित्रन्द्वादशकपालꣳ सारस्वतञ्चरुं पौष्णञ्चरुं मारुतꣳ सप्तकपालव्वैँश्वदेवीमामिख्षान्द्यावापृथिव्यमेककपालम् ॥ ३ ॥ आग्नेयꣳ सौम्यं मारुतमष्टादश ॥ २ ॥

ऐन्द्राग्नमेकादशकपालं मारुतीमामिख्षाव्वाँरुणीमामिख्षाङ्कायमेककपालं प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः । मो षू ण इन्द्र पृथ्सु देवाऽस्तु स्म ते शुष्मिन्नवया । मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः । यद्ग्रामे यदरण्ये यथ्सभायाय्यँदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्याऽवयजनमसि स्वाहा । अक्रन्कर्म कर्म-कृतस्सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः ॥ ४ ॥ वयय्यँद्विꣳशतिश्च ॥ ३ ॥

अग्नयेऽनीकवते पुरोडाशमष्टाकपालन्निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यस्सान्तपनेभ्यो मद्ध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यस्सर्वासान्दुग्धे सायञ्चरुं पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत । वस्नेव वि क्रीणावहा इषमूर्जꣳ शतक्रतो । देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हरा निहार- ॥ ५ ॥ न्नि हरामि ते । मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालन्निर्वपति साकꣳ सूर्ये-णोद्यताऽऽग्नेयमष्टाकपालन्निर्वपति सौम्यञ्चरुꣳ सावित्रन्द्वादशकपालꣳ सारस्वतञ्चरुं पौष्णञ्चरु-मैन्द्राग्नमेकादशकपालमैन्द्रञ्चरुँवैश्वकर्मणमेककपालम् ॥ ६ ॥ हरा निहारन्त्रिꣳशच्च ॥ ४ ॥

सोमाय पितृमते पुरोडाशꣳ षट्कपालन्निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्नि-ष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमेतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दद्ध्वꣳ सुसन्दृशन्त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुरस्स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी । ॥ ७ ॥ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्व-भानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी । अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः । परेत पितरस्सोम्या गंभीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति । मनो न्वा हुवामहे नाराशꣳसेन स्तोमेन पितृणाञ्च मन्मभिः । आ ॥ ८ ॥ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यन्दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवव्रातꣳ सचेमहि । यदन्तरिक्षं पृथिवीमुत द्यांय्यन्मातरं पितरँवा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥ ९ ॥ हरी मन्मभिरा चतुश्चत्वारिꣳशच्च ॥ ५ ॥

प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तय्यावन्तो गृह्यास्स्मस्तेभ्यः कमकरं पशूनाꣳ श-र्माऽसि शर्म यजमानस्य शर्म मे यच्छैक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तञ्जुषस्वैष ते रुद्र भागस्सह स्वस्राऽम्बिकया तञ्जुषस्व भेषजङ्गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषज- ॥ १० ॥ य्यथाऽसति । सुगं मेषाय मेष्या अवाऽम्ब रुद्रमदिमह्यव देवन्त्र्यम्बकम् । यथा नश्श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात् । त्र्यंबकय्यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । एष ते रुद्र भागस्तञ्जुषस्व तेनाऽवसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥ ११ ॥ सुभेषजमिहि त्रीणि च ॥ ६ ॥

ऐन्द्राग्नन्द्वादशकपालँवैश्वदेवञ्चरुमिन्द्राय शुनासीराय पुरोडाशन्द्वादशकपालँवायव्यं पयस्सौर्यमेककपालन्द्वादशगवꣳ सीरन्दक्षिणाऽऽग्नेयमष्टाकपालन्निर्वपति रौद्रङ्गावीधुकञ्चरुमै-न्द्रन्दधि वारुणय्यवमयञ्चरुँवहिनी धेनुर्दक्षिणा ये देवाः पुरस्सदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चाथ्सदस्सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते

नोंऽवन्तु तेभ्यो ॥ १२ ॥ नमस्तेभ्यस्स्वाहा समूढꣳ रख्षस्सन्दग्धꣳ रख्षं इदमहꣳ रख्षोऽभि सन्दं-हाम्यग्नयें रख्षोघ्ने स्वाहां यमायं सवित्रे वरुणाय बृहस्पतंये दुवस्वते रख्षोघ्ने स्वाहां प्रष्टिवाही रथो दख्षिंणा देवस्यं त्वा सवितुः प्रसवेंऽश्विनोंर्बाहुभ्यां पूष्णो हस्तांभ्याꣳ रख्षसो वधञ्जुंहोमि हतꣳ रख्षोऽवंधिष्म रख्षो यद्वस्ते तद्दख्षिंणा ॥ १३ ॥ तेभ्यः पञ्चचत्वारिꣳशच्च ॥ ७ ॥

धात्रे पुरोडाशन्द्वादंशकपालन्निर्वंपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिंनीवाल्यै चरुङ्कुहै चरुं मिथुनौ गावौ दख्षिंणाऽऽग्नावैष्णवमेकांदशकपालन्निर्वंपत्यैन्द्रावैष्णवमेकांदशकपालव्वैष्णवन्त्रि-कपालव्वांमनो वही दख्षिंणाऽग्नीषोमीयमेकांदशकपालन्निर्वंपतीन्द्रासोमीयमेकांदशकपालꣳ सौ-म्यञ्चरुं बभ्रुर्दख्षिंणा सोमापौष्णञ्चरुन्निर्वंपत्यैन्द्रापौष्णञ्चरुं पौष्णञ्चरुꣳ श्यामो दख्षिंणा वैश्वान-रन्द्वादंशकपालन्निर्वंपति हिरंण्यन्दख्षिंणा वारुणय्यंवमयंञ्चरुमश्वो दख्षिंणा ॥ १४ ॥ वैश्वानरन्द्वा-दंशकपालन्निरष्टौ चं ॥ ८ ॥

बार्हस्पत्यञ्चरुन्निर्वंपति ब्रह्मणों गृहे शितिपृष्ठो दख्षिंणैन्द्रमेकांदशकपालꣳ राजन्यंस्य गृह ऋषभो दख्षिंणाऽऽदित्यञ्चरुम्महिंष्यै गृहे धेनुर्दख्षिंणा नैरृतञ्चरुं परिवृक्त्यै गृहे कृष्णानांव्व्री-हीणान्नखनिंर्भिन्नङ्कृष्णा कूटा दख्षिंणाऽऽग्नेयमष्टाकंपालꣳ सेनान्यौं गृहे हिरंण्यन्दख्षिंणा वारु-णन्दशंकपालꣳ सूतस्यं गृहे महानिंरष्टो दख्षिंणा मारुतꣳ सप्तकंपालङ्ग्रामण्यौं गृहे पृश्निर्दख्षिंणा सावित्रन्द्वादंशकपाल- ॥ १५ ॥ ङ्ख्षत्तुर्गृह उंपद्ध्वस्तो दख्षिंणाऽऽश्विनन्द्विकपालꣳ सङ्ग्रहीतुर्गृहे संवात्यौ दख्षिंणा पौष्णञ्चरुं भांगदुघस्यं गृहे श्यामो दख्षिंणा रौद्रङ्गांवीधुकञ्चरुमंख्षावापस्यं गृहे शबल उद्वांरो दख्षिंणेन्द्राय सुत्राम्णें पुरोडाशमेकांदशकपालं प्रति निर्वंपतीन्द्रांयाꣳहोमुचेऽयन्नो राजां वृत्रहा राजां भूत्वा वृत्रव्वंद्ध्यान्मैत्राबार्हस्पत्यं भंवति श्वेतायै श्वेतवंथ्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वंत्थे ॥ १६ ॥ पात्रे चतुंस्स्रक्तौ स्वयमवपन्नायै शाखांयै कर्णाꣳश्चाकंर्णाꣳश्च तण्डुलान् वि चिंनुयाद्ये कर्णास्स पयंसि बार्हस्पत्यो येऽकंर्णास्स आज्यें मैत्रस्स्वयंकृता वेदिर्भंवति स्वयन्दिंनं बर्हिस्स्वयंकृत इद्ध्मस्सैव श्वेता श्वेतवंथ्सा दख्षिंणा ॥ १७ ॥ द्वादंशकपालमाश्वंत्थे त्रयंस्त्रिꣳशच्च ॥ ९ ॥

अग्नयें गृहपतंये पुरोडाशंमष्टाकंपालन्निर्वंपति कृष्णानांव्व्रीहीणाꣳ सोमांय वनस्पतंये श्या-माकञ्चरुꣳ संवित्रे सत्यप्रंसवाय पुरोडाशन्द्वादंशकपालमाशूनांव्व्रीहीणाꣳ रुद्रायं पशुपतंये गावीधु-कञ्चरुं बृहस्पतंये वाचस्पतंये नैवारञ्चरुमिन्द्रांय ज्येष्ठायं पुरोडाशमेकांदशकपालं महाव्रीहीणां मित्रायं सत्यायाऽऽम्बानांञ्चरुव्वरुंणाय धर्मंपतये यवमयंञ्चरुꣳ संविता त्वां प्रसवानाꣳ सुवतामग्नि-र्गृहपंतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां ॥ १८ ॥ बृहस्पतिर्वाचामिन्द्रों ज्येष्ठानां मित्रस्सत्या-नांव्वरुंणो धर्मंपतीनांय्ये देंवा देवसुवस्स्थ त इममांमुष्यायणमंनमित्रायं सुवद्ध्वं महते ख्षत्रायं महत आधिंपत्याय महते जानंराज्यायैष वों भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा प्रति

त्यन्नाम राज्यमधायि स्वान्तनुवँव्वरुणो अशिश्रेच्छुचैर्मित्रस्य व्रत्या अभूमाऽमन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याऽभूवन्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्युं त्रितो जरिमाणन्न आनड्विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ॥ १९ ॥ पशूनाँव्व्राताः पञ्चविꣳशतिश्च ॥ १० ॥

अर्थेतस्स्थाऽपां पतिरसि वृषाऽस्यूर्मिर्वृषसेनोऽसि व्रजख्षितस्स्थ मरुतामोजस्स्थ सूर्यवर्चसस्स्थ सूर्यत्वचसस्स्थ मान्दास्स्थ वाशास्स्थ शक्वरीस्स्थ विश्वभृतस्स्थ जनभृतस्स्थाऽग्नेस्तेजस्यास्स्थाऽपामोषधीनाꣳ रसस्स्थाऽपो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः । राष्ट्रदास्स्थ राष्ट्रन्दत्त स्वाहा राष्ट्रदास्स्थ राष्ट्रममुष्मै दत्त ॥ २० ॥ अत्येकादश च ॥ ११ ॥

देवीरापस्सं मधुमतीर्मधुमतीभिस्सृज्यद्ध्वं महि वर्चः ख्षत्रियाय वन्वाना अनाधृष्टास्सीदतोर्जस्वतीर्महि वर्चः ख्षत्रियाय दधतीरनिभृष्टमसि वाचो बन्धुस्तपोजास्सोमस्य दात्रमसि शुक्रा वश्शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणाऽमृता अमृतेन स्वाहा राजसूयाय चितानाः । सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः । पस्त्यासु चक्रे वरुणस्सधस्थमपाꣳ शिशु-॥ २१ ॥ र्मातृतमास्वन्तः । ख्षत्रस्योल्बमसि ख्षत्रस्य योनिरस्याविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्याँव्विश्यस्मिन्राष्ट्रे महते ख्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेन्द्रस्य ॥ २२ ॥ वज्रोऽसि वार्त्रघ्नस्त्वयाऽयँव्वृत्रँव्वद्ध्याच्छत्रुबाधनास्स्थ पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात हिरण्यवर्णावुषसाँव्विरोकेऽयस्स्थूणावुदितौ सूर्यस्याऽऽरोहतँव्वरुण मित्र गर्तन्ततश्चख्षाथामदितिन्दितिञ्च ॥ २३ ॥ शिशुरिन्द्रस्यैकचत्वारिꣳशच्च ॥ १२ ॥

समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृथ्स्तोमो रथन्तरꣳ सामाऽग्निर्देवता ब्रह्म द्रविणमुग्रामा तिष्ठ त्रिष्टुप्त्वा छन्दसामवतु पञ्चदशस्स्तोमो बृहथ्सामेन्द्रो देवता ख्षत्रन्द्रविणँव्विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशस्स्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविणमुदीचीमा तिष्ठाऽनुष्टुप्त्वा ॥ २४ ॥ छन्दसामवत्वेकविꣳशस्स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलन्द्रविणमूर्द्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाकररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणमीदृङ्चाऽन्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चा- ॥ २५ ॥ ऽत्यꣳहाः । अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय

स्वाहा॒ घोषा॑य॒ स्वाहा॒ श्लोका॑य॒ स्वाहाऽꣳशा॑य॒ स्वाहा॒ भगा॑य॒ स्वाहा॒ ख्षेत्र॑स्य॒ पत॑ये॒ स्वाहा॑ पृथि॒व्यै
स्वाहा॒ऽन्तरि॑ख्षाय॒ स्वाहा॑ दि॒वे स्वाहा॒ सूर्या॑य॒ स्वाहा॑ च॒न्द्रम॑से॒ स्वाहा॒ नख्ष॑त्रेभ्य॒स्स्वाहा॒ऽद्भ्य-
स्स्वाहौष॑धीभ्य॒स्स्वाहा॒ व॒न॒स्पति॑भ्य॒स्स्वाहा॑ च॒रा॒च॒रेभ्य॒स्स्वाहा॑ परिप्ल॒वेभ्य॒स्स्वाहा॑ सरीसृ॒पेभ्य-
स्स्वाहा॑ ॥ २६ ॥ अ॒नु॒ष्टु॒ब्स्वर्त॒पाश्वं सरीसृ॒पेभ्य॒स्स्वाहा॑ ॥ १३ ॥

सोम॑स्य॒ त्विषि॑रसि॒ तवे॑व मे॒ त्विषि॑र्भूयादमृ॒तम॑सि मृ॒त्योर्मा॑ पाहि दि॒द्योन्मा॑ पाह्यवे॑ष्टा
द॒न्द॒शूका॒ निर॑स्तं॒ नमु॑चे॒श्शिरः॑ । सोमो॒ राजा॒ वरु॑णो दे॒वा ध॑र्म॒सुव॑श्च॒ ये । ते ते॒ वाचꣳ॑ सुवन्ता॒न्ते ते॑
प्रा॒णꣳ सु॑वन्ता॒न्ते ते॒ चख्षु॑स्सुवन्ता॒न्ते ते॒ श्रोत्रꣳ॑ सुवन्ताꣳ॒ सोम॑स्य त्वा द्यु॒म्नेना॒ऽभि षि॑ञ्चाम्य॒ग्ने-
॥ २७ ॥ स्तेज॑सा सूर्य॑स्य॒ वर्च॒सेन्द्र॑स्येन्द्रि॒येण॑ मि॒त्रावरु॑णयोर्वी॒र्ये॑ण म॒रुता॒मोज॑सा ख्ष॒त्राणां॑-
ङ्ख्ष॒त्रप॑तिरस्यति॑ दि॒वस्पा॑हि स॒मा॒व॒वृ॒त्रन्न॒धरा॒गुदी॑चीरहि॑ं बु॒द्ध्नियमनु॑ स॒ञ्चर॑न्ती॒स्ताः पर्व॑तस्य
वृ॒ष॒भस्य॑ पृ॒ष्ठे नाव॑श्चरन्ति स्व॒सिच॑ इयानाः । रुद्र॒ यत्ते॒ क्रयी॒ पर॒न्नाम॒ तस्मै॑ हु॒तम॑सि य॒मेष्ट॑मसि ।
प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव । यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यꣳ
स्या॑म॒ पत॑यो रयी॒णाम् ॥ २८॥ अ॒ग्नेस्तैका॑दश च ॥ १४ ॥

इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्नस्त्वया॒ऽयव्वृ॒त्रव्वँ॑द्ध्यान्मि॒त्रावरु॑णयोस्त्वा प्रशा॒स्त्रोः प्र॒शिषा॑ युन-
ज्मि य॒ज्ञस्य॒ योगे॑न॒ विष्णोः॒ क्रमो॑ऽसि॒ विष्णोः॑ क्रा॒न्तम॑सि॒ विष्णो॒र्विक्रा॑न्तमसि म॒रुतां॑ प्रस॒वे जे॑ष-
मा॒प्तं मन॒स्सम॒हमि॑न्द्रि॒येण॑ वी॒र्ये॑ण प॒शू॒नां म॒न्युर॑सि॒ तवे॑व मे म॒न्युर्भू॑यान्नमो॑ मा॒त्रे पृ॑थि॒व्यै माऽहं
मा॒तरं॑ पृथि॒वीꣳ हिꣳसिषं॒ मा ॥ २९ ॥ मां मा॒ता पृ॑थि॒वी हिꣳसी॒दियं॑द॒स्यायु॑रस्यायु॑र्मे धेह्यू॒र्गस्यूर्जं॑ मे
धे॒हि॒ यु॒ङ्ङ॑सि॒ वर्चो॑ऽसि॒ वर्चो॒ मयि॑ धेह्य॒ग्नये॑ गृ॒हप॑तये॒ स्वाहा॒ सोमा॑य॒ वन॒स्पत॑ये॒ स्वाहेन्द्र॑स्य॒ बला॑य॒
स्वाहा॑ म॒रुता॒मोज॑से॒ स्वाहा॑ हꣳ॒सश्शु॑चि॒षद्व॒सुर॑न्तरिख्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र-
स॑दृ॒त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तं बृ॒हत् ॥ ३० ॥ हि॒ꣳसि॒षं म॑र्त॒जास्त्रीणि॑ च ॥ १५ ॥

मि॒त्रो॑ऽसि॒ वरु॑णोऽसि॒ सम॒हव्वि॒श्वैर्दे॒वैः ख्ष॒त्रस्य॒ नाभि॑रसि ख्ष॒त्रस्य॒ योनि॑रसि स्यो॒नामा
सी॑द सु॒षदा॒मा सी॑द॒ मा त्वा॑ हिꣳसी॒न्मा मा॑ हिꣳसी॒न्नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॑स्वा
साम्रा॑ज्याय सु॒क्रतु॒र्ब्रह्मा(३)न्त्वꣳ रा॑जन्ब्र॒ह्माऽसि॑ सवि॒ताऽसि॑ स॒त्यस॑वो॒ ब्रह्मा(३)न्त्वꣳ रा॑जन्ब्र-
ह्माऽसीन्द्रो॑ऽसि स॒त्यौजा॒ ॥ ३१ ॥ ब्रह्मा(३)न्त्वꣳ रा॑जन्ब्र॒ह्माऽसि॑ मि॒त्रो॑ऽसि सु॒शेवो॒ ब्रह्मा(३)-
न्त्वꣳ रा॑जन्ब्र॒ह्माऽसि॒ वरु॑णोऽसि स॒त्यध॑र्मेन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्नस्तेन॑ मे रद्ध्य॒ दिशो॒ऽभ्य॑यꣳ रा-
जाऽभू॒त्सुश्लो॒काँ(४) सुम॑ङ्ग॒लाँ(४) स॒त्यरा॒जा(३)न् । अ॒पान्नप्त्रे॒ स्वाहो॒र्जो नप्त्रे॒ स्वाहा॒ऽग्नये॑
गृ॒हप॑तये॒ स्वाहा॑ ॥ ३२ ॥ स॒त्यौजा॑श्चत्वारि॒ꣳशच्च॑ ॥ १६ ॥

आ॒ग्नेयम॒ष्टाक॑पाल॒न्निर्व॑पति॒ हिर॑ण्य॒न्दख्षि॑णा सारस्व॒तश्च॒रुव्वँ॑त्स॒तरी दख्षि॑णा सावि॒त्रन्द्वा-
द॑शकपालमुपद्ध्व॒स्तो दख्षि॑णा पौ॒ष्णश्च॒रुꣳ श्या॒मो दख्षि॑णा बार्हस्पत्यश्च॒रुꣳ शि॑तिपृ॒ष्ठो दख्षि॑-
णै॒न्द्रमेका॑दशकपालमृष॒भो दख्षि॑णा वारु॒णन्दश॑कपालं म॒हानि॑रष्टो॒ दख्षि॑णा सौम्यश्च॒रुं

बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवन्त्रिकपालँव्वामनो दक्षिणा ॥ ३३ ॥ आग्नेयꣳ हिरण्यꣳ सारस्वतन्द्विचत्वारिꣳशत् ॥ १७ ॥

सद्यो दीक्षयन्ति सद्यस्सोमङ्क्रीणन्ति पुण्डरिस्रजां प्र यच्छति दशभिर्वथ्सतरैस्सोमङ्क्रीणाति दशपेयो भवति शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यान्द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छावाकायाऽनड्वाहमग्नीधे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति ॥ ३४॥ वारवन्तीयश्चत्वारि च ॥ १८ ॥

आग्नेयमष्टाकपालन्निर्वपति हिरण्यन्दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवश्चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षाँव्वशा दक्षिणा बार्हस्पत्यश्चरुꣳ शितिपृष्ठो दक्षिणाऽऽदित्यां मल्हाङ्गर्भिणीमा लभते मारुतीं पृश्निं पष्ठौहीमश्विभ्यां पूष्णे पुरोडाशन्द्वादशकपालन्निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशन्द्वादशकपालन्तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ॥ ३५ ॥ आग्नेयꣳ हिरण्यमैन्द्रमृषभो वैश्वदेवं पिशङ्गी बार्हस्पत्यमादित्याꣳ सप्तचत्वारिꣳशत् ॥१९॥

आग्नेयमष्टाकपालन्निर्वपति सौम्यश्चरुꣳ सावित्रन्द्वादशकपालं बार्हस्पत्यश्चरुन्त्वाष्ट्रमष्टाकपालँव्वैश्वानरन्द्वादशकपालन्दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतश्चरुन्निर्वपति पौष्णश्चरुं मैत्रश्चरुँव्वारुणश्चरुङ्क्षैत्रपत्यश्चरुमादित्यश्चरुमुत्तरो रथवाहनवाहो दक्षिणा ॥ ३६ ॥ आग्नेयꣳ सौम्यं बार्हस्पत्यश्चतुस्त्रिꣳशत् ॥ २० ॥

स्वाद्वीन्त्वा स्वादुना तीव्रान्तीव्रेणाऽमृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना । वायुः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुतः । इन्द्रस्य युज्यस्सखा । कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वँव्वियूय । इहेहैषाङ्कृणुत भोजनानि ये बर्हिषो नमोवृक्तिन्न जग्मुः । आश्विनन्धूम्रमा लभते सारस्वतं मेषमैन्द्रमृषभमैन्द्रमेकादशकपालन्निर्वपति सावित्रन्द्वादशकपालँव्वारुणन्दशकपालꣳ सोमप्रतीकाः पितरस्तृप्णुत वडबा दक्षिणा ॥ ३७ ॥ भोजनानि षड्विꣳशतिश्च ॥ २१ ॥

अग्नाविष्णू महि तद्वां महित्वँव्वीतङ्घृतस्य गुह्यानि नाम । दमेदमे सप्त रत्ना दधाना प्रति वाञ्जिह्वा घृतमा चरण्येत् । अग्नाविष्णू महि धाम प्रियँव्वांव्वीथो घृतस्य गुह्या जुषाणा । दमेदमे सुष्टुतीर्वावृधाना प्रति वाञ्जिह्वा घृतमुच्चरण्येत् । प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीना-

मवित्र्यवतु । आ नो दिवो बृहतः ॥ ३८ ॥ पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवन्देवी जुजुषाणा घृताचीं शग्मान्नो वाचमुशती शृणोतु । बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे । एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम् । बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस- ॥ ३९ ॥ तत्प्रजात तदस्मासु द्रविणन्धेहि चित्रम् । आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मद्ध्वा रजाꣳसि सुक्रतू । प्र बाहवा सिसृतञ्जीवसे न आ नो गव्यूतिमुक्षतङ्घृतेन । आ नो जने श्रवयतय्ँयुवाना श्रुतं मे मित्रावरुणा हवेमा । अग्निव्ँवः पूर्व्यङ्गिरा देवमीडे वसूनाम् । सपर्यन्तः पुरुप्रियं मित्रन्न क्षेत्रसाधसम् । मक्षू देववतो रथ- ॥ ४० ॥ श्शूरो वा पृथ्सु कासु चित् । देवानाय्ँय इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् । न यजमान रिष्यसि न सुन्वान न देवयो । असदत्र सुवीर्यमुत त्यदाश्वश्वियम् । नकिष्टङ्कर्मणा नशन्न प्र योषन्न योषति । उप क्षरन्ति सिन्धवो मयोभुव ईजानञ्च यक्ष्यमाणञ्च धेनवः । पृणन्तञ्च पपुरिञ्च ॥ ४१ ॥ श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः । सोमारुद्रा वि वृहतव्ँविषूचीममीवा या नो गयमाविवेश । आरे बाधेथान्निर्ऋतिं पराचैः कृतञ्चिदेनः प्र मुमुक्तमस्मत् । सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतय्ँयन्नो अस्ति तनूषु बद्धङ्कृतमेनो अस्मत् । सोमापूषणा जनना रयीणाञ्जनना दिवो जनना पृथिव्याः । जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् । इमौ देवौ जायमानौ जुषन्तेमौ तमाꣳसि गूहतामजुष्टा । आभ्यामिन्द्रः पक्वमामास्वन्तस्सोमापूषभ्याञ्जनदुस्रियासु ॥ ४२ ॥ बृहतश्शवसा रथः पपुरिञ्च दिवो जनना पञ्चविꣳशतिश्च ॥ २२ ॥

अनुमत्या आग्नेयमैन्द्राग्नमग्नये सोमाय प्रतिपूरुषमैन्द्राग्नन्धात्रे बार्हस्पत्यमग्नयेऽर्थेतो देवीस्समिधꣳ सोमस्येन्द्रस्य मित्र आग्नेयꣳ सद्य आग्नेयमाग्नेयꣳ स्वाद्वीन्त्वाऽग्नाविष्णू द्वाविꣳशतिः ॥ २२ ॥ अनुमत्यै यथाऽसति देवीरापो मित्रोऽसि शूरो वा द्विचत्वारिꣳशत् ॥ ४२ ॥ अनुमत्या उस्रियासु ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां प्रथमकाण्डे अष्टमः प्रश्नस्समाप्तः ॥

॥ इति प्रथमं काण्डम् ॥



## ॥ प्रथमकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | १४ | २८ | १५३० |
| २ | १४ | ३४ | १६९० |
| ३ | १४ | ३१ | १५६७ |
| ४ | ४६ | ५४ | १८१० |
| ५ | ११ | ५१ | २७१७ |
| ६ | १२ | ५१ | २५०९ |
| ७ | १३ | ५१ | २६५५ |
| ८ | २२ | ४२ | २०९४ |

## ॥ संहतसङ्ख्या ॥

| | | | |
|---|---|---|---|
| ८ | १४६ | ३४२ | १६५७२ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ द्वितीयं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

वायव्यꣳ श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिङ्गमयति भवत्येवाऽतिक्षिप्रा देवतेत्याहुस्सैनमीश्वरा प्रदह इत्येतमेव सन्तं-व्वायवे नियुत्वत आ लभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव ॥ १ ॥ वायवे नियुत्वत आ लभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै प्रजा नस्योता नि यच्छति ग्राम्येव भवति नियुत्वते भवति ध्रुवा एवाऽस्मा अनपगाः करोति वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्य प्रजाया ॥ २ ॥ अप क्रामतो योऽलं प्रजायै सन्प्रजान्न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजाव्वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप ॥ ३ ॥ धावति स एवाऽस्मिन्प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव प्रजापतिर्वा इदमेक आसीथ्सोऽकामयत प्रजाः पशून्थ्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्राऽगृह्णात्ततोऽजस्तूपरस्समभवत्तꣳ स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत यः प्रजाकामः ॥ ४ ॥पशुकामस्स्याथ्स एतं प्राजापत्यमजन्तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै प्रजां पशून्प्र जनयति यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूपय्यत्तूपरस्तदश्वानाय्यँदन्यतोदन्तद्गवाय्यँदव्या इव शफास्तद-वीनाय्यँदजस्तदजानामेतावन्तो वै ग्राम्याः पशवस्ता- ॥ ५ ॥ न्रूपेणैवाऽव रुन्धे सोमापौष्णन्त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभि जायेते ऊर्जं पुष्टिन्तृतीयस्सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मै पशून्प्र जनयतस्सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवाऽस्मै रेतो दधाति पूषा पशून्प्र जनयत्यौदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवाऽस्मा ऊर्जं पशूनव रुन्धे ॥ ६ ॥ अप्रदाहाय भवत्येव प्रजाया आमयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप प्रजाकाम-स्तान् यूपस्त्रयोदश च ॥ १ ॥

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराचीरायन्ता वरुणमगच्छन्ता अन्वैत्ताः पुन-
रयाचत ता अस्मै न पुनरददात्सोऽब्रवीद्वरँव्वृणीष्वाऽथ मे पुनर्देहीति तासाँव्वरमाऽलभत स कृष्ण
एकशितिपादभवद्यो वरुणगृहीतस्स्यात्स एतँव्वारुणङ्कृष्णमेकशितिपादमा लभेत वरुण- ॥ ७ ॥
मेव स्वेन भागधेयेनोप धावति स एवैनँव्वरुणपाशान्मुञ्चति कृष्ण एकशितिपाद्भवति वारुणो ह्येष
देवतया समृद्ध्यै सुवर्भानुरासुरस्सूर्यन्तमसाऽविद्ध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्य यत्प्रथमन्त-
मोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत्तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृ-
न्तन्त्साऽविर्वशा ॥ ८ ॥ समभवत्ते देवा अब्रुवन्देवपशुर्वा अयꣳ समभूत्कस्मा इममा लप्स्यामह
इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविँव्वशामादित्येभ्यः कामायाऽऽलभन्त ततो वा
अप्रथत पृथिव्यजायन्तौषधयो यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविँव्व-
शामादित्येभ्यः कामाया- ॥ ९ ॥ ऽऽ लभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावति त
एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्त्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्ति-
मैच्छन्तस्मा एता मलूहा आऽलभन्ताऽऽग्नेयीङ्कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यान्ता-
भिरेवाऽस्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एता मलूहा आ लभेता- ॥ १० ॥
ऽऽग्नेयीङ्कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यामेता एव देवतास्स्वेन भागधेयेनोप धावति
ता एवाऽस्मिन्ब्रह्मवर्चसन्दधति ब्रह्मवर्चस्येव भवति वसन्ता प्रातराग्नेयीङ्कृष्णग्रीवीमा लभेत ग्रीष्मे
मध्यन्दिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेतां बार्हस्पत्यान्त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता
प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवा- ॥ ११ ॥ ऽव रुन्धे सँव्वत्सरं
पर्यालभ्यन्ते सँव्वत्सरो वै ब्रह्मवर्चसस्य प्रदाता सँव्वत्सर एवाऽस्मै ब्रह्मवर्चसं प्र यच्छति
ब्रह्मवर्चस्येव भवति गर्भिणयो भवन्तीन्द्रियँव्वै गर्भ इन्द्रियमेवाऽस्मिन्दधति सारस्वतीं मेषीमा
लभेत य ईश्वरो वाचो वदितोस्सन्वाचन्न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति
सैवाऽस्मि- ॥ १२ ॥ न्वाचन्दधाति प्रवदिता वाचो भवत्यपन्नदती भवति तस्मान्मनुष्यास्स-
र्वाँव्वाचँव्वदन्त्याग्नेयङ्कृष्णग्रीवमा लभेत सौम्यं बभ्रुञ्ज्योगामयाव्यग्निँव्वा एतस्य शरीरङ्गच्छति
सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवाऽस्य शरीरन्निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति
जीवत्येव सौम्यं बभ्रुमा लभेताऽऽग्नेयङ्कृष्णग्रीवं प्रजाकामस्सोमो ॥ १३ ॥ वै रेतोधा अग्निः प्रजानां
प्रजनयिता सोम एवाऽस्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजामाग्नेयङ्कृष्णग्रीवमा लभेत
सौम्यं बभ्रुँय्यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवाऽस्मिन्तेन दधाति
यत्सौम्यो ब्रह्मवर्चसन्तेन कृष्णग्रीव आग्नेयो भवति तम एवाऽस्मादप हन्ति श्वेतो भवति ॥ १४ ॥
रुचमेवाऽस्मिन्दधाति बभ्रुस्सौम्यो भवति ब्रह्मवर्चसमेवाऽस्मिन्त्विषिन्दधात्याग्नेयङ्कृष्णग्रीवमा
लभेत सौम्यं बभ्रुमाग्नेयङ्कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणस्सौम्यो राजन्योऽभितः-

स्सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णात्येकधा समावृङ्क्ते पुर एनन्दधते ॥ १५ ॥ लभेत वरुणव्वैशौतामविंवशामादित्येभ्यः कामाय मलूहा आ लभेत तान्येव सैवाऽस्मिन्थ्सोमश्श्वेतो भवति त्रिचत्वारिंशच्च ॥ २ ॥

देवासुरा एषु लोकेष्वस्पर्द्धन्त स एतवॅंविष्णुर्वामनमपश्यत्तꣳ स्वायै देवताया आऽलभत ततो वै स इमाल्लोकानभ्यजयद्वैष्णवव्वामनमा लभेत स्पर्द्धमानो विष्णुरिव भूत्वेमाल्लोकानभि जयति विषम आ लभेत विषमा इव हीमे लोकास्समृद्ध्या इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत सङ्ग्रामे ॥ १६ ॥ सय्यंत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामञ्जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ सङ्ग्राममिन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै सजातान्प्र यच्छति ग्राम्येव भवति यदृषभस्तेनै- ॥ १७ ॥ न्द्रो यत्पृश्निस्तेन मारुतस्समृद्ध्यै पश्चात्पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवाऽस्मै विशङ्करोति सौम्यं बभ्रुमा लभेताऽन्नकामस्सौम्यव्वा अन्नꣳ सोममेव स्वेन भागधेयेनोप धावति स एवाऽस्मा अन्नं प्र यच्छत्यन्नाद एव भवति बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै सौम्यं बभ्रुमा लभेत यमलꣳ ॥ १८ ॥ राज्याय सन्तꣳ राज्यन्नोपनमेथ्सौम्यव्वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवाऽस्मै राज्यं प्र यच्छत्युपैनꣳ राज्यन्नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रन्तीर्त्वा प्रतिष्ठाङ्गच्छतीन्द्रायाऽभिमातिघ्ने ललामं प्राशृङ्गमा ॥ १९ ॥ लभेत यः पाप्मना गृहीतस्स्यात्पाप्मा वा अभिमातिरिन्द्रमेवाऽभिमातिहनꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मात्पाप्मानमभिमातिं प्र णुदत इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यन्नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै वज्रं प्र यच्छति स एनव्वज्रो भूत्या इन्ध उपैनꣳ राज्यन्नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥ २० ॥ सङ्ग्रामे तेनाऽलमभिमातिघ्ने ललामं प्राशृङ्गमैनं पञ्चदश च ॥ ३ ॥

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एतान्दशर्षभामाऽलभन्त तयैवाऽस्मिन्नुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतान्दशर्षभामा लभेताऽमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ब्रह्मवर्चस्येव भवति वसन्ता प्रातस्त्रीँल्ललामाना लभेत ग्रीष्मे मद्ध्यन्दिने ॥ २१ ॥ त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान्त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मद्ध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाऽव रुन्धे त्रयस्त्रय आ लभ्यन्तेऽभिपूर्वमेवाऽस्मिन्तेजो दधाति सव्वथ्सरं पर्यालभ्यन्ते सव्वथ्सरो वै ब्रह्मवर्चसस्य प्रदाता सव्वथ्सर एवाऽस्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति सव्वथ्सरस्य परस्तात्प्राजापत्यङ्कद्रु- ॥ २२ ॥ मा लभेत प्रजापतिस्सर्वा देवता देवतास्वेव प्रति तिष्ठति यदि

बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णꣳ श्याममा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः
पशवस्स्वयैवाऽस्मै देवतया पशुभिस्त्वचङ्करोति न दुश्चर्मा भवति देवाश्च वै यमश्चाऽस्मिँल्लोकेऽ-
स्पर्द्धन्त स यमो देवानामिन्द्रियँव्वीर्यँमयुवत तद्यमस्य ॥ २३ ॥ यमत्वन्ते देवा अमन्यन्त यमो वा
इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाऽधावन्थ्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते
देवा वैष्णावरुणीँव्वशामाऽलभन्तैन्द्रमुक्षाणन्तँव्वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राऽणुदन्तै-
न्द्रेणैवाऽस्यैन्द्रियमवृञ्जत यो भ्रातृव्यवान्थ्स्याथ्स स्पर्द्धमानो वैष्णावरुणी- ॥ २४ ॥ ँव्वशामा
लभेतैन्द्रमुक्षाणँव्वरुणेनैव भ्रातृव्यङ्ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवाऽस्यैन्द्रियँव्वृङ्क्ते
भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन्तँव्वृत्रो हतष्षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य
शीर्षतो गाव उदायन्ता वैदेह्योऽभवन्तासामृषभो जघनेऽनूदैत्तमिन्द्रो- ॥ २५ ॥ ऽचायथ्सोऽम-
न्यत यो वा इममालभेत मुच्येताऽस्मात्पाप्मन इति स आग्नेयङ्कृष्णग्रीवमा लभतैन्द्रमृषभन्तस्या-
ऽग्निरेव स्वेन भागधेयेनोपसृतष्षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणैन्द्रियमात्मन्नधत्त यः पाप्मना
गृहीतस्स्याथ्स आग्नेयङ्कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवाऽस्य स्वेन भागधेयेनोपसृतः ॥ २६ ॥
पाप्मानमपि दहत्यैन्द्रेणैन्द्रियमात्मन्धत्ते मुच्यते पाप्मनो भवत्येव द्यावापृथिव्यान्धेनुमा लभेत
ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप
धावति ते एवैनं प्रतिष्ठाङ्गमयतः प्रत्येव तिष्ठति पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रँय्यो
ज्योगपरुद्धस्समृद्धयै वायव्य- ॥ २७ ॥ ँव्वथ्समा लभेत वायुर्वा अनयोर्वथ्स इमे वा एतस्मै लोका
अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवाऽस्मा
इमाँल्लोकान् विशं प्र दापयति प्राऽस्मा इमे लोकास्स्नुवन्ति भुञ्जत्यैनँव्विडुपतिष्ठते ॥ २८ ॥ मद्ध-
चन्दिने कर्द्धुँय्यमस्य स्पर्द्धमानो वैष्णावरुणीन्तमिन्द्रोऽस्य स्वेन भागधेयेनोपसृतो वायव्यन्द्विचत्वारिꣳशच्च ॥ ४ ॥

इन्द्रो वलस्य बिलमपौर्णोथ्स य उत्तमः पशुरासीत्तं पृष्ठं प्रति सङ्गृह्योदक्खिदत्तꣳ सहस्रं पश-
वोऽनूदायन्थ्स उन्नतोऽभवद्यः पशुकामस्स्याथ्स एतमैन्द्रमुन्नतमा लभेतेन्द्रमेव स्वेन भागधेयेनोप
धावति स एवाऽस्मै पशून्प्र यच्छति पशुमानेव भवत्युन्नतो ॥ २९ ॥ भवति साहस्री वा एषा
लक्ष्मी यदुन्नतो लक्ष्म्यैव पशूनव रुन्धे यदा सहस्रं पशून्प्राप्नुयादथ वैष्णवँव्वामनमा लभेतैत-
स्मिन्वै तथ्सहस्रमद्ध्यतिष्ठत्तस्मादेष वामनस्समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठान्दधाति कोऽ-
र्हति सहस्रं पशून्प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ संपाद्याऽऽलभेत पशवो ॥ ३० ॥ वा अहो-
रात्राणि पशूनेव प्रजातान्प्रतिष्ठाङ्गमयत्योषधीभ्यो वेहतमा लभेत प्रजाकाम ओषधयो वा एतं प्रजायै
परि बाधन्ते योऽलं प्रजायै सन्प्रजान्न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहद्भव-
त्योषधीरेव स्वेन भागधेयेनोप धावति ता एवाऽस्मै स्वाद्योनेः प्रजां प्र जनयन्ति विन्दते ॥ ३१ ॥
प्रजामापो वा ओषधयोऽसत्पुरुष आप एवाऽस्मा असतस्सद्ददति तस्मादाहुर्यश्चैवँव्वेद यश्च नाऽऽप-

स्त्वावाऽसतस्सइदतीत्यैन्द्रीꣳ सूतवशामा लभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन्भूतिन्न प्राप्नोतीन्द्रङ्खलु वा एषा सूत्वा वशाऽभव- ॥ ३२ ॥ दिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिङ्गमयति भवत्येव यꣳ सूत्वा वशा स्यात्तमैन्द्रमेवाऽऽलभेतैतद्वाव तदिन्द्रियꣳ साक्षादेवे- न्द्रियमव रुन्ध ऐन्द्राग्नं पुनरुथ्सृष्टमा लभेत य आ तृतीयात्पुरुषाथ्सोमन्न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणस्सन्ना ॥ ३३ ॥ तृतीयात्पुरुषाथ्सोमन्न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवाऽस्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति यदैन्द्रो भवतीन्द्रियव्वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणस्स्वामेव देवतामनु सन्तनोति पुनरुथ्सृष्टो भवति पुनरुथ्सृष्ट इव ह्येतस्य ॥ ३४ ॥ सोमपीथस्समृद्ध्यै ब्राह्मणस्पत्यन्तूपरमा लभे- ताऽभिचरन्ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्च्छति तूपरो भवति क्षुरपविर्वा एषा लक्ष्मी यत्तूपरस्समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवाऽस्मै प्र हरति शरमयं बर्हिश्शृणात्येवैनव्वैभीदक इद्ध्मो भिनत्त्येवैनम् ॥ ३५ ॥ भवत्युन्नतः पशवो जनयन्ति विन्दतेऽभवथ्सन्नेतस्येद्ध्मस्त्रीणि च ॥ ५ ॥

बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनं पृष्ठꣳ समानानाङ्करोति ग्राम्येव भवति शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै पौष्णꣳ श्याममा लभेताऽन्नकामोऽन्नव्वै पूषा पूषणमेव स्वेन भागधेयेनोप धावति स एवाऽस्मा ॥ ३६ ॥ अन्नं प्र यच्छत्यन्नाद एव भवति श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै मारुतं पृश्निमा लभेताऽन्नकामोऽन्नव्वै मरुतो मरुत एव स्वेन भागधेयेनोप धावति त एवाऽस्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्या ऐन्द्रमरुणमा लभेतेन्द्रियकाम इन्द्रमेव ॥ ३७ ॥ स्वेन भागधेयेनोप धावति स एवाऽ- स्मिन्निन्द्रियन्दधातीन्द्रियाव्येव भवत्यरुणो भ्रूमान्भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै सावित्र- मुपद्ध्वस्तमा लभेत सनिकामस्सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै सनिं प्र सुवति दानकामा अस्मै प्रजा भवन्त्युपद्ध्वस्तो भवति सावित्रो ह्येष ॥ ३८ ॥ देवतया समृद्ध्यै वैश्वदेवं बहुरूपमा लभेताऽन्नकामो वैश्वदेवव्वा अन्नव्विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै वैश्वदेवं बहुरूपमा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मै ॥ ३९ ॥ सजातान्प्र यच्छन्ति ग्राम्येव भवति बहुरूपो भवति बहुदेवत्यो(१) ह्येष समृद्ध्यै प्राजापत्यन्तूपरमा लभेत यस्याऽनाज्ञातमिव ज्योगामयेत्प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्याऽनाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोप

धावति स एवैनन्तस्माथ्स्रामान्मुञ्चति तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै ॥ ४० ॥
अस्मा इन्द्रमेवैष संजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मैं प्राजापत्यो हि त्रीणि च ॥ ६ ॥

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः पराऽपतत्तं बृहस्पतिरुपाऽगृह्णाथ्सा शितिपृष्ठा वशाऽभवद्यो द्वितीयः परापतत्तं मित्रावरुणावुपाऽगृह्णीताꣳ सा द्विरूपा वशाऽभवद्यस्तृतीयः परापतत्तवूँविश्वे देवा उपाऽगृह्णन्थ्सा बहुरूपा वशा भवद्यश्चतुर्थः परापतथ्स पृथिवीं प्राऽविशत्तं बृहस्पतिरभ्य- ॥ ४१ ॥ गृह्णादस्त्वेवाऽयं भोगायेति स उक्षवशस्समभवद्यल्लोहितं परापतत्तद्रुद्र उपाऽगृह्णाथ्सा रौद्री रोहिणी वशाऽभवद्बार्हस्पत्याꣳ शितिपृष्ठामा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ब्रह्मवर्चस्येव भवति छन्दसाँव्वा एष रसो यद्वशा रस इव खलु ॥ ४२ ॥ वै ब्रह्मवर्चसञ्छन्दसामेव रसेन रसं ब्रह्मवर्चसमव रुन्धे मैत्रावरुणीन्द्विरूपामा लभेत वृष्टिकामो मैत्रव्वा अहर्वारुणी रात्रिरहोरात्राभ्याङ्खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मा अहोरात्राभ्यां पर्जन्यँव्वर्षयतश्छन्दसाँव्वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन ॥ ४३ ॥ रसँव्वृष्टिमव रुन्धे मैत्रावरुणीन्द्विरूपामा लभेत प्रजाकामो मैत्रव्वा अहर्वारुणी रात्रिरहोरात्राभ्याङ्खलु वै प्रजाः प्र जायन्ते मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मा अहोरात्राभ्यां प्रजां प्र जनयतश्छन्दसाँव्वा एष रसो यद्वशा रस इव खलु वै प्रजा छन्दसामेव रसेन रसं प्रजामव ॥ ४४ ॥ रुन्धे वैश्वदेवीं बहुरूपामा लभेताऽन्नकामो वैश्वदेवव्वा अन्नवूँविश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति छन्दसाँव्वा एष रसो यद्वशा रस इव खलु वा अन्नञ्छन्दसामेव रसेन रसमन्नमव रुन्धे वैश्वदेवीं बहुरूपामा लभेत ग्रामकामो वैश्वदेवा वै ॥ ४५ ॥ संजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति छन्दसाँव्वा एष रसो यद्वशा रस इव खलु वै संजाताश्छन्दसामेव रसेन रसꣳ सजातानव रुन्धे बार्हस्पत्यमुक्षवशामा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चस- ॥ ४६ ॥ न्दधाति ब्रह्मवर्चस्येव भवति वशँव्वा एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसँव्वशेनैव वशं ब्रह्मवर्चसमव रुन्धे रौद्रीꣳ रोहिणीमा लभेताऽभिचरन्रुद्रमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमाच्छेति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवाऽस्मै प्र हरति शरमयं बर्हिश्शृणात्येवैनँव्वैभीदक इद्ध्मो भिनत्त्येवैनम् ॥ ४७ ॥ अभि खलु वृष्टिश्छन्दसामेव रसेन प्रजामव वैश्वदेवा वै ब्रह्मवर्चसँय्यूप एकान्न विꣳशतिश्च ॥ ७ ॥

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एताꣳ सौरीꣳ श्वेताँव्वशामाऽलभन्त तयैवाऽस्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एताꣳ सौरीꣳ श्वेताँव्वशामा लभेता-

ऽमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ब्रह्मवर्चस्येव भवति बैल्वो यूपो भवत्यसौ ॥ ४८ ॥ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठथ्सयोन्येव ब्रह्मवर्च-समव रुन्धे ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताऽभिचरन्वारुणन्दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यङ्ग्राहयित्वा ब्रह्मणा स्तृणुते बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवाऽस्मै प्र हरति शरमयं बर्हिश्शृणा- ॥ ४९ ॥ त्येवैनव्वैभीदक इद्ध्मो भिन-त्त्येवैनव्वैष्णववव्वामनमा लभेत यय्यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै यज्ञं प्र यच्छत्युपैनय्यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै त्वाष्ट्रव्व-डबमा लभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां ॥ ५० ॥ प्रजनयिता त्वष्टारमेव स्वेन भाग-धेयेनोप धावति स एवाऽस्मै पशून्मिथुनान्प्र जनयति प्रजा हि वा एतस्मिन्पशवः प्रविष्टा अथैष पुमान्थ्सन्वडबस्साक्षादेव प्रजां पशूनव रुन्धे मैत्रꣳ श्वेतमा लभेत सङ्ग्रामे सय्यत्ते समयकामो मित्रमेव स्वेन भागधेयेनोप धावति स एवैनं मित्रेण सन्नयति ॥ ५१ ॥ विशालो भवति व्यवसाययत्येवैनं प्राजापत्यङ्कृष्णमा लभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै पर्जन्यव्वर्षयति कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे शबलो भवति विद्युतमेवाऽस्मै जनयित्वा वर्षयत्यवाभृङ्गो भवति वृष्टिमेवाऽस्मै नि यच्छति ॥ ५२ ॥ असौ शृणाति मिथुनानान्नयति यच्छति ॥ ८ ॥

वरुणꣳ सुषुवाणमन्नाद्यन्नोपाऽनमथ्स एतांव्वारुणीङ्कृष्णांव्वशामपश्यत्ताꣳ स्वायै देवताया आऽलभत ततो वै तमन्नाद्यमुपाऽनमद्यमलमन्नाद्याय सन्तमन्नाद्यन्नोपनमेथ्स एतांव्वारुणीङ्कृष्णा-व्वशामा लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवाऽस्मा अन्नं प्र यच्छत्यन्नाद ॥ ५३ ॥ एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै मैत्रꣳ श्वेतमा लभेत वारुणङ्कृष्णमपा-ञ्चौषधीनाञ्च सन्धावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपाञ्च खलु वा ओषधीनाञ्च रसमुप जीवामो मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मा अन्नं प्र यच्छतोऽन्नाद एव भव- ॥ ५४ ॥ त्यपाञ्चौषधीनाञ्च सन्धावा लभत उभयस्याऽवरुद्ध्यै विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै मैत्रꣳ श्वेतमा लभेत वारुणङ्कृष्णञ्ज्योगामयावी यन्मैत्रो भवति मित्रेणैवाऽस्मै वरुणꣳ शमयति यद्वारुणस्साक्षादेवैनव्वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव देवा वै पुष्टिन्ना-ऽविन्द- ॥ ५५ ॥ न्तां मिथुनेऽपश्यन्तस्यान्न समराधयन्तावश्विनावब्रूतामावयोर्वा एषा मैतस्यांव्व-दद्ध्वमिति साऽश्विनोरेवाऽभवद्यः पुष्टिकामस्स्याथ्स एतामाश्विनीय्यमीव्वशामा लभेताऽश्विनावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्पुष्टिन्धत्तः पुष्यति प्रजया पशुभिः ॥ ५६ ॥ अन्नादोऽन्नाद एव भवत्यविन्दन्पञ्चचत्वारिꣳशच्च ॥ ९ ॥

आश्विनन्धूम्रल्ललाममा लभेत यो दुर्ब्राह्मणस्सोमं पिपासेदश्विनौ वै देवानामसोमपावा-
स्तान्तौ पश्चा सोमपीथं प्राऽऽप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणस्सोमं पिपासत्यश्विनावेव स्वेन
भागधेयेनोप धावति तावेवाऽस्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति यद्धूम्रो भवति धूम्रि-
माणमेवाऽस्मादप हन्ति ललामो ॥ ५७ ॥ भवति मुखत एवाऽस्मिन्तेजो दधाति वायव्यङ्गोमृगमा
लभेत यमजंघ्निवाꣳसमभिशꣳसेयुरपूता वा एतँव्वागृच्छति यमजंघ्निवाꣳसमभिशꣳसन्ति नैष
ग्राम्यः पशुर्नाऽऽरण्यो यद्गोमृगो नेवैष ग्रामे नाऽरण्ये यमजंघ्निवाꣳसमभिशꣳसन्ति वायुर्वै देवानां
पवित्रँव्वायुमेव स्वेन भागधेयेनोप धावति स एवै-॥ ५८ ॥ नं पवयति पराची वा एतस्मै व्युच्छ-
न्ती व्युच्छति तमः पाप्मानं प्र विशति यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूप-
मा लभेताऽमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मात्तमः पाप्मानमप हन्ति प्रती-
च्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते ॥ ५९ ॥ ललामस्स एव षट्चत्वारिꣳशच्च ॥ १० ॥

इन्द्रँव्वो विश्वतस्परीन्द्रन्नरो मरुतो यद्ध वो दिवो या वश्शर्म । भरेष्विन्द्रꣳ सुहवꣳ हवामहे-
ऽꣳहोमुचꣳ सुकृतन्दैव्यञ्जनम् । अग्निं मित्रँव्वरुणꣳ सातये भगन्द्यावापृथिवी मरुतस्स्वस्तये ।
ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपाँव्वृषण्वान् । शिशीतमिन्द्रापर्वता युवन्नस्तन्नो विश्वे
वरिवस्यन्तु देवाः । प्रिया वो नाम ॥ ६० ॥ हुवे तुराणाम् । आ यत्तृपन्मरुतो वावशानाः । श्रियसे
कं भानुभिस्सं मिमिख्षिरे ते रश्मिभिस्त ऋक्वभिस्सुखादयः । ते वाशीमन्त इष्मिणो अभीरवो विद्रे
प्रियस्य मारुतस्य धाम्नः । अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रेभिरभि रख्षतु त्मना । इन्द्रो
मरुद्भिरृतुधा कृणोत्वादित्यैर्नो वरुणस्सꣳ शिशातु । सन्नो देवो वसुभिरग्निस्सꣳ ॥ ६१ ॥ सोम-
स्तनूभी रुद्रियाभिः । समिन्द्रो मरुद्भिर्यज्ञियैस्समादित्यैर्नो वरुणो अजिज्ञिपत् । यथाऽऽदित्या
वसुभिस्संबभूवुर्मरुद्भी रुद्रास्समजानताऽभि । एवा त्रिणामन्नहृणीयमाना विश्वे देवास्समनसो भव-
न्तु । कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने । अर्हन्तश्चिद्यमिन्धते सञ्जनयन्ति जन्तवः । सँय्य-
दिषो वनामहे सꣳ हव्या मानुषाणाम् । उत द्युम्नस्य शवस ॥ ६२ ॥ ऋतस्य रश्मिमा ददे । यज्ञो
देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरि-
वोवित्तराऽसत् । शुचिरपस्सूयवसा अदब्ध उप ख्षेति वृद्धवयास्सुवीरः । नकिष्टं घ्नन्त्यन्तितो न
दूराद्य आदित्यानां भवति प्रणीतौ । धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रख्षमाणा ॥ ६३ ॥ असुर्यमृतावानश्चयमाना ऋणानि । तिस्रो भूमीर्धारयन्त्रीꣳरुत
द्यून्त्रीणि व्रता विदथे अन्तरेषाम् । ऋतेनाऽऽदित्या महि वो महित्वन्तदर्यमन्वरुण मित्र चारु ।
त्यान्नु ख्षत्रियाꣳ अव आदित्यान् याचिषामहे । सुमृडीकाꣳ अभिष्टये । न दख्षिणा वि चिकिते न
सव्या न प्राचीनमादित्या नोत पश्चा । पाक्या चिद्वसवो धीर्या चि- ॥ ६४ ॥ द्युष्मानीतो अभय-
ञ्ज्योतिरश्याम् । आदित्यानामवसा नूतनेन सख्षीमहि शर्मणा शन्तमेन । अनागास्त्वे अदितित्वे

तुरासं इमय्ँय्यज्ञन्दधतु श्रोषमाणाः । इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोद्ध्युरुशꣳस मा न आयुः प्र मोषीः ॥ ६५ ॥ नामाऽग्निस्सꣳ शवसो रक्षमाणा धीर्या चिदेकान्न पञ्चाशच्च ॥ ११ ॥

वायव्यं प्रजापतिस्ता वरुणन्देवासुरा एष्वसावादित्यो दशर्षभामिन्द्रो वलस्य बार्हस्पत्यव्वँषट्कारोऽसौ सौरीव्वँरुणमाश्विनमिन्द्रव्वँो नर एकादश ॥ ११ ॥ वायव्यमाग्नेयीङ्कृष्णग्रीवीमसावादित्यो वा अहोरात्राणि वषट्कारः प्रजनयिता हुवे तुराणां पञ्चषष्टिः ॥ ६५ ॥ वायव्यं प्रमोषीः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे प्रथमः प्रश्नस्समाप्तः ॥

ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ द्वितीयकाण्डे द्वितीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

प्रजापतिः प्रजा असृजत तास्सृष्टा इन्द्राग्नी अपाऽगूहताꣳ सोऽचायत्प्रजापतिरिन्द्राग्नी वै मे प्रजा अपाऽघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत्तन्निरवपत्तावस्मै प्रजाः प्राऽसाधयता-मिन्द्राग्नी वा एतस्य प्रजामप गूहतो योऽलं प्रजायै सन्प्रजान्न विन्दत ऐन्द्राग्नमेकादशकपालन्निर्वपे-त्प्रजाकाम इन्द्राग्नी ॥ १ ॥ एव स्वेन भागधेयेनोप धावति तावेवाऽस्मै प्रजां प्र साधयतो विन्दते प्रजामैन्द्राग्नमेकादशकपालन्निर्वपेथ्स्पर्द्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति ताभ्यामेवेन्द्रियव्वँीर्यं भ्रातृव्यस्य वृङ्क्ते वि पाप्मना भ्रातृव्येण जयतेऽप वा एतस्मादिन्द्रिय-व्वँीर्यङ्क्रामति यस्सङ्ग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालन्नि- ॥ २ ॥ र्वपेथ्सङ्ग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्निन्द्रियव्वँीर्यन्धत्तस्सहेन्द्रियेण वीर्येणोप प्र याति जयति तꣳ सङ्ग्रामव्वँि वा एष इन्द्रियेण वीर्येणर्द्ध्यते यस्सङ्ग्रामञ्जयत्यैन्द्राग्नमेकादशकपालन्निर्वपे-थ्सङ्ग्रामञ्जित्वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्निन्द्रियव्वँीर्य-॥ ३ ॥ न्धत्तो ने-न्द्रियेण वीर्येण व्यृद्ध्यतेऽप वा एतस्मादिन्द्रियव्वँीर्यङ्क्रामति य एति जनतामैन्द्राग्नमेकादशकपा-लन्निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्निन्द्रियव्वँीर्यन्धत्तस्स-हेन्द्रियेण वीर्येण जनतामेति पौष्णञ्चरुमनु निर्वपेत्पूषा वा इन्द्रियस्य वीर्यस्याऽनुप्रदाता पूषणमेव ॥ ४ ॥ स्वेन भागधेयेनोप धावति स एवाऽस्मा इन्द्रियव्वँीर्यमनु प्र यच्छति क्षैत्रपत्यञ्चरुन्निर्वपे-ज्जनतामागत्येयव्वँै क्षेत्रस्य पतिरस्यामेव प्रति तिष्ठत्यैन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियव्वँीर्यमुपरिष्टादात्मन्धत्ते ॥ ५ ॥ प्रजाकाम इन्द्राग्नी उपप्रयात्यैन्द्राग्नमेकादशकपालन्निर्वीर्यं पूषणमेवैकान्नचत्वारिꣳशच्च ॥ १ ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालन्निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्याँव्वा पौर्णमासीँव्वाऽतिपादयेत्पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्याँव्वा पौर्णमासीँव्वाऽतिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप धावति स एवैनमपथात्पन्थामपि नयत्यनड्वान्दक्षिणा वही ह्येष समृद्ध्या अग्नये व्रतपतये ॥ ६ ॥ पुरोडाशमष्टाकपालन्निर्वपेद्य आहिताग्निस्सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोप धावति स एवैनँव्व्रतमा लम्भयति व्रत्यो भवत्यग्नये रक्षोघ्ने पुरोडाशमष्टाकपालन्निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोप धावति स एवाऽस्माद्रक्षाꣳस्यप हन्ति निशितायान्निर्वपे- ॥ ७ ॥ न्निशितायाꣳ हि रक्षाꣳसि प्रेरते सम्प्रेर्णान्येवैनानि हन्ति परिश्रिते याजयेद्रक्षसामनन्ववचाराय रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳ स्तृत्या अग्नये रुद्रवते पुरोडाशमष्टाकपालन्निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमा वृश्चति ताजगार्तिमार्छत्यग्नये सुरभिमते पुरोडाशमष्टाकपालन्निर्वपेद्यस्य गावो वा पुरुषा ॥ ८ ॥ वा प्रमीयेरन् यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत्सुरभिमती तयैवाऽस्मै भेषजङ्करोति सुरभिमते भवति पूतीगन्धस्याऽपहत्या अग्नये क्षामवते पुरोडाशमष्टाकपालन्निर्वपेत्सङ्ग्रामे सँय्यत्ते भागधेयेनैवैनꣳ शमयित्वा परानभि निर्दिशति यमवरेषाँव्विध्यन्ति जीवति स यं परेषां प्र स मीयते जयति तꣳ सङ्ग्राम- ॥ ९ ॥ मभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाऽग्नये क्षामवते पुरोडाशमष्टाकपालन्निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां पुराऽऽयुषोऽपरः प्र मीयतेऽभि वा एष एतस्य गृहानुच्यति यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालन्निर्वपेद्भागधेयेनैवैनꣳ शमयति नाऽस्याऽपरङ्गृहान्दहति ॥ १० ॥ व्रतपतये निशितायान्निर्वपेत्पुरुषास्सङ्ग्रामन्न चत्वारि च ॥ २ ॥

अग्नये कामाय पुरोडाशमष्टाकपालन्निर्वपेद्यङ्कामो नोपनमेदग्निमेव कामꣳ स्वेन भागधेयेनोप धावति स एवैनङ्कामेन समर्धयत्युपैनङ्कामो नमत्यग्नये यविष्ठाय पुरोडाशमष्टाकपालन्निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वाऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति तेनैवेन्द्रियँव्वीर्यं भ्रातृव्यस्य ॥ ११ ॥ युवते वि पाप्मना भ्रातृव्येण जयतेऽग्नये यविष्ठाय पुरोडाशमष्टाकपालन्निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति स एवाऽस्माद्रक्षाꣳसि यवयति नैनमभिचरन्थ्स्तृणुतेऽग्नय आयुष्मते पुरोडाशमष्टाकपालन्निर्वपेद्यः कामयेत सर्वमायुरियामित्यग्निमेवाऽऽयुष्मन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मि- ॥ १२ ॥ न्नायुर्दधाति सर्वमायुरेत्यग्नये जातवेदसे पुरोडाशमष्टाकपालन्निर्वपेद्भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोप धावति स एवैनं भूतिङ्गमयति भवत्येवाऽग्नये रुक्मते पुरोडाशमष्टाकपालन्निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्रुचन्दधाति रोचत एवाऽग्नये तेजस्वते पुरोडाश- ॥ १३ ॥ मष्टाकपालन्निर्वपेत्तेजस्कामोऽग्निमेव तेजस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्तेजो दधाति

तेजस्व्येव भवत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालन्निर्वपेथ्सीख्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोप धावति तेनैव सहते यꣳ सीख्षते ॥ १४ ॥ भ्रातृव्यस्याऽस्मिन्तेजस्वते पुरोडाशमष्टात्रिꣳशच्च ॥३॥

अग्नयेऽन्नवते पुरोडाशमष्टाकपालन्निर्वपेद्यः कामयेताऽन्नवान्थ्स्यामित्यग्निमेवाऽन्नवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नवन्तङ्करोत्यन्नवानेव भवत्यग्नयेऽन्नादाय पुरोडाशमष्टाकपाल-न्निर्वपेद्यः कामयेताऽन्नादस्स्यामित्यग्निमेवाऽन्नादꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नादङ्करो-त्यन्नाद ॥ १५ ॥ एव भवत्यग्नयेऽन्नपतये पुरोडाशमष्टाकपालन्निर्वपेद्यः कामयेताऽन्नपतिस्स्यामि-त्यग्निमेवाऽन्नपतिꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नपतिङ्करोत्यन्नपतिरेव भवत्यग्नये पवमानाय पुरोडाशमष्टाकपालन्निर्वपेदग्नये पावकायाऽग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवाऽस्मिन्तेन दधाति यदग्नये ॥ १६ ॥ पावकाय वाचमेवाऽस्मिन्तेन दधाति यदग्नये शुचय आयुरेवाऽस्मिन्तेन दधात्युत यदीतासुर्भवति जीवत्येवैतामेव निर्वपेच्चख्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवाऽस्मिन्तेन दधाति यदग्नये पावकाय वाचमेवाऽस्मिन्तेन दधाति यदग्नये शुचये चख्षुरेवाऽस्मिन्तेन दधा- ॥ १७ ॥ त्युत यद्यन्धो भवति प्रैव पश्यत्यग्नये पुत्रवते पुरोडाशमष्टाकपालन्निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवाऽस्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छत्यग्नये रसवतेऽजख्षीरे चरुन्निर्वपेद्यः कामयेत रसवान्थ्स्यामित्यग्नि-मेव रसवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनꣳ रसवन्तङ्करोति ॥ १८ ॥ रसवानेव भवत्यज-ख्षीरे भवत्याग्नेयी वा एषा यदजा साख्षादेव रसमव रुन्धेऽग्नये वसुमते पुरोडाशमष्टाकपालन्नि-र्वपेद्यः कामयेत वसुमान्थ्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति स एवैनँव्वसुम-न्तङ्करोति वसुमानेव भवत्यग्नये वाजसृते पुरोडाशमष्टाकपालन्निर्वपेथ्सङ्ग्रामे सय्यँत्ते वाज- ॥ १९ ॥ व्वा एष सिसीर्षति यस्सङ्ग्राममञ्जिगीषत्यग्निः खलु वै देवानाँव्वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति धावति वाजꣳ हन्ति वृत्रञ्जयति तꣳ सङ्ग्राममथो अग्निरिव न प्रतिधृषे भव-त्यग्नयेऽग्निवते पुरोडाशमष्टाकपालन्निर्वपेद्यस्याऽग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनि-र्दिष्टभागोऽन्यस्तौ सम्भवन्तौ यजमान- ॥ २० ॥ मभि सं भवतस्स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नाऽऽर्तिमार्च्छति यजमानोऽग्नये ज्योतिष्मते पुरोडाशमष्टाकपा-लन्निर्वपेद्यस्याऽग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्याऽनूद्धृत्य इत्याहुस्तत्तथा न कार्यँय्यद्भा-गधेयमभि पूर्व उद्ध्रियते किमपरोऽभ्यु- ॥ २१ ॥ द्ध्रियेतेति तान्येवाऽवख्षाणानि सन्निधाय मन्थेदितः प्रथमञ्जज्ञे अग्निस्स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यँव्व-हतु प्रजानन्निति छन्दोभिरेवैनꣳ स्वाद्योनेः प्र जनयत्येष वाव सोऽग्निरित्याहुर्ज्योतिस्त्वा अस्य

परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवाऽस्य ज्योतिः परापतितन्तदेवाऽव रुन्धे ॥ २२ ॥

करोत्यन्नादो दधाति यदग्नये शुचये चक्षुरेवाऽस्मिन्तेन दधाति करोति वाजय्यजमानमुदेवाऽस्य षट्च ॥ ४ ॥

वैश्वानरन्द्वादशकपालन्निर्वपेद्वारुणञ्चरुन्दधिक्रावूण्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरेणैवैनꣳ स्वदयत्यप पापँव्वर्णꣳ हते वारुणेनैवैनँव्वरुणपाशान्मुञ्चति दधिक्रावूण्णा पुनाति हिरण्यन्दक्षिणा पवित्रँव्वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवत्येतामेव निर्वपेत्प्रजाकामस्सँव्वथ्सरो ॥ २३ ॥ वा एतस्याऽशान्तो योनिं प्रजायै पशूनान्निर्दहति योऽलं प्रजायै सन्प्रजान्न विन्दते यद्वैश्वानरो द्वादशकपालो भवति सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरमेव भागधेयेन शमयति सोऽस्मै शान्तस्स्वाद्योनेः प्रजां प्र जनयति वारुणेनैवैनँव्वरुणपाशान्मुञ्चति दधिक्रावूण्णा पुनाति हिरण्यन्दक्षिणा पवित्रँव्वै हिरण्यं पुनात्येवैनं ॥ २४ ॥ वूँविन्दते प्रजाँव्वैश्वानरन्द्वादशकपालन्निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवाऽस्मिन्तेजो दधाति यद्दशकपालो विराजैवाऽस्मिन्नन्नाद्यन्दधाति यदेकादशकपालस्त्रिष्टुभैवाऽस्मिन्निन्द्रियन्दधाति यद्द्वादशकपालो जगत्यैवाऽस्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिन्निर्वपति पूत ॥ २५ ॥ एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवत्यव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्याँव्वा पौर्णमासीँव्वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरन्द्वादशकपालन्निर्वपेदमावास्याँव्वा पौर्णमासीँव्वाऽतिपाद्य सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरमेव प्रीणात्यथो सँव्वथ्सरमेवाऽस्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या ॥ २६ ॥ अथो देवता एवाऽन्वारभ्य सुवर्गँल्लोकमेति वीरहा वा एष देवानाँय्योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्नाग्नेयमष्टाकपालन्निर्वपेद्वैश्वानरन्द्वादशकपालमग्निमुद्वासयिष्यन् यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाऽग्निस्तस्मा आतिथ्यङ्करोत्यथो यथा जनय्यँतेऽवसङ्करोति तादृ-॥ २७ ॥ गेव तद्द्वादशकपालो वैश्वानरो भवति द्वादश मासास्सँव्वथ्सरस्सँव्वथ्सरः खलु वा अग्नेर्योनिस्स्वामेवैनँय्योनिङ्गमयत्याद्यमस्याऽन्नं भवति वैश्वानरन्द्वादशकपालन्निर्वपेन्मारुतꣳ सप्तकपालङ्ग्रामकाम आहवनीये वैश्वानरमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै द्वादशकपालो वैश्वानरो भवति द्वादश मासास्सँव्वथ्सरस्सँव्वथ्सरेणैवाऽस्मै सजाताꣳश्च्यावयति मारुतो भवति ॥ २८ ॥ मरुतो वै देवानाँव्विशो देवविशेनैवाऽस्मै मनुष्यविशमव रुन्धे सप्तकपालो भवति सप्तगणा वै मरुतो गणश एवाऽस्मै सजातानव रुन्धेऽनूच्यमान आ सादयति विशमेवाऽस्मा अनुवर्त्मानङ्करोति ॥ २९ ॥ प्रजाकामस्सँव्वथ्सरः पुनात्येवैनं पूतस्समष्ट्यै तादृङ्मारुतो भवत्येकान्न त्रिꣳशच्च ॥ ५ ॥

आदित्यञ्चरुन्निर्वपेथ्सङ्ग्राममुपप्रयास्यन्नियँव्वा अदितिरस्यामेव पूर्वे प्रति तिष्ठन्ति वैश्वानरन्द्वादशकपालन्निर्वपेदायतनङ्गत्वा सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरः खलु वै देवानामायतन-

मेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरन्द्वादशकपालन्निर्वपति देवानामेवाऽऽयतने यतते जयति तꣳ सङ्ग्राममेतस्मिन्वा एतौ मृजाते ॥ ३० ॥ यो विद्विषाणयोरन्नमत्ति वैश्वानरन्द्वादशकपालन्निर्वपेद्विद्विषाणयोरन्नञ्जग्ध्वा सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरस्वदितमेवाऽत्ति नाऽस्मिन्मृजाते सँव्वथ्सराय वा एतौ सममाते यौ सममाते तयोर्यः पूर्वोऽभिद्रुह्यति तव्वरुणो गृह्णाति वैश्वानरन्द्वादशकपालन्निर्वपेथ्सममानयोः पूर्वोऽभिद्रुह्य सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरमेवाऽऽस्वा निर्वरुणं ॥ ३१ ॥ परस्तादभि द्रुह्यति नैनव्वरुणो गृह्णात्याव्यँव्वा एष प्रति गृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरन्द्वादशकपालन्निर्वपेदविं प्रतिगृह्य सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरस्वदितामेव प्रति गृह्णाति नाऽऽव्यं प्रति गृह्णात्यात्मनो वा एष मात्रामाप्नोति य उभयादत्प्रतिगृह्णात्यश्वँव्वा पुरुषँव्वा वैश्वानरन्द्वादशकपालन्निर्वपेदुभयादत् ॥ ३२ ॥ प्रतिगृह्य सँव्वथ्सरो वा अग्निर्वैश्वानरस्सँव्वथ्सरस्वदितमेव प्रति गृह्णाति नाऽऽत्मनो मात्रामाप्नोति वैश्वानरन्द्वादशकपालन्निर्वपेथ्सनिमेष्यन्थ्सँव्वथ्सरो वा अग्निर्वैश्वानरो यदा खलु वै सँव्वथ्सरञ्जनतायाञ्चरत्यथ स धनार्घो भवति यद्वैश्वानरन्द्वादशकपालन्निर्वपति सँव्वथ्सरसातामेव सनिमभि प्र च्यवते दानकामा अस्मै प्रजा भवन्ति यो वै सँव्वथ्सरं ॥ ३३ ॥ प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन वि मुञ्चति प्रतिष्ठित्यै यया रज्वोत्तमाङ्गामाजेत्तां भ्रातृव्याय प्र हिणुयान्निरृतिमेवाऽस्मै प्र हिणोति ॥ ३४ ॥ मृजाते निर्वरुणव्वपेदुभयाद्यो वै सँव्वथ्सरꣳ षट्त्रिꣳशच्च ॥ ६ ॥

ऐन्द्रञ्चरुन्निर्वपेत्पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै पशून्प्र यच्छति पशुमानेव भवति चरुर्भवति स्वादेवाऽस्मै योनेः पशून्प्र जनयतीन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालन्निर्वपेत्पशुकाम इन्द्रियँव्वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति स ॥ ३५ ॥ एवाऽस्मा इन्द्रियं पशून्प्र यच्छति पशुमानेव भवतीन्द्राय घर्मवते पुरोडाशमेकादशकपालन्निर्वपेद्ब्रह्मवर्चसकामो ब्रह्मवर्चसँव्वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ब्रह्मवर्चस्येव भवतीन्द्रायाऽर्कवते पुरोडाशमेकादशकपालन्निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवाऽर्कवन्तꣳ स्वेन भागधेयेनो- ॥ ३६ ॥ प धावति स एवाऽस्मा अन्नं प्र यच्छत्यन्नाद एव भवतीन्द्राय घर्मवते पुरोडाशमेकादशकपालन्निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायाऽर्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवाऽस्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवाऽस्य तेन करोति यदिन्द्रायाऽर्कवते भूत एवाऽन्नाद्ये प्रति तिष्ठति भवत्येवेन्द्राया-॥ ३७ ॥ ऽꣳहोमुचे-पुरोडाशमेकादशकपालन्निर्वपेद्यः पाप्मना गृहीतस्स्यात्पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोऽꣳहसो मुञ्चतीन्द्राय वैमृधाय पुरोडाशमेकादशकपालन्निर्वपेद्यं मृधोऽभि प्रवेपैरन्राष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधꣳ स्वेन

भागधेयेनोप धावति स एवाऽस्मान्मृधो-॥ ३८ ॥ ऽप हन्तीन्द्राय त्रात्रे पुरोडाशमेकादशकपाल-
न्निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनन्त्रायत इन्द्रायाऽ-
र्काश्वमेधवते पुरोडाशमेकादशकपालन्निर्वपेद्यं महायज्ञो नोपनमेदेते वै महायज्ञस्याऽन्त्ये तनू यदर्का-
श्वमेधाविन्द्रमेवाऽर्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मा अन्ततो महायज्ञञ्च्या-
वयत्युपैनं महायज्ञो नमति ॥ ३९ ॥ इन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति सोऽर्कवन्तꣳ स्वेन भागधे-
येनैवेन्द्रायाऽस्मान्मृधोऽस्मै सप्त च ॥ ७ ॥

इन्द्रायाऽन्वृजवे पुरोडाशमेकादशकपालन्निर्वपेद्ग्रामकाम इन्द्रमेवाऽन्वृजुꣳ स्वेन भागधेये-
नोप धावति स एवाऽस्मै सजाताननुकान्करोति ग्राम्येव भवतीन्द्राण्यै चरुन्निर्वपेद्यस्य सेनाऽसꣳ-
शितेव स्यादिन्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेयेनोप धावति सैवाऽस्य सेनाꣳ सꣳ
श्यति बल्बजानपी-॥ ४० ॥ दूध्मे सन्नह्येद्गौर्यत्राऽधिष्कन्ना न्यमेहत्ततो बल्बजा उदतिष्ठन्गवामेवैनन्-
न्यायमपिनीय गा वेदयतीन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालन्निर्वपेत्सङ्ग्रामे संयत्त
इन्द्रियेण वै मन्युना मनसा सङ्ग्रामञ्जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति
स एवाऽस्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ ॥ ४१ ॥ सङ्ग्राममेतामेव निर्वपेद्यो हतमना-
स्स्वयम्पाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनास्स्वयम्पाप इन्द्रमेव मन्युमन्तं
मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्निन्द्रियं मन्युं मनो दधाति न हतमनास्स्वय-
म्पापो भवतीन्द्राय दात्रे पुरोडाशमेकादशकपालन्निर्वपेद्यः कामयेत दानकामा मे प्रजास्स्यु-॥ ४२ ॥
रितीन्द्रमेव दातारꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै दानकामाः प्रजाः करोति दानकामा
अस्मै प्रजा भवन्तीन्द्राय प्रदात्रे पुरोडाशमेकादशकपालन्निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेन्द्रमेव
प्रदातारꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मै प्र दापयतीन्द्राय सुत्राम्णे पुरोडाशमेकादश-
कपालन्निर्वपेदपरुद्धो वा-॥ ४३ ॥ ऽपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति
स एवैनन्त्रायतेऽनपरुध्यो भवतीन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापति-
मुपाऽधावत्तस्मा एतमैन्द्रमेकादशकपालन्निरवपत्तेनैवाऽस्मिन्निन्द्रियमदधाच्छक्वरी याज्यानुवाक्ये
अकरोद्वज्रो वै शक्वरी स एनँव्वज्रो भूत्वा ऐन्ध ॥ ४४ ॥ सोऽभवत्सोऽबिभेद्भूतः प्र मा धक्ष्यतीति
स प्रजापतिं पुनरुपाऽधावत्स प्रजापतिश्शक्वर्या अधि रेवतीन्निरमिमीत शान्त्या अप्रदाहाय योऽलꣳ
श्रियै सन्त्सदृङ्ख्समानैस्स्यात्तस्मा एतमैन्द्रमेकादशकपालन्निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप
धावति स एवाऽस्मिन्निन्द्रियन्दधाति रेवती पुरोनुवाक्या भवति शान्त्या अप्रदाहाय शक्वरी याज्या
वज्रो वै शक्वरी स एनँव्वज्रो भूत्वा इन्धे भवत्येव ॥ ४५ ॥ अपि तꣳ स्युर्वैन्ध भवति चतुर्दश च ॥ ८ ॥

आग्नावैष्णवमेकादशकपालन्निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदा-
ग्नावैष्णव एकादशकपालो भवत्यग्निस्सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनय्यँज्ञेन चाऽभि चरति

सर॑स्वत्याज्य॑भागा भवति॒ वाग्वै सर॑स्वती वा॒चैवैन॑म॒भि च॑रति बार्॒हस्प॒त्यश्च॒रुर्भ॑वति॒ ब्रह्म॒ वै दे॒वा-
नां॒ बृ॒हस्पति॒र्ब्रह्म॑णै॒वैन॑म॒भि च॑रति॒ ॥ ४६ ॥ प्रति॒ वै प॒रस्ता॑दभि॒चर॑न्तम॒भि च॑रन्ति॒ द्वेद्वे॑ पुरोनुवा॒क्ये॑
कु॒र्या॒दति॒ प्रयु॑क्त्या ए॒तयै॒व य॑जेताऽभि॒च॒र्यमा॑णो दे॒वता॑भिरे॒व दे॒वताः॑ प्रति॒च॑रति य॒ज्ञेन॑ य॒ज्ञँव्वा॒चा
वाचं॒ ब्रह्म॑णा॒ ब्रह्म॒ स दे॒वता॑श्चै॒व य॒ज्ञश्च॑ मद्ध्य॒तो व्यव॑सर्पति॒ तस्य॒ न कु॒त॑श्च॒नोपा॑व्या॒धो भ॑वति॒
नैन॑मभि॒चर॑न्थ्स्तृणुत आग्नावैष्ण॒वमेका॑दशकपाल॒न्निर्व॑पेद्यँय्य॒ज्ञो नो- ॥ ४७ ॥ प॒नमें॑द॒ग्निस्सर्वा॑
दे॒वता॒ विष्णु॑र्य॒ज्ञोऽग्निश्चै॒व विष्णु॑श्च॒ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तावे॒वाऽस्मै॑ य॒ज्ञं प्र य॑च्छत॒ उपै॑नँय्य॒ज्ञो
न॑मत्याग्नावैष्ण॒वङ्घृ॒ते च॒रुन्निर्व॑पे॒च्चख्षु॑ष्कामो॒ऽग्नेर्वै॑ चख्षु॑षा मनु॒ष्या॑ वि प॑श्यन्ति य॒ज्ञस्य॑ दे॒वा
अ॒ग्निश्चै॒व विष्णु॑श्च॒ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तावे॒वा- ॥ ४८ ॥ ऽस्मि॒ञ्चख्षु॑र्द्धत्त॒श्चख्षु॑ष्माने॒व
भ॑वति धे॒न्वै वा ए॒तद्रेतो॒ यदाज्य॑मन॒डुह॑स्तण्डु॒ला मि॑थुना॒दे॒वाऽस्मै॒ चख्षुः॒ प्र ज॑नयति घृ॒ते भ॑वति॒
तेजो॒ वै घृ॒तन्तेज॒श्चख्षु॒स्तेज॑सै॒वाऽस्मै॒ तेज॒श्चख्षु॒रव॑ रुन्ध इन्द्रि॒यँव्वै वी॒र्यं॑-व्वृ॒ङ्क्ते भ्रातृ॑व्यो॒ यज॑मा॒नोऽ-
य॑जमानस्याऽद्ध्व॒रक॑ल्पां॒ प्रति॒ निर्व॑पे॒द्भ्रातृ॑व्ये॒ यज॑माने॒ नाऽस्यैं॑न्द्रि॒य-॥ ४९ ॥ व्वी॒र्यं॑-व्वृ॒ङ्क्ते पु॒रा
वा॒चः प्रव॑दितो॒र्निर्व॑पे॒द्याव॑त्ये॒व वाक्ताम॒प्रोदि॑तां॒ भ्रातृ॑व्यस्य वृ॒ङ्क्ते ताम॑स्य॒ वाचं॑ प्र॒वद॑न्तीम॒न्या
वाचो॒ऽनु प्र व॑दन्ति॒ ता इन्द्रि॒यँव्वी॒र्यं॑-य्यज॑माने दधत्याग्नावैष्ण॒वम॒ष्टाक॑पाल॒न्निर्व॑पेत्प्रातस्सवन॒स्या॑-
ऽऽका॒ले सर॑स्व॒त्याज्य॑भागा॒ स्याद्बार्॒हस्प॒त्यश्च॒रुर्यद॒ष्टाक॑पालो॒ भव॑त्य॒ष्टाख्ष॑रा गाय॑त्री गाय॒त्रं प्रा॑त-
स्सवनं प्रा॑तस्सव॒नमे॒व तेना॑ऽऽप्नो- ॥ ५० ॥ त्याग्नावैष्ण॒वमेका॑दशकपाल॒न्निर्व॑पे॒न्माद्ध्य॑न्दिनस्य॒
सव॑नस्या-ऽऽका॒ले सर॑स्व॒त्याज्य॑भागा॒ स्याद्बार्॒हस्प॒त्यश्च॒रुर्यदेका॑दशकपालो॒ भव॒त्येका॑दशाख्षरा
त्रि॒ष्टुप्त्रैष्टु॑भं॒ माद्ध्य॑न्दिन॒ꣳ सव॑नं॒ माद्ध्य॑न्दिनमे॒व सव॑नन्तेना॑ऽऽप्नोत्याग्नावैष्ण॒वन्द्वाद॑शकपाल॒न्नि-
र्व॑पेत्तृतीयसव॒नस्या॑ऽऽका॒ले सर॑स्व॒त्याज्य॑भागा॒ स्याद्बार्॒हस्प॒त्यश्च॒रुर्यद्द्वाद॑शकपालो॒ भव॑ति॒ द्वाद॑शा-
ख्षरा॒ जग॑ती॒ जाग॑तन्तृतीयसव॒नन्तृ॑तीयसव॒नमे॒व तेना॑ऽऽप्नोति दे॒वता॑भिरे॒व दे॒वताः॑ ॥ ५१ ॥
प्रति॒च॑रति य॒ज्ञेन॑ य॒ज्ञँव्वा॒चा वाचं॒ ब्रह्म॑णा॒ ब्रह्म॑ क॒पालै॑रे॒व छन्दा॒ꣳस्याप्नो॑ति॒ पु॒रो॒डाशैः॒स्सव॑नानि
मैत्रावरु॒णमेक॑कपाल॒न्निर्व॑पेद्व॒शायै॑ का॒ले यैवाऽसौ भ्रातृ॑व्यस्य व॒शाऽनू॑बन्ध्या॑ सो ए॒वैषैतस्यैक॑कपालो
भवति॒ न हि क॒पालैः॑ प॒शुमर्॒हत्याप्तु॑म् ॥ ५२ ॥ ब्रह्म॑णै॒वैन॑म॒भि च॑रति य॒ज्ञो न तावे॒वाऽस्यैं॑न्द्रि॒यमा॑प्नोति
दे॒वता॑स्स॒प्तत्रि॑ꣳशच्च ॥ ९ ॥

असा॒वा॑दि॒त्यो न व्य॑रोचत॒ तस्मै॑ दे॒वाः प्राय॑श्चित्तिमैच्छ॒न्तस्मा॑ ए॒तꣳ सौमारौ॒द्रञ्च॒रुन्निर॑वप-
न्तेनै॒वाऽस्मि॒न्रुच॑मदधु॒र्यो ब्र॑ह्मवर्च॒सका॑म॒स्स्यात्तस्मा॑ ए॒तꣳ सौमारौ॒द्रञ्च॒रुन्निर्व॑पे॒थ्सोम॑ञ्चै॒व रु॒द्रञ्च॒
स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तावे॒वा॑ऽस्मिन्ब्रह्मवर्च॒सन्ध॑त्तो ब्रह्मवर्च॒स्ये॑व भ॑वति तिष्यापूर्णमा॑से
निर्व॑पेद्रु॒द्रो ॥ ५३ ॥ वै ति॒ष्य॑स्सोमः॑ पू॒र्णमा॑सस्सा॒ख्षादे॒व ब्र॑ह्मवर्च॒सम॒व रु॒न्धे परि॑श्रिते याजयति
ब्रह्मवर्च॒सस्य॒ परि॑गृहीत्यै श्वे॒तायै॑ श्वे॒तव॑थ्सायै दु॒ग्धं म॑थि॒तमाज्य॑ भव॒त्याज्यं॒ प्रो॒ख्षण॑माज्ये॑न
मार्जयन्ते॒ याव॑दे॒व ब्र॑ह्मवर्च॒सन्तथ्सर्व॑ङ्करोत्यति॒ ब्र॑ह्मवर्च॒सङ्क्रि॑यत॒ इत्या॑हुरीश्व॒रो दु॒श्चर्मा॒ भवि॑तोरिति॒

मानवी ऋचौ धाय्ये कुर्याद्यद्वै किञ्च मनुरवदत्तद्भेषजं ॥ ५४ ॥ भेषजमेवाऽस्मै करोति यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णञ्चरुन्निर्वपेत्सौम्यो वै देवतया पुरुषः पौष्णाः पशव-स्स्वयैवाऽस्मै देवतया पशुभिस्त्वचङ्करोति न दुश्चर्मा भवति सोमारौद्रञ्चरुन्निर्वपेत्प्रजाकामस्सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवाऽस्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते ॥ ५५ ॥ प्रजाꣳ सोमारौद्रञ्चरुन्निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निस्स्वाया एवैनन्देवतायै निष्क्रीय रुद्रायाऽपि दधाति ताजगार्तिमाच्छेति सोमारौद्रञ्चरुन्निर्वपेज्ज्योगामयावी सोमँव्वा एतस्य रसो गच्छत्यग्निꣳ शरीरँय्यस्य ज्योगामयति सोमादेवाऽस्य रसन्निष्क्रीणात्यग्नेश्शरीरमुत यदी- ॥ ५६ ॥ तासुर्भवति जीवत्येव सोमारुद्रयोर्वा एतङ्ग्रसितꣳ होता निष्खिदति स ईश्वर आर्ति-मार्तोरनड्वान् होत्रा देयो वह्निर्वा अनड्वान् वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति सोमारौद्रञ्चरुन्निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यञ्जनयेयमिति वेदिं परिगृह्याऽर्धमुद्धन्या-दर्धन्नाऽर्धं बर्हिषस्स्तृणीयादर्धन्नाऽर्धमिध्मस्याऽभ्यादध्यादर्धन्न स्व एवाऽस्मा आयतने भ्रातृ-व्यञ्जनयति ॥ ५७ ॥ रुद्रो भेषजँव्विन्दते यदि स्तृणीयादर्धन्द्वादश च ॥ १० ॥

ऐन्द्रमेकादशकपालन्निर्वपेन्मारुतꣳ सप्तकपालङ्ग्रामकाम इन्द्रञ्चैव मरुतश्च स्वेन भागधेयेनोप धावति त एवाऽस्मै सजातान्प्र यच्छन्ति ग्राम्येव भवत्याहवनीय ऐन्द्रमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवाऽस्मै सजातानव रुन्धेऽनूच्यमान आ सादयति विशमेवा- ॥ ५८ ॥ ऽस्मा अनुवर्त्मानङ्करोत्ये-तामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदन्दध्यामित्यैन्द्रस्याऽवद्यन्ब्रूयादिन्द्रायाऽनु ब्रूही-त्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्याऽवद्यन्ब्रूयान्मरुद्भ्योऽनु ब्रूहीत्याश्राव्य ब्रूयादिन्द्रँय्यजेति स्व एवैभ्यो भागधेये समदन्दधाति वितृꣳहाणास्तिष्ठन्त्येतामेव ॥ ५९ ॥ निर्वपेद्यः कामयेत कल्पे-रन्निति यथादेवतमवदाय यथादेवतँय्यजेद्भागधेयेनैवैनान् यथायथङ्कल्पयति कल्पन्त एवैन्द्रमे-काद-शकपालन्निर्वपेद्वैश्वदेवन्द्वादशकपालङ्ग्रामकाम इन्द्रञ्चैव विश्वाꣳश्च देवान्त्स्वेन भागधेयेनोप धावति त एवाऽस्मै सजातान्प्र यच्छन्ति ग्राम्येव भवत्यैन्द्रस्याऽवदाय वैश्वदेवस्याऽव द्येदथैन्द्रस्यो- ॥ ६० ॥ परिष्टादिन्द्रियेणैवाऽस्मा उभयतस्सजातान्परि गृह्णात्युपाधाय्यपूर्वयँव्वासो दक्षिणा स-जातानामुपहित्यै पृश्नियै दुग्धे प्रैयङ्गवञ्चरुन्निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोप धावति त एवाऽस्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति प्रियवती याज्यानुवाक्ये ॥ ६१ ॥ भवतः प्रियमेवैनꣳ समानानाङ्करोति द्विपदा पुरोनुवाक्या भवति द्विपद एवाऽव रुन्धे चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे देवासुरास्सँय्यत्ता आसन्ते देवा मिथो विप्रिया आसन्तें(१)ऽन्योऽन्यस्मै ज्यैष्ठ्या-यातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्स इन्द्रः प्रजापति-

मुपाऽधावत्त- ॥ ६२ ॥ मेतया संज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालन्निरव-पथ्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालँव्वरुणायाऽऽदित्यवते चरुन्ततो वा इन्द्रन्देवा ज्यैष्ठ्यायाऽभि समजानत यस्समानैर्मिथो विप्रियस्स्यात्तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालन्निर्वपेथ्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालँव्व-रुणायाऽऽदित्यवते चरुमिन्द्रमेवैनं भूतञ्ज्यैष्ठ्याय समाना अभि सञ्जानते वसिष्ठस्समानानां भवति ॥ ६३ ॥ विशमेव तिष्ठन्त्येतामेवाऽथैन्द्रस्य याज्यानुवाक्ये तँव्वरुणाय चतुर्दश च ॥११॥

हिरण्यगर्भ आपो ह यत्प्रजापते । स वेद पुत्रः पितरꣳ स मातरꣳ स सूनुर्भुवथ्स भुवत्पुनर्मघः स द्यामौर्णोदन्तरिक्षꣳ स सुवस्स विश्वा भुवो अभवथ्स आऽभवत् । उदु त्यञ्चित्रम् । स प्रत्नवन्नवीयसाऽग्ने द्युम्नेन सँय्यता । बृहत्ततन्थ भानुना । नि काव्या वेधसश्शश्वतस्करहस्ते दधानो ॥ ६४ ॥ नर्या पुरूणि । अग्निर्भुवद्रयिपती रयीणाꣳ सत्रा चक्राणो अमृतानि विश्वा । हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् । वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजस्स्याम । बडित्था पर्वतानाङ्खिद्रं बिभर्षि पृथिवि । प्र या भूमि प्रवत्वति मह्ना जिनोषि ॥ ६५ ॥ महिनि । स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः । प्र या वाजन्न हेषन्तं पेरुमस्यस्यर्जुनि । ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयँय्यस्सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यच्छ । आपान्तमन्युस्तृपलप्रभर्मा धुनिश्शिमीवाञ्छरुमाꣳ ऋजीषी । सोमो विश्वान्यतसा वनानि नाऽर्वागिन्द्रं प्रतिमानानि देभुः । प्र ॥ ६६ ॥ सुवानस्सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन् । वृषा यन्ताऽसि शवसस्तुरस्याऽन्तर्यच्छ गृणते धर्त्रन्दꣳह । सबाधस्ते मदश्च शुष्मयश्च ब्रह्म नरो ब्रह्मकृतस्सपर्यन् । अर्को वा यत्तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृथ्सु तुर्याम् । वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । ॥ ६७ ॥ वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिस्सदा नः । प्र तत्ते अद्य शिपिविष्ट नामाऽर्यश्शꣳसामि वयुनानि विद्वान् । तन्त्वा गृणामि तवसमतवीयान्क्षयन्तमस्य रजसः पराके । किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद्यदन्यरूपस्समिथे बभूथ । ॥ ६८ ॥ अग्ने दा दाशुषे रयिँव्वीरवन्तं परीणसम् । शिशीहि नस्सूनुमतः । दा नो अग्ने शतिनो दास्सहस्रिणो दुरो न वाजꣳ श्रुत्या अपा वृधि । प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतुः । अग्निर्दा द्रविणँव्वीरपेशा अग्निरृषिँय्यस्सहस्रा सनोति । अग्निर्दिवि हव्यमा ततानाऽग्नेर्द्धामानि विभृता पुरुत्रा । मा ॥ ६९ ॥ नो मर्द्धीरा तू भर । घृतन्न पूतन्तनूररेपाश्शुचि हिरण्यम् । तत्ते रुक्मो न रोचत स्वधावः । उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर । वायो शतꣳ हरीणाँय्युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा । प्र

याभि- ॥ ७० ॥ यांसिं दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टयें दुरोणे । नि नों रयिꣳ सुभोजंसँय्युवेह नि वीरवद्गव्यमश्वियञ्च राधः । रेवतींर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । रेवाꣳ इद्रेवतस्स्तोता स्यात्त्वावतो मघोनः । प्रेदुं हरिवश्श्रुतस्य ॥ ७१ ॥ दधानो जिनोर्षि देभुः प्र हुव्यम्बभूथ मा याभिश्चत्वारिꣳशच्च ॥ १२ ॥

प्रजापतिस्तास्सृष्टा अग्नये पथिकृतेऽग्नये कामायाऽग्नयेऽन्नवते वैश्वानरमादित्यश्चरुमैन्द्रश्चरुमिन्द्रायाऽन्वृजव आग्नावैष्णवमसौ सोमारौद्रमैन्द्रमेकादशकपालꣳ हिरण्यगर्भो द्वादश ॥ १२ ॥ प्रजापतिरग्नये कामायाऽभि सं भवतो यो विद्विषाणयोरिद्ध्मे सन्नह्येदाग्नावैष्णवमुपरिष्टाद्यासिं दाश्वाꣳसमेकसप्ततिः ॥ ७१ ॥ प्रजापतिः प्रेदु हरिवश्श्रुतस्य ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ द्वितीयकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

आदित्येभ्यो भुवंद्वद्भ्यश्चरुन्निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन्भूतिन्न प्राप्नोत्यादित्यानेव भुवद्वतस्स्वेन भागधेयेनोप धावति त एवैनं भूतिङ्गमयन्ति भवत्येवाऽऽदित्येभ्यो धारयद्वद्भ्यश्चरुन्निर्वपेदपरुद्धो वाऽपरुद्ध्यमानो वाऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वत-॥ १ ॥ स्स्वेन भागधेयेनोप धावति त एवैनंवँविशि दाँद्ध्रत्यनपरुद्ध्यो भवत्यदितेऽनु मन्यस्वेत्यपरुद्ध्यमानोऽस्य पदमा ददीतेयँव्वा अदितिरियमेवाऽस्मै राज्यमनु मन्यते सत्याऽऽशीरित्याह सत्यामेवाऽऽशिषङ्कुरुत इह मन इत्याह प्रजा एवाऽस्मै समनसः करोत्युप प्रेत मरुत- ॥ २ ॥ स्सुदानव एना विश्पतिनाऽभ्यमुꣳ राजानमित्याह मारुती वै विड्ज्येष्ठो विश्पतिर्विशैवैनꣳ राष्ट्रेण समर्द्धयति यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेच्छुक्लाꣳश्च कृष्णाꣳश्च वि चिनुयाद्ये शुक्लास्स्युस्तमादित्यञ्चरुन्निर्वं-पेदादित्या वै देवतया विड्विशमेवाऽव गच्छ- ॥ ३ ॥ त्यवगताऽस्य विडनवगतꣳ राष्ट्रमित्याहुर्ये कृष्णास्स्युस्तँव्वारुणञ्चरुन्निर्वपेद्वारुणव्वै राष्ट्रमुभे एव विशञ्च राष्ट्रञ्चाऽव गच्छति यदि नाऽवगच्छेदिममहमादित्येभ्यो भागन्निर्वपाम्याऽमुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या

एवैनं भागधेयं प्रेप्सन्तो विशमवं ॥ ४ ॥ गमयन्ति यदि नाऽवगच्छेदाश्वत्थान्मयूखान्थ्सप्त मद्ध्यमेषायामुप हन्यादिदमहमादित्यान्बद्ध्नाम्याऽमुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्ध्वीरा विशमवं गमयन्ति यदि नाऽवगच्छेदेतमेवाऽऽदित्यश्चरुन्निर्वपेदिद्ध्मेऽपि मयूखान्थ्सन्नह्येदनपरुद्ध्यमेवाऽवं गच्छत्याश्वत्था भवन्ति मरुताँव्वा एतदोजो यदश्वत्थ ओजसैव विशमवं गच्छति सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमवं गच्छति ॥ ५ ॥ धारयद्भतो मरुतो गच्छति विशमवैतदष्टादश च ॥ १ ॥

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाऽधावन्तेभ्य एतां प्राजापत्याꣳ शतकृष्णलान्निरवपत्तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याꣳ शतकृष्णलान्निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवाऽस्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये ॥ ६ ॥ प्रति तिष्ठति घृते भवत्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चैवाऽस्मा अमृतञ्च समीची दधाति चत्वारिचत्वारि कृष्णलान्यव द्यति चतुरवत्तस्याऽऽस्यै एकधा ब्रह्मण उप हरत्येकधैव यजमान आयुर्दधात्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एतꣳ सौर्यञ्चरुन्निरवपन्तेनैवाऽस्मि- ॥ ७ ॥ न्रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतꣳ सौर्यञ्चरुन्निर्वपेदमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्ब्रह्मवर्चसन्दधाति ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवत उभयत एवाऽस्मिन्नुचन्दधाति प्रयाजेप्रयाजे कृष्णलञ्जुहोति दिग्भ्य एवाऽस्मै ब्रह्मवर्चसमवं रुन्ध आग्नेयमष्टाकपालन्निर्वपेथ्सावित्रन्द्वादशकपालं भूम्यै ॥ ८ ॥ चरुँय्यः कामयेत हिरण्यव्विन्देय हिरण्यं मोपनमेदिति यदाग्नेयो भवत्याग्नेयँव्वै हिरण्यँय्यस्यैव हिरण्यन्तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनꣳ हिरण्यन्नमति वि वा एष इन्द्रियेण वीर्येणर्द्ध्यते यो हिरण्यव्विन्दत एता- ॥ ९ ॥ मेव निर्वपेद्धिरण्यव्वित्त्वा नेन्द्रियेण वीर्येण व्यृद्ध्यत एतामेव निर्वपेद्यस्य हिरण्यन्नश्येद्यदाग्नेयो भवत्याग्नेयँव्वै हिरण्यँय्यस्यैव हिरण्यन्तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्याँव्वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दतीन्द्र- ॥ १० ॥ स्त्वष्टुस्सोममभीषहाऽपिबथ्स विष्वङ्व्यार्च्छथ्स इन्द्रियेण सोमपीथेन व्यार्द्ध्यत स यदूर्ध्वमुदवमीत्ते श्यामाका अभवन्थ्स प्रजापतिमुपाऽधावत्तस्मा एतꣳ सौमेन्द्रꣳ श्यामाकञ्चरुन्निरवपत्तेनैवाऽस्मिन्निन्द्रियꣳ सोमपीथमदधाद्वि वा एष इन्द्रियेण सोमपीथेनर्द्ध्यते यस्सोमँव्वमिति यस्सोमवामी स्यात्तस्मा ॥ ११ ॥ एतꣳ सौमेन्द्रꣳ श्यामाकञ्चरुन्निर्वपेथ्सोमञ्चैवेन्द्रञ्च स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्निन्द्रियꣳ सोमपीथन्धत्तो नेन्द्रियेण सोमपीथेन व्यृद्ध्यते यथ्सौम्यो भवति सोमपीथमेवाऽव रुन्धे यदैन्द्रो भवतीन्द्रियँव्वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे श्यामाको भवत्येष वाव स सोम- ॥ १२ ॥ स्साक्षादेव सोमपीथमवं

रुन्धेऽग्नये दात्रे पुरोडाशमष्टाकपालन्निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्नि-रेवाऽस्मै पशून्प्रजनयति वृद्धानिन्द्रः प्र यच्छति दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशव- ॥ १३ ॥ स्समृद्ध्यै प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवाऽस्मै पशून्प्र जनय-त्यात्मा वै पुरुषस्य मधु यन्मद्ध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्या-नुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे ॥ १४ ॥ इन्द्रियेऽस्मिन्भूम्या एतामिन्द्रस्स्यात्तस्मै सोमो बहुरूपा हि पशव एकचत्वारिꣳशच्च ॥ २ ॥

देवा वै सत्रमासतर्द्धिपरिमितय्यँशस्कामास्तेषाꣳ सोमꣳ राजानय्यँश आर्च्छथ्स गिरिमुदै-त्तमग्निरनूदैत्तावग्नीषोमौ समभवतान्ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत्तावब्रवीद्याजयतं मेति तस्मा एता-मिष्टिन्निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यञ्चरुन्तयैवाऽस्मिन्तेज ॥ १५ ॥ इन्द्रियं ब्रह्मवर्चसमधत्ताय्यँो यज्ञविभ्रष्टस्स्यात्तस्मा एतामिष्टिन्निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यञ्चरुय्यँदाग्नेयो भवति तेज एवाऽस्मिन्तेन दधाति यदैन्द्रो भवतीन्द्रियमेवाऽस्मिन्तेन दधाति यथ्सौम्यो ब्रह्मवर्चसन्तेनाऽऽग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत्तेजश्चैवाऽस्मिन्ब्रह्मवर्चसञ्च समी-ची ॥ १६ ॥ दधात्यग्नीषोमीयमेकादशकपालन्निर्वपेद्यङ्कामो नोपनमेदाग्नेयो वै ब्राह्मणस्स सोमं पि-बति स्वामेव देवताꣳ स्वेन भागधेयेनोप धावति सैवैनङ्कामेन समर्द्धयत्युपैनङ्कामो नमत्यग्नीषोमीय-मष्टाकपालन्निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मिन्ब्रह्मवर्चस-न्धत्तो ब्रह्मवर्चस्येव ॥ १७ ॥ भवति यदष्टाकपालस्तेनाऽऽग्नेयो यच्छ्यामाकस्तेन सौम्यस्समृद्ध्यै सोमाय वाजिने श्यामाकञ्चरुन्निर्वपेद्यः क्लैब्याद्बिभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लै-ब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोप धावति स एवाऽस्मिन्रेतो वाजिनन्दधाति न क्लीबो भवति ब्राह्मणस्पत्यमेकादशकपालन्निर्वपेद्ग्रामकामो ॥ १८ ॥ ब्रह्मणस्पतिमेव स्वेन भागधे-येनोप धावति स एवाऽस्मै सजातान्प्र यच्छति ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतस्स-जातैरेवैनङ्गणवन्तङ्करोत्येतामेव निर्वपेद्यः कामयेत ब्रह्मन्विशव्वँि नाशयेयमिति मारुती याज्यानु-वाक्ये कुर्याद्ब्रह्मन्नेव विशव्वँि नाशयति ॥ १९ ॥ तेजस्समीची ब्रह्मवर्चस्येव ग्रामकामस्त्रिचत्वारिꣳशच्च ॥ ३ ॥

अर्यम्णे चरुन्निर्वपेथ्सुवर्गकामोऽसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनꣳ सुवर्गल्लोकङ्गमयत्यर्यम्णे चरुन्निर्वपेद्यः कामयेत दानकामा मे प्रजास्स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवा- ॥ २० ॥ ऽस्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्त्यर्यम्णे चरुन्निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनन्त-

द्रमयति यत्र जिगमिषतीन्द्रो वै देवानामानुजावर आसीथ्स प्रजापतिमुपाऽधावत्तस्मा एतमैन्द्रमानुषूकमेकादशकपालन्नि- ॥ २१ ॥ रवपत्तेनैवैनमग्रन्देवतानां पर्यणयद्बुद्ध्नवती अग्रवती याज्यानुवाक्ये अकरोद्बुद्ध्नादेवैनमग्रं पर्यणयचो राजन्य आनुजावरस्स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालन्निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुद्ध्नवती अग्रवती याज्यानुवाक्ये भवतो बुद्ध्नादेवैनमग्रं ॥ २२ ॥ परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरस्समृद्ध्यै यो ब्राह्मण आनुजावरस्स्यात्तस्मा एतं बार्हस्पत्यमानुषूकश्चरुन्निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुद्ध्नवती अग्रवती याज्यानुवाक्ये भवतो बुद्ध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरस्समृद्ध्यै ॥ २३ ॥ एव निरग्रमेतस्य चत्वारि च ॥ ४ ॥

प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर आसन्तास्सोमाय राज्ञेऽददात्तासाꣳ रोहिणीमुपैत्ता ईर्ष्यन्तीः पुनरगच्छन्ता अन्वैत्ताः पुनरयाचत ता अस्मै न पुनरददाथ्सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत्ता अस्मै पुनरददात्तासाꣳ रोहिणीमेवोपै- ॥ २४ ॥ त्तꣳयक्ष्म आर्च्छद्राजानꣳयक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत्पापीयानभवत्तत्पापयक्ष्मस्य यज्जायाभ्योऽविन्दत्तज्जायेन्यस्य य एवमेतेषाꣳयक्ष्माणाञ्जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाऽधावत्ता अब्रुवन्वरꣳवृणामहै समावच्छ एव न उपाय इति तस्मा एत-॥ २५ ॥ मादित्यश्चरुन्निरवपन्तेनैवैनं पापाथ्स्रामादमुञ्चन्न् यः पापयक्ष्मगृहीतस्स्यात्तस्मा एतमादित्यश्चरुन्निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापाथ्स्रामान्मुञ्चन्त्यमावास्यायान्निर्वपेदमुमेवैनमाप्यायमानमन्वा प्यायति नवोनवो भवति जायमान इति पुरोनुवाक्या भवत्यायुरेवाऽस्मिन्तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्याययति ॥ २६ ॥ एवोपैतमस्मिन्त्रयोदश च ॥ ५ ॥

प्रजापतिर्देवेभ्योऽन्नाद्यꣳव्यादिशथ्सोऽब्रवीद्यदिमाꣳल्लोकानभ्यतिरिच्यातै तन्ममाऽसदिति तदिमाꣳल्लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिराजमिन्द्रꣳ स्वराजानन्ततो वै स इमाꣳल्लोकाꣳस्त्रेधाऽदुहत्तत्त्रिधातोस्त्रिधातुत्वꣳयꣳकामयेताऽन्नादस्स्यादिति तस्मा एतन्त्रिधातुन्निर्वपेदिन्द्राय राज्ञे पुरोडाश- ॥ २७ ॥ मेकादशकपालमिन्द्रायाऽधिराजायेन्द्राय स्वराज्ञेऽयꣳवा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रस्स्वराडिमानेव लोकान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति यथा वथ्सेन प्रत्ताङ्गान्दुह एवमेवेमाꣳल्लोकान्प्रत्तान्काममन्नाद्यन्दुह उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषाꣳल्लोकानामास्या उत्तरउत्तरो ज्यायान्भवत्येवमिव हीमे लोकास्समृद्ध्यै सर्वेषामभिगमयन्नवद्यत्यछंबट्कारꣳव्यत्यासमन्वाहाऽनिर्दाहाय ॥ २८ ॥ पुरोडाशन्त्रयष्षड्विꣳशतिश्च ॥ ६ ॥

देवासुरास्सय्यँत्ता आसन्तान्देवानसुरा अजयन्ते देवाः पराजिग्याना असुराणाव्वैँश्यमुपा-ऽऽयन्तेभ्य इन्द्रियव्वीँर्यमपाक्राऽमत्तदिन्द्रोऽचायत्तदन्वपाऽक्रामत्तदवरुधन्नाऽशक्नोत्तदस्मादभ्यद्धों-ऽचरथ्स प्रजापतिमुपाऽधावत्तमेतया सर्वपृष्ठयाऽयाजयत्तयैवाऽस्मिन्निन्द्रियव्वीँर्यमदधाद्य इन्द्रिय-कामो ॥ २९ ॥ वीर्यकामस्स्यात्तमेतया सर्वपृष्ठया याजयेदेता एव देवतास्स्वेन भागधेयेनोप धावति ता एवाऽस्मिन्निन्द्रियव्वीँर्यन्दधति यदिन्द्राय राथन्तराय निर्वपति यदेवाऽग्नेस्तेजस्तदेवाऽव रुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवाऽव रुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्त- ॥ ३० ॥ देवाऽव रुन्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाऽव रुन्धे यदिन्द्राय शाक्वराय यदेव मरुतान्तेजस्तदेवाऽव रुन्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवाऽव रुन्ध एतावन्ति वै तेजाँसि तान्येवाऽव रुन्ध उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशो ॥ ३१ ॥ भवति वैश्वदेवत्वाय समन्तं पर्यवद्यति समन्तमेवेन्द्रियव्वीँर्य-य्यँजमाने दधाति व्यत्यास-मन्वाहाऽनिर्दाहायाऽश्व ऋषभो वृष्णिर्बस्तस्सा दक्षिणा वृषत्वायैतयैव यजेताऽभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्यु वेवाऽस्य मनुष्याः ॥ ३२ ॥ इन्द्रियकामस्सवितुस्तेज-स्तत्पुरोडाशोऽष्टात्रिँशच्च ॥ ७ ॥

रजनो वै कौणेयः क्रतुजितञ्जानकिञ्चक्षुर्वन्यमयात्तस्मा एतामिष्टिन्निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालँ सौर्यञ्चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालन्तयैवाऽस्मिञ्चक्षुरदधाद्यश्चक्षु-ष्कामस्स्यात्तस्मा एतामिष्टिन्निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालँ सौर्यञ्चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि ॥ ३३ ॥ पश्यन्ति सूर्यस्य देवा अग्निञ्चैव सूर्यञ्च स्वेन भागधेयेनोप धावति तावेवाऽस्मिञ्चक्षुर्द्धत्तश्चक्षुष्मानेव भवति यदाग्नेयौ भवतश्चक्षुषी एवाऽस्मि-न्तत्प्रति दधाति यथ्सौर्यो नासिकान्तेनाऽभितस्सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकाञ्चक्षुषी तस्मान्नासिकया चक्षुषी विधृते समानी याज्यानुवाक्ये भवतस्समानँ हि चक्षुस्समृद्ध्या उदु त्यञ्जातवेदसँ सप्त त्वा हरितो रथे चित्रन्देवानामुदगादनीकमिति पिण्डान्प्र यच्छति चक्षुरेवाऽस्मै प्र यच्छति यदेव तस्य तत् ॥ ३४ ॥ वि ह्यष्टाविँशतिश्च ॥ ८ ॥

ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासन्धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासमभिभूश्चेत्ता वसुविदामनमस्यामनस्य देवा ये सजाताः कुमारास्समनसस्तानहङ्कामये हृदा ते माङ्कामयन्ताँ हृदा तान्म आमनसः कृधि स्वाहाऽऽमनम- ॥ ३५ ॥ स्यामनस्य देवा यास्स्त्रियस्समनसस्ता अहङ्कामये हृदा ता माङ्कामय-न्ताँ हृदा ता म आमनसः कृधि स्वाहा वैश्वदेवीँ साङ्ग्रहणीन्निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवाऽस्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति साङ्ग्र-हणी भवति मनोग्रहणव्वैँ सङ्ग्रहणं मन एव सजातानां- ॥ ३६ ॥ गृह्णाति ध्रुवोऽसि ध्रुवोऽहँ

सजातेषु भूयासमिति परिधीन्परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवव्ँविदुष एते परिधयः परिधीयन्त आमनमस्यामनस्य देवा इति तिस्र आहुती-र्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका यास्स्त्रियस्तानेवाऽव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते ॥ ३७ ॥ स्वाहाऽऽमनमसि सजातानाꣳ रुन्धे पञ्च च ॥ ९ ॥

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तत्सर्पिरभवद्यदद्ध्रियत तद्घृतमभवदश्विनोः प्राणोऽसि तस्य ते दत्ताँय्ययोः प्राणोऽसि स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्राव-रुणयोः प्राणोऽसि तस्य ते दत्ताँय्ययोः प्राणोऽसि स्वाहा विश्वेषान्देवानां प्राणोऽसि ॥ ३८ ॥ तस्य ते ददतु येषां प्राणोऽसि स्वाहा घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः । तत्त्वा विष्णुः पर्यपश्यत्तत्त्वेडा गव्यैरयत् । पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपाꣳशोर्वीर्येण देवस्त्वा सवितोथ्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितो- ॥ ३९ ॥ थ्सृजतु जीवातवे जीवनस्यायै अग्नेस्त्वा मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोथ्सृजतु जीवातवे जीवनस्यायै इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन् । मातेवाऽस्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् । अग्निरायुष्मान्थ्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि सोम आयुष्मान्थ्स ओष-धीभिर्यज्ञ आयुष्मान्थ्स दक्षिणाभिर्ब्रह्माऽऽयुष्मत्तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तङ्करोमि ॥ ४० ॥ विश्वेषान्देवानां प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोथ्सोम आयुष्मान्पञ्चविꣳशतिश्च ॥ १० ॥

अग्निंव्वा एतस्य शरीरङ्गच्छति सोमꣳ रसो वरुण एनव्ँवरुणपाशेन गृह्णाति सरस्वतीव्ँवा-ग्ग्नाविष्णू आत्मा यस्य ज्योगामयति यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिन्निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यञ्चरुव्ँवारुणन्दशकपालꣳ सारस्वतञ्चरुमाग्नावैष्णव-मेकादशकपालमग्नेरेवाऽस्य शरीरन्निष्क्रीणाति सोमाद्रस-॥ ४१ ॥ व्ँवारुणेनैवैनव्ँवरुणपाशान्मुञ्च-ति सारस्वतेन वाचन्दधात्यग्निस्सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनय्ँयज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवाऽस्यैतन्महिमानव्ँव्या-चष्टेऽश्विनोः प्राणोऽसीत्याहाऽश्विनौ वै देवानां ॥ ४२ ॥ भिषजौ ताभ्यामेवाऽस्मै भेषजङ्करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवाऽस्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवाऽस्मि-न्नेतेन दधाति विश्वेषान्देवानां प्राणोऽसीत्याह वीर्यमेवाऽस्मिन्नेतेन दधाति घृतस्य धाराममृतस्य पन्थामित्याह यथायजुरेवैतत्पावमानेन त्वा स्तोमेनेत्या- ॥ ४३ ॥ ह प्राणमेवाऽस्मिन्नेतेन दधाति बृहद्रथन्तरयोस्त्वा स्तोमेनेत्याहौज एवाऽस्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवाऽस्मि-न्नेतेन दधात्यृत्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति ब्रह्मणो हस्तमन्वारभ्य पर्या-

हुरेकधैव यजमान आयुर्दधति यदेव तस्य तद्धिरण्याद्- ॥ ४४ ॥ घृतन्निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति शतमानं भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यथो खलु यावतीस्समा एष्यन्मन्येत तावन्मानꣳ स्यात्समृद्ध्या इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवाऽस्मिन्वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह जरदष्टिमेवैनङ्करोत्यग्निरायुष्मानिति हस्तङ्गृह्णात्येते वै देवा आयुष्मन्तस्त एवाऽस्मिन्नायुर्दधति सर्वमायुरेति ॥ ४५ ॥
रसन्देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वाविꣳशतिश्च ॥ ११ ॥

प्रजापतिर्वरुणायाऽश्वमनयत्स स्वान्देवतामार्च्छत्स पर्यदीर्यत स एतव्ँवारुणञ्चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतङ्गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनव्ँवरुणपाशान्मुञ्चति ॥ ४६ ॥ चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वस्समृद्ध्या एकमतिरिक्तन्निर्वपेद्यमेव प्रतिग्राही भवति यव्ँवा नाऽद्ध्येति तस्मादेव वरुणपाशान्मुच्यते यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चारङ्कुरुतेऽपोऽवभृथमवैत्यप्सु वै वरुणस्साक्षादेव वरुणमव यजतेऽपोनप्त्रीयञ्चरुं पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वस्स्वामेवैनय्ँयोनिङ्गमयति स एनꣳ शान्त उप तिष्ठते ॥ ४७ ॥ मुञ्चति चरुꣳ सप्तदश च ॥ १२ ॥

या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतय्ँया वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममꣳहसो मुञ्चतय्ँयो वामिन्द्रावरुणावग्नौ स्रामस्तव्ँवामेतेनाऽव यजे यो वामिन्द्रावरुणा द्विपात्सु पशुषु चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वनस्पतिषु स्रामस्तव्ँवामेतेनाऽव यज इन्द्रो वा एतस्यै- ॥ ४८ ॥ न्द्रियेणाऽप क्रामति वरुण एनव्ँवरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतस्स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यान्निर्वपेदिन्द्र एवाऽस्मिन्निन्द्रियन्दधाति वरुण एनव्ँवरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत्पयस्या भवति पय एवाऽस्मिन्तया दधाति पयस्यायां ॥ ४९ ॥ पुरोडाशमव दधात्यात्मन्वन्तमेवैनङ्करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति पुनस्समूहति दिग्भ्य एवाऽस्मै भेषजङ्करोति समूह्याऽव द्यति यथाऽऽविद्धन्निष्कृन्तति तादृगेव तद्यो वामिन्द्रावरुणावग्नौ स्रामस्तव्ँवामेतेनाऽव यज इत्याह दुरिष्ट्या एवैनं पाति यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तव्ँवामेतेनाऽव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवाऽस्मै वरुणपाशान्मुञ्चति ॥ ५० ॥ एतस्य पयस्यायां पाति षड्विꣳशतिश्च ॥ १३ ॥

स प्रत्नवन्नि काव्येन्द्रव्ँवो विश्वतस्परीन्द्रन्नरः । त्वन्नस्सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतस्सखा । या ते धामानि दिवि या पृथिव्याय्ँया पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैस्सुमना अहेडन्राजन्त्सोम प्रति हव्या गृभाय । अग्नीषोमा सवेदसा सहूती वनतङ्गिरः । सन्देवत्रा बभूवथुः । युव- ॥ ५१ ॥ मेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् । युवꣳ सिन्धूꣳरभि-

शस्तेरवद्यादग्नीषोमावमुञ्चतङ्गृभीतान् । अग्नीषोमाविमꣳ सु मे शृणुतव्ँवृषणा हवम् । प्रति सूक्तानि हर्यतं भवतन्दाशुषे मयः । आऽन्यन्दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः । अग्नीषोमा ब्रह्मणा वावृधानोरुय्ँयज्ञाय चक्रथुरु लोकम् । अग्नीषोमा हविषः प्रस्थितस्य वीतꣳ ॥ ५२ ॥ हर्यतव्ँवृषणा जुषेथाम् । सुशर्माणा स्ववसा हि भूतमथा धत्तय्ँयजमानाय शय्ँयोः । आ प्यायस्व सन्ते । गणानान्त्वा गणपतिꣳ हवामहे कविङ्कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नश्शृण्वन्नूतिभिस्सीद सादनम् । स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानाय्ँयः पितरमाविवासति ॥ ५३ ॥ श्रद्धामना हविषा ब्रह्मणस्पतिम् । स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् । मरुतो यद्ध वो दिवो या वश्शर्म । अर्यमाऽऽ याति वृषभस्तुविष्मान्दाता वसूनां पुरुहूतो अर्हन् । सहस्राख्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणन्दधातु । ये तेऽर्यमन्बहवो देवयानाः पन्थानो ॥ ५४ ॥ राजन्दिव आचरन्ति । तेभिर्नो देव महि शर्म यच्छ शन्न एधि द्विपदे शश्चतुष्पदे । बुद्ध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् । रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार । बुद्ध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् । वृथाऽसृजत्पथिभिर्दीर्घयाथैस्सोमस्य ता मद इन्द्रश्चकार ।॥ ५५ ॥ प्र यो जज्ञे विद्वाꣳ अस्य बन्धुव्ँविश्वानि देवो जनिमा विवक्ति । ब्रह्म ब्रह्मण उज्जभार मद्ध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ । महान्मही अस्तभायद्वि जातो द्याꣳ सद्म पार्थिवञ्च रजः । स बुद्ध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट् । बुद्ध्नाद्यो अग्रमभ्यत्योजसा बृहस्पतिमा विवासन्ति देवाः । भिनद्वलव्ँवि पुरो दर्दरीति कनिक्रदथ्सुवरपो जिगाय ॥ ५६ ॥ युवव्ँवीतमाविवासति पन्थानो दीर्घयाथैस्सोमस्य ता मद इन्द्रश्चकार देवा नव च ॥ १४ ॥

आदित्येभ्यो देवा वै मृत्योर्देवा वै सत्रमर्यम्णे प्रजापतेस्त्रयस्त्रिꣳशत्प्रजापतिर्देवेभ्योऽन्नाद्यन्देवासुरास्तान्नजनो दृधुवोऽसि यन्नवमग्निव्ँवै प्रजापतिर्वरुणाय या वामिन्द्रावरुणा स प्रत्नवच्चतुर्दश ॥ १४ ॥ आदित्येभ्यस्त्वष्टुरस्मै दानकामा एवाऽव रुन्धेऽग्निव्ँवै स प्रत्नवथ्षट्पञ्चाशत् ॥ ५६ ॥ आदित्येभ्यस्सुवरपो जिगाय ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ द्वितीयकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रख्षाꣳसि पिशाचास्तेऽन्यतस्तेषान्देवानामुत यदल्पल्ँलोहितमकुर्वन्तद्रख्षाꣳसि रात्रीभिरसुभ्नन्तान्थ्सुब्धान्मृतानभि व्यौच्छत्ते देवा अविदुर्यो वै

नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपाऽमन्त्रयन्त तान्यब्रुवन्वरँव्वृणामहै य- ॥ १ ॥ दसुराञ्जयाम तन्नस्सहाऽसदिति ततो वै देवा असुरानजयन्तेऽसुराञ्जित्वा रक्षाꣳस्यपाऽनुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तन्देवान्पर्यविशन्ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालन्निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्या- ॥ २ ॥ सन्तानि तेन प्राऽणुदन्त यदग्नये विबाधवते यान्येवाऽभितो रक्षाꣳस्यासन्तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन्तानि तेनाऽपाऽनुदन्त ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्थ्स्यात्स स्पर्द्धमान एतयेष्ट्या यजेताऽग्नये प्रवते पुरोडाशमष्टाकपालन्निर्वपेदग्नये विबाधवते- ॥ ३ ॥ ऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवाऽस्माच्छ्रेयान्भ्रातृव्यस्तन्तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ्तन्तेन वि बाधते यदग्नये प्रतीकवते य एवाऽस्मात्पापीयान्तन्तेनाऽप नुदते प्र श्रेयाꣳसं भ्रातृव्यन्नुदतेऽति सदृशङ्क्रामति नैनं पापीयानाप्नोति य एवव्ँविद्वानेतयेष्ट्या यजते ॥ ४ ॥ वृणामहै यत्पुरस्ताद्रक्षाꣳसि वपेदग्नये विबाधवत एवञ्चत्वारि च ॥ १ ॥

देवासुरास्सय्ँयत्ता आसन्ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन्त्वव्ँवै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत्तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताऽथाऽसुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियव्ँविमृधेयमिन्द्रियावती- ॥ ५ ॥ त्यब्रवीत्त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालन्निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे निरवपन्नꣳहस एव तेनाऽमुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनाऽपाऽघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपालं पुरोडाशन्निरवपन्त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारभयत भूत्यै ॥ ६ ॥ ताव्ँवाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त यो भ्रातृव्यवान्थ्स्यात्स स्पर्द्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालन्निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान्भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्माथ्समानेष्वन्यश्श्रेयानुता- ॥ ७ ॥ ऽभ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाऽप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्धत्ते त्रयस्त्रिꣳशत्कपालं पुरोडाशन्निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारभयते भूत्यै सा वा एषा विजितिर्नामेष्टिर्य एवव्ँविद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ॥ ८ ॥ इन्द्रियावती भूत्या उतैकान्न पञ्चाशच्च ॥ २ ॥

देवासुरास्सय्ँयत्ता आसन्तेषाङ्गायत्र्योजो बलमिन्द्रियव्ँवीर्यं प्रजां पशून्थ्सङ्गृह्याऽऽदायाऽपक्रम्याऽतिष्ठत्तेऽमन्यन्त यतरान् वा इयमुपावर्थ्स्यति त इदं भविष्यन्तीति ताव्ँव्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुरास्सा नाऽन्यतराꣳश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि ॥ ९ ॥ भ्राजोऽसि देवानान्धाम नामाऽसि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरिति

वाव देवा असुराणामोजो बलमिन्द्रियँ्वीर्यं प्रजां पशूनवृञ्जत यद्गायत्र्यपक्रम्याऽतिष्ठत्तस्मादेताङ्गा-यत्रीतीष्टिमाहुस्सँवथ्सरो वै गायत्री सँवथ्सरो वै तदपक्रम्याऽतिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियँ्वीर्यं ॥ १० ॥ प्रजां पशूनवृञ्जत तस्मादेताꣳ सँव्वर्ग इतीष्टिमाहुर्यो भ्रातृव्यवान्थ्स्या-थ्स स्पर्द्धमान एतयेष्ट्या यजेताऽग्नये सँव्वर्गाय पुरोडाशमष्टाकपालन्निर्वपेत्तꣳ शृतमासन्नमेतेन यजु-षाऽभि मृशेदोज एव बलमिन्द्रियँ्वीर्यं प्रजां पशून्भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ॥ ११ ॥ बलमस्येतया देवा असुराणामोजो बलमिन्द्रियँ्वीर्यं पञ्चचत्वारिꣳशच्च ॥ ३ ॥

प्रजापतिः प्रजा असृजत ता अस्माथ्सृष्टाः पराचीरायन्ता यत्राऽवसन्ततो गर्मुदुदतिष्ठत्ता बृहस्पतिश्चाऽन्ववैताꣳ सोऽब्रवीद्बृहस्पतिरनया त्वा प्र तिष्ठान्यथ त्वा प्रजा उपावथ्स्यन्तीति तं प्राऽ-तिष्ठत्ततो वै प्रजापतिं प्रजा उपावर्तन्त यः प्रजाकामस्स्यात्तस्मा एतं प्राजापत्यङ्गार्मुतश्चरुन्निर्वपेत्प्र-जापति- ॥ १२ ॥ मेव स्वेन भागधेयेनोप धावति स एवाऽस्मै प्रजां प्र जनयति प्रजापतिः पशून-सृजत तेऽस्माथ्सृष्टाः पराञ्च आयन्ते यत्राऽवसन्ततो गर्मुदुदतिष्ठत्तान्पूषा चाऽन्ववैताꣳ सोऽब्रवीत्पू-षाऽनया मा प्र तिष्ठाऽथ त्वा पशव उपावथ्स्यन्तीति मां प्र तिष्ठेति सोमोऽब्रवीन्मम वा ॥ १३ ॥ अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत्तौ प्राऽतिष्ठत्ततो वै प्रजापतिं पशव उपावर्तन्त यः पशुका-मस्स्यात्तस्मा एतꣳ सौमापौष्णङ्गार्मुतश्चरुन्निर्वपेथ्सोमापूषणावेव स्वेन भागधेयेनोप धावति तावे-वाऽस्मै पशून्प्र जनयतस्सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवाऽस्मै रेतो दधाति पूषा पशून्प्र जनयति ॥ १४ ॥ वपेत्प्रजापतिंव्वै दधाति पूषा त्रीणि च ॥ ४ ॥

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः । सविता यस्सहस्रि-यस्स नो गृहेषु रारणत् । आ पूषा एत्वा वसु । धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् । त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणाऽयुतेन च । येन देवा अमृत-॥ १५ ॥ न्दीर्घꣳ श्रवो दिव्यैरयन्त । रायस्पोष त्वमस्मभ्यङ्गवाङ्कुल्मिञ्जीवस आ युवस्व । अग्निर्गृ-हपतिस्सोमो विश्ववनिस्सविता सुमेधास्स्वाहा । अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात्पथो मा योषं मूर्द्धा भूयासꣳ स्वाहा ॥ १६ ॥ अमृतमष्टात्रिꣳशच्च ॥ ५ ॥

चित्रया यजेत पशुकाम इयँव्वै चित्रा यद्वा अस्यावँ्विश्वं भूतमधि प्रजायते तेनेयश्चित्रा य एवँ्विद्वाꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते प्रैवाऽऽग्नेयेन वापयति रेतस्सौ-म्येन दधाति रेत एव हितन्त्वष्टा रूपाणि वि करोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनन्दैव्यमे-वाऽस्मै ॥ १७ ॥ मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक्पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भव-न्ति सप्त ग्राम्याः पशवस्सप्ताऽऽरण्यास्सप्त छन्दाꣳस्युभयस्याऽवरुद्ध्या अथैता आहुतीर्जुहोत्येते वै

देवाः पुष्टिपतयस्त एवाऽस्मिन्पुष्टिन्दधति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै ॥ १८ ॥ अस्मै त एव द्वादश च ॥ ६ ॥

मारुतमसि मरुतामोजोऽपान्धारां भिन्धि रमयत मरुतश्श्येनमायिनं मनोजवसँव्वृषणꣳ सुवृक्तिम् । येन शर्द्ध उग्रमवसृष्टमेति तदश्विना परि धत्तꣳ स्वस्ति । पुरोवातो वर्षञ्जिन्वरावृथ्स्वाहा वातावद्वर्षन्नुग्ररावृथ्स्वाहा स्तनयन्वर्षन्भीमरावृथ्स्वाहाऽनशन्यवस्फूर्जन्दिद्युद्वर्षन्त्वेषरावृथ्स्वाहाऽतिरात्रँव्वर्षन्पूर्तिरावृ- ॥ १९ ॥ थ्स्वाहा बहु हाऽयमवृषादिति श्रुतरावृथ्स्वाहाऽऽतपति वर्षन्विराडावृथ्स्वाहाऽवस्फूर्जन्दिद्युद्वर्षन्भूतरावृथ्स्वाहा मान्दा वाशाश्शुन्ध्यूरजिराः । ज्योतिष्मतीस्तमस्वरीरुन्दतीस्सुफेनाः । मित्रभृतः ख्षत्रभृतस्सुराष्ट्रा इह माऽवत । वृष्णो अश्वस्य सन्दानमसि वृष्ट्यै त्वोप नह्यामि ॥ २० ॥ पूर्तिरावृद्विचत्वारिꣳशच्च ॥ ७ ॥

देवा वसव्या अग्ने सोम सूर्य । देवाश्शर्मण्या मित्रावरुणाऽर्यमन् । देवास्सपीतयोऽपान्नपादाशुहेमन् । उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिख्षात्पृथिव्यास्ततो नो वृष्ट्याऽवत । दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । पृथिवीँय्यद्व्युन्दन्ति । आ यन्नरस्सुदानवो ददाशुषे दिवः कोशमचुच्यवुः । वि पर्जन्यास्सृजन्ति रोदसी अनु धन्वना यन्ति ॥ २१ ॥ वृष्टयः । उदीरयथा मरुतस्समुद्रतो यूयँव्वृष्टिँव्वर्षयथा पुरीषिणः । न वो दस्रा उप दस्यन्ति धेनवश्शुभँय्यातामनु रथा अवृथ्सत । सृजा वृष्टिन्दिव आऽद्भिस्समुद्रं पृण । अब्जा असि प्रथमजा बलमसि समुद्रियम् । उन्नंभय पृथिवीं भिन्धीदन्दिव्यन्नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् । ये देवा दिविभागा येऽन्तरिख्षभागा ये पृथिविभागाः । त इमँय्यज्ञमवन्तु त इदङ्ख्षेत्रमा विशन्तु त इदङ्ख्षेत्रमनु वि विशन्तु ॥ २२ ॥ यन्ति देवा विꣳशतिश्च ॥ ८ ॥

मारुतमसि मरुतामोज इति कृष्णँव्वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यँव्वर्षयति रमयत मरुतश्श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्याऽवरुद्ध्यै वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवाऽस्मै पर्जन्यँव्वर्षयत्यष्टौ ॥ २३ ॥ जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सं प्र च्यावयति कृष्णाजिने सँय्यौति हविरेवाऽकरन्तर्वेदि सँय्यौत्यवरुद्ध्यै यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन्ते खर्जूरा अभवन्तेषाꣳ रस ऊर्ध्वोऽपतत्तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिञ्च्यावयति यत्करीराणि भवन्ति ॥ २२ ॥ सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्धे मधुषा सँय्यौत्यपाँव्वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिन्नि नयति मान्दा वाशा इति सँय्यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा ॥ २५ ॥ च्यावयति वृष्णो

अश्वस्य सन्दानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्द्धयति वर्षस्यावरुद्ध्यै ॥ २६ ॥ अष्टौ भवन्ति नामधेयैरेकान्न त्रिꣳशच्च ॥ ९ ॥

देवा वसव्या देवाꣳशर्मण्या देवाꣳस्सपीतय इत्या बद्ध्नाति देवताभिरेवाऽन्वहꣳवृष्टिमिच्छति यदि वर्षेत्तावत्येव होतव्यꣳयदि न वर्षेच्छ्वो भूते हविर्निर्वपेदहोरात्रे वै मित्रावरुणावहोरात्राभ्या-ङ्खलु वै पर्जन्यो वर्षति नक्तꣳवा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवाऽस्मा ॥ २७ ॥ अहोरात्राभ्यां पर्जन्यꣳवर्षयतोऽग्नये धामच्छदे पुरोडाशमष्टाकपालन्निर्वपे-न्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतस्सृष्टान्नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ता ॥ २८ ॥ एवाऽस्मै पर्जन्यꣳवर्षयन्त्युताऽवर्षि-ष्यन्वर्षत्येव सृजा वृष्टिन्दिव आऽद्भिस्समुद्रं पृणेत्याहेमाश्चैवाऽमूश्चाऽपस्समर्द्धयत्यथो आभिरेवा-ऽमूरच्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नम्भय पृथिवीमिति वर्षा-ह्वाञ्जुहोत्येषा वा ओषधीनाꣳवृष्टिवनिस्तयैव वृष्टिमा च्यावयति ये देवा दिविभागा इति कृष्णाजिन-मव धूनोतीम एवाऽस्मै लोकाः प्रीता अभीष्टा भवन्ति ॥२९॥ अस्मै धावति ता वा एकविꣳशतिश्च ॥१० ॥

सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यꣳयत्ककुदुष्णिहा जग-त्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यव रुन्धे गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्य-क्षराणि यज्जगत्या ॥ ३० ॥ परिदध्यादन्तꣳयज्ञङ्गमयेत्त्रिष्टुभा परि दधातीन्द्रियꣳवै वीर्यन्त्रिष्टुगि-न्द्रिय एव वीर्ये यज्ञं प्रति ष्ठापयति नाऽन्तङ्गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय सर्वो वा एष यज्ञो यत्त्रैधातवीयङ्कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते त्रैधातवीयेन यजेताऽभिचरन्त्सर्वो वा ॥ ३१ ॥ एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैवैन-ꣳयज्ञेनाऽभि चरति स्तृणुत एवैनमेतयैव यजेताऽभिचर्यमाणस्सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्ये-तयैव यजेत सहस्रेणेजानोऽन्तꣳवा एष पशूनाङ्गच्छति ॥ ३२ ॥ यस्सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवाऽसृजत य एवꣳविद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रन्नमति देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञो ॥ ३३ ॥ यत्त्रै-धातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्च-तुष्कपालास्त्रिष्षमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषाल्लोकानामाप्त्या उत्तरउत्तरो ज्यायान्भवत्येवमिव हीमे लोका यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै सर्वेषामभि-

गमयन्नवं वृत्यछंवट्कारꣳ हिरण्यन्ददाति तेजं एवा-॥३४॥ ऽवं रुन्धे ताप्यन्ददाति पशूनेवाऽवं रु-न्धे धेनुन्ददात्याशिषं एवाऽवं रुन्धे साम्नो वा एष वर्णो यद्धिरण्यय्यँजुषान्ताप्यंमुक्थामदानान्धेनु-रेतानेव सर्वानु वर्णानवं रुन्धे ॥३५॥ जगंत्याऽभिचरन्थ्सर्वो वै गच्छति यज्ञस्तेजं एव त्रिꣳशच्च ॥११॥

त्वष्टा हुतपुंत्रो वीन्द्रꣳ सोममाऽहरत्तस्मिन्निन्द्रं उपहवमैच्छत तन्नोपाऽह्वयत पुत्रं मेंऽवधी-रिति स यंज्ञवेशसङ्कृत्वा प्रासहा सोमंमपिबत्तस्य यदत्यशिंष्यत तत्त्वष्टाऽऽहवनीयमुप प्राऽवंर्तय-थ्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति स यावदूर्ध्वः पराविद्धयति तावति स्वयमेव व्यरमत यदि वा तावत्प्रवण-॥ ३६ ॥ मासीद्यदि वा तावदध्यग्नेरासीथ्स संभवन्नग्नीषोमाविभि समंभवथ्स इंषुमात्रमिंषुमात्रवँवि-ष्वङ्ङवर्द्धत स इमाल्लोँकानवृणोद्यदिमाल्लोँकानवृणोत्तद्वृत्रस्य वृत्रत्वन्तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुनाऽशक्नोदथ वै तर्हि विष्णु- ॥ ३७ ॥ रन्या देवताऽऽसीथ्सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनाऽयमिदमिति स विष्णुस्त्रेधाऽऽत्मानवँवि न्यधत्त पृथिव्यान्तृतीयमन्तरिक्षे तृतीयन्दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेद्यत्पृथिव्यान्तृतीयमासीत्तेने-न्द्रो वज्रमुदयच्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं ॥ ३८ ॥ मयि वीर्यन्तत्ते प्र दा-स्यामीति तदस्मै प्राऽयच्छत्तत्प्रत्यगृह्णादधामेति तद्विष्णवेऽति प्राऽयच्छत्तद्विष्णुः प्रत्यगृह्णादस्मा-स्विन्द्रं इन्द्रियन्दधात्विति यदन्तरिक्षे तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं ॥ ३९ ॥ मयि वीर्यन्तत्ते प्र दास्यामीति तदस्मै प्राऽयच्छत्तत्प्रत्यगृह्णाद्द्विर्माऽधा इति तद्विष्णवेऽति प्राऽयच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्रं इन्द्रियन्दधात्विति यद्दिवि तृतीयमासी-त्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा मे प्र हार्येनाऽह- ॥ ४० ॥ मिदमस्मि तत्ते प्र दास्यामीति त्वी(३) इत्यब्रवीथ्सन्धान्तु सन्दधावहै त्वामेव प्र विशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत्त्वामेवेन्धीय तव भोगाय त्वां प्र विशेयमित्यब्रवीत्तँवृत्रः प्राऽविशदुदरँवै वृत्रः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो य ॥ ४१ ॥ एवँवेद हन्ति क्षुधं भ्रातृव्यन्तदस्मै प्राऽयच्छत्तत्प्रत्य-गृह्णात्त्रिर्माऽधा इति तद्विष्णवेऽति प्राऽयच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्रं इन्द्रियन्दधात्विति य-त्त्रिः प्राऽयच्छत्त्रिः प्रत्यगृह्णात्तत्त्रिधातोस्त्रिधातुत्वय्यँद्विष्णुरन्वतिष्ठत विष्णवेऽति प्राऽयच्छत्त-स्मादैन्द्रावैष्णवꣳ हविर्भवति यद्वा इदङ्किञ्च तदस्मै तत्प्राऽयच्छदृचस्सामानि यजूꣳषि सहस्रँवा अ-स्मै तत्प्राऽयच्छत्तस्माथ्सहस्रंदक्षिणम् ॥४२॥ प्रवणवँविष्णुर्वा इदमिदमहय्यो भवत्येकविꣳशतिश्च ॥१२॥

देवा वै राजन्याज्जायमानादबिभयुस्तमन्तरेव सन्तन्दाम्नाऽपौम्भन्थ्स वा एषोऽपोब्धो जा-यते यद्राजन्यो यद्वा एषोऽनपोब्धो जायेत वृत्रान्घ्नꣳश्चरेद्यङ्कामयेत राजन्यमनपोब्धो जायेत वृत्रा-न्घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यञ्चरुन्निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्रह्मणैवैन-

न्दाम्नोऽपोम्भनान्मुञ्चति हिरण्मयन्दाम दक्षिणा साक्षादेवैनन्दाम्नोऽपोम्भनान्मुञ्चति ॥ ४३ ॥
एनन्द्वादश च ॥ १३ ॥

नवोनवो भवति जायमानोऽह्नांकेतुरुषसामेत्यग्रे । भागन्देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरति दीर्घमायुः । यमादित्या अꣳशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति । तेन नो राजा वरुणो बृहस्पतिरा प्यायय‍न्तु भुवनस्य गोपाः । प्राच्यान्दिशि त्वमिन्द्राऽसि राजोतोदीच्यावृत्रहन्वृत्रहाऽसि । यत्र यन्ति स्रोत्यास्त- ॥ ४४ ॥ ज्जितन्ते दक्षिणतो वृषभ एधि हव्यः । इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाति । विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत् । अस्येदेव प्र रिरिचे महित्वन्दिवः पृथिव्याः पर्यन्तरिक्षात् । स्वराडिन्द्रो दम आ विश्वगूर्तस्स्वरिरमत्रो ववक्षे रणाय । अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशान- ॥ ४५ ॥ मस्य जगतस्सुवर्दृशमीशानमिन्द्र तस्थुषः । त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वांवृत्रेष्विन्द्र सत्पतिन्नरस्त्वाङ्काष्ठास्ववर्तः । यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी । पिबा सोममिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाऽद्रिः । ॥ ४६ ॥ सोतुर्बाहुभ्याꣳ सुयतो नार्वा । रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । उदग्ने शुचयस्तव वि ज्योतिषोदु त्यञ्जातवेदसꣳ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशवंविचक्षण । चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुष- ॥ ४७ ॥ श्च । विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तांय्युज्यं पयः । विश्वे देवाश्शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्याऽस्मिन्बर्हिषि मादयद्ध्वम् ॥ ४८ ॥ तदीशानमद्रिस्तस्थुषस्त्रिꣳशच्च ॥ १४ ॥

देवा मनुष्या देवासुरा अब्रुवन्देवासुरास्तेषाङ्गायत्री प्रजापतिस्ता यत्राऽग्ने गोभिश्चित्रया मारुतन्देवा वसव्या अग्ने मारुतमिति देवा वसव्या देवाश्शर्मण्यास्सर्वाणि त्वष्टा हतपुत्रो देवा वै राजन्यान्नवोनवश्चतुर्दश ॥ १४ ॥ देवा मनुष्याः प्रजां पशून्देवा वसव्याः परिदद्ध्यादिदमस्म्यष्टाचत्वारिꣳशत् ॥ ४८ ॥ देवा मनुष्या मादयद्ध्वम् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ द्वितीयकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्री॒गु॒रु॒भ्यो॒ न॒मः॒ हरिः ओ(४)म्॒ ॥

वि॒श्वरू॑पो॒ वै त्वा॒ष्ट्रः पु॒रोहि॑तो दे॒वाना॑मासीथ्स्व॒स्रीयोऽसु॑राणा॒न्तस्य॒ त्रीणि॑ शी॒र्षाण्या॑-
सन्थ्सोम॒पान॑ꣳ सु॒रा॒पान॑म॒न्नाद॑न॒ꣳ॒ स प्र॒त्यख्षं॑न्दे॒वेभ्यो॑ भा॒गम॑वदत्प॒रोख्ष॒मसु॑रेभ्य॒स्सर्व॑स्मै॒ वै प्र॒त्य-
ख्षं॑ भा॒गव्ँव॑दन्ति॒ यस्मा॑ ए॒व प॒रोख्ष॒व्ँवद॑न्ति॒ तस्य॑ भा॒ग उ॑दि॒तस्तस्मा॒दिन्द्रो॑ऽबिभेदी॒दृङ्॒ वै रा॒ष्ट्रव्ँ॒वि
प॒र्याव॑र्तय॒तीति॒ तस्य॒ वज्र॑मा॒दाय॑ शी॒र्षाण्य॑च्छिन॒द्यथ्सो॑म॒पान॒- ॥ १ ॥ मासी॒थ्स क॒पिञ्ज॑लोऽभव॒-
द्यथ्सु॑रा॒पान॒ꣳ॒ स क॑ल॒विङ्को॒ यद॒न्नाद॑न॒ꣳ॒ स ति॑त्ति॒रिस्तस्या॑ऽञ्ज॒लिना॑ ब्रह्मह॒त्यामुपा॑ऽगृह्णा॒त्ताꣳ सव्ँ॑व-
थ्स॒रम॑बिभ॒स्तं भू॒तान्य॒भ्य॑क्रोश॒न्ब्रह्म॑ह॒न्निति॒ स पृ॑थि॒वीमुपा॑ऽसीदद॒स्यै ब्र॑ह्मह॒त्यायै॒ तृती॑य॒ं प्रति॑
गृहा॒णेति॒ साऽब्र॑वी॒द्वर॑व्ँवृणै खा॒तात्प॑राभवि॒ष्यन्ती॑ मन्ये॒ तत॒ो मा परा॑ भूव॒मिति॑ पु॒रा ते॑ ॥ २ ॥
सव्ँ॑वथ्स॒रादपि॑ रोहा॒दित्य॑ब्रवी॒त्तस्मा॑त्पु॒रा सव्ँ॑वथ्स॒रात्पृ॑थि॒व्यै खा॒तमपि॑ रोहति॒ वारे॑वृत॒ꣳ॒ ह्य॑स्यै॒ तृती॑यं
ब्र॒ह्मह॒त्यायै॒ प्रत्य॑गृह्णा॒त्तथ्स्वकृ॑त॒मिरि॑णमभव॒त्तस्मा॒दाहि॑ताग्निश्श्र॒द्धादे॑व॒स्स्वकृ॑त॒ इरि॑णे॒ नाऽव॑ स्येद्ब्र-
ह्मह॒त्यायै॒ ह्ये॑ष वर्ण॒स्स वन॒स्पती॒नुपा॑ऽसीदद॒स्यै ब्र॑ह्मह॒त्यायै॒ तृती॑य॒ं प्रति॑ गृह्णी॒तेति॒ तेऽब्रु॑व॒न्वर॑व्ँवृ-
णामहै वृ॒क्णात्॒ ॥ ३ ॥ प॑राभवि॒ष्यन्तो॑ मन्यामहे॒ तत॒ो मा परा॑ भूमेत्या॒व्रश्च॑नाद्वो॒ भूया॑ꣳस॒ उत्ति॑ष्ठा॒-
नित्य॑ब्रवी॒त्तस्मा॑दा॒व्रश्च॑नाद्वृ॒ख्षाणा॒ं भूया॑ꣳस॒ उत्ति॑ष्ठन्ति॒ वारे॑वृत॒ꣳ॒ ह्ये॑षा॒न्तृती॑यं ब्रह्मह॒त्यायै॒
प्रत्य॑गृह्ण॒न्थ्स नि॒र्या॒सो॑ऽभव॒त्तस्मा॑न्नि॒र्या॒सस्य॒ नाऽऽश्यं॑ ब्रह्मह॒त्यायै॒ ह्ये॑ष वर्णो॑ऽथो॒ खलु॒ य ए॒व
लोहि॑तो॒ यो वा॒ऽऽव्रश्च॑नान्नि॒र्येष॑ति॒ तस्य॒ नाऽऽश्य॑- ॥ ४ ॥ ङ्काम॑म॒न्यस्य॒ स स्त्री॑षꣳसा॒दमुपा॑ऽसीदद॒-
स्यै ब्र॑ह्मह॒त्यायै॒ तृती॑य॒ं प्रति॑ गृह्णी॒तेति॒ ता अ॑ब्रुव॒न्वर॑व्ँवृणामहा॒ ऋत्वि॑यात्प्र॒जाव्ँ॒विन्दामहै॒ काम॒मा
विज॑नितो॒स्सम्भ॑वा॒मेति॒ तस्मा॑दृत्वि॑या॒थ्स्त्रियः॑ प्र॒जाव्ँ॒विन्दते॒ काम॒मा विज॑नितो॒स्सं भ॑वन्ति॒ वारे॑वृ-
त॒ꣳ॒ ह्या॑सा॒न्तृती॑यं ब्रह्मह॒त्यायै॒ प्रत्य॑गृह्ण॒न्थ्सा मल॑वद्वासा अभव॒त्तस्मा॒न्मल॑वद्वाससा॒ न सव्ँ॑वदेत॒
॥ ५ ॥ न स॒हाऽऽसी॑त॒ नाऽस्या॒ अन्न॑मद्याद्ब्रह्मह॒त्यायै॒ ह्ये॑षा वर्णं॑ प्रति॒मुच्याऽऽस्तेऽथो॒ खल्वा॑हुरभ्य-
ञ्जन॒व्ँवाव स्त्रि॒या अन्न॑म॒भ्यञ्ज॑नमे॒व न प्र॑ति॒गृह्य॒ङ्काम॑म॒न्यदिति॒ यां मल॑वद्वाससꣳ स॒म्भव॑न्ति॒ यस्तत॒ो
जाय॑ते॒ सो॑ऽभिश॒स्तो याम॑रण्ये॒ तस्यै॑ स्ते॒नो यां परा॑ची॒न्तस्यै॑ ह्रीतमु॒ख्य॑पग॒ल्भो या स्नाति॒ तस्या॑
अ॒प्सु मारु॑को॒ या ॥ ६ ॥ ऽभ्य॒ङ्क्ते तस्यै॑ दु॒श्चर्मा॒ या प्र॑लि॒खते॒ तस्यै॑ खल॒तिर॑पमा॒री याऽऽङ्क्ते तस्यै॑
का॒णो या द॒तो धाव॑ते॒ तस्यै॑ श्या॒वद॒न्॒-या न॒खानि॑ निकृ॒न्तते॒ तस्यै॑ कुन॒खी या कृ॒णत्ति॒ तस्यै॑ क्ली॒बो
या रज्जु॑ꣳ सृजति॒ तस्या॑ उ॒द्बन्धु॑को॒ या प॒र्णेन॒ पिब॑ति॒ तस्या॑ उ॒न्मादु॑को॒ या ख॒र्वेण॒ पिब॑ति॒ तस्यै॑

खर्वस्तिस्रो रात्रीर्व्रतश्चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय ॥ ७ ॥ यत्सोमपानन्ते वृक्णात्तस्य नाऽऽश्यव्वदेत मारुको याऽखर्वेण वा त्रीणि च ॥ १ ॥

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत्तस्मिन्निन्द्र उपहवमैच्छत तन्नोपाऽह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्राऽवर्तयत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति यदवर्तयत्तद्वृत्रस्य वृत्रत्वय्यदब्रवीत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति तस्माद-स्ये-॥ ८ ॥ न्द्रश्शत्रुरभवत्स संभवन्नग्नीषोमावभि समभवत्स इषुमात्रमिषुमात्रव्विष्वङ्ङ्वर्द्धत स इमाल्लोकानवृ-णोद्यदिमाल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वन्तस्मादिन्द्रोऽबिभेत्स प्रजापतिमुपाऽधाव-च्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्राऽयच्छदेतेन जहीति तेनाऽभ्यायत तावब्रूतामग्नीषोमौ मा ॥ ९ ॥ प्र हारावमन्तस्स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेयमैच्छेता-न्ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्राऽयच्छत्तावब्रूतामभि सन्दष्टौ वै स्वो न शक्नुव ऐ-तुमिति स इन्द्र आत्मनश्शीतरूरावजनयत्तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद ॥१०॥ नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत्तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एं-नन्तदजहितां प्राणो वै दख्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दख्षक्रतू इति प्राणापाना-वेवाऽऽत्मन्धत्ते सर्वमायुरेति स देवता वृत्रान्निर्हूय वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आ-॥ ११ ॥ ऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमा-वास्यायान्तत्सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतान्द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूताव्वरव्वृणावहै नख्षत्रविहिताऽहमसानीत्यसावब्रवीच्चित्रविहिता-ऽहमितीयन्तस्मान्नख्षत्रविहिताऽसौ चित्रविहितेयय्य एवन्द्यावापृथिव्यो- ॥ १२ ॥ र्वरव्वेदैनव्वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्यन्नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन्क इदमच्छैतीति गौरित्यब्रुवन्गौर्वाव सर्वस्य मित्रमिति साऽब्रवी- ॥ १३ ॥ द्वरव्वृणै मय्येव सतोभयेन भुनजाद्ध्वा इति तद्गौराऽह-रत्तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत्सोमस्य यत्पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति ब्रह्मवादिनो वदन्ति किन्देवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात्तेने-न्द्रञ्ज्येष्ठं पुत्रन्निरवासा-ययदिति तस्माज्ज्येष्ठं पुत्रन्धनेन निरवसाययन्ति ॥ १४ ॥ अस्य मा वेदाऽऽ द्यावापृथिव्योरब्रवीदिति तस्माच्चत्वारि च ॥ २ ॥

इन्द्रव्वृत्रञ्जघ्निवाꣳसं मृधोऽभि प्राऽवेपन्त स एतव्वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्तन्निर-वपत्तेन वै स मृधोऽपाऽहत यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हत इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्याद्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदै-न्द्रन्दधि ॥ १५ ॥ तन्निरवपत्तेन वै स देवताश्चेन्द्रियञ्चाऽवाऽरुन्ध यदाग्नेयोऽष्टाकपालोऽमावास्यायां

भवत्यैन्द्रन्दधि देवताँश्चैव तेनैन्द्रियञ्च यजमानोऽव रुन्ध इन्द्रस्य वृत्रञ्जघ्नुष इन्द्रियव्ँवीर्यं पृथिवीमनु व्याँर्च्छत्तदोषधयो वीरुधोऽभवन्थ्स प्रजापतिमुपाऽधावद्वृत्रं मे जघ्नुष इन्द्रियव्ँवीर्यं ॥ १६ ॥ पृथिवीमनु व्यारत्तदोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सन्नयतेति तत्पशव ओषधीभ्योऽध्यात्मन्थ्समनयन्तत्प्रत्यदुहन् यथ्समनयन्तथ्साँन्नाय्यस्य सान्नाय्यत्वय्ँयत्प्रत्यदुहन्त-त्प्रतिधुषः प्रतिधुक्त्वꣳ समनैषुः प्रत्यधुक्षन्न तु मयि श्रयत इत्यब्रवीदेतदस्मै ॥ १७ ॥ शृतङ्कुरुते-त्यब्रवीत्तदस्मै शृतमकुर्वन्निन्द्रियव्ँवावाऽस्मिन्वीर्यन्तदश्रयन्तच्छृतस्य शृतत्वꣳ समनैषुः प्रत्यधुक्ष-ञ्छृतमक्रन्न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत्तदस्मै दध्यकुर्वन्तदेनमधिनोत्तद्दध्नो दधित्वं ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्याऽवदेय-॥ १८ ॥ न्दधि हि पूर्वङ्क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्याऽव द्येदिन्द्रियमेवाऽस्मिन्वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति य-त्पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्याथ्सौम्यन्तद्यत्क्वलै राक्षसन्तद्यत्तण्डुलैर्वैश्वदेवन्तद्यदातञ्चनेन मानुष-न्तद्यद्दध्ना तथ्सेन्द्रन्दध्नाऽऽतनक्ति ॥ १९ ॥ सेन्द्रत्वायाँऽग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य स-न्तत्या इन्द्रो वृत्रꣳ हत्वा पराँ परावतमगच्छदपाऽराधमिति मन्यमानस्तन्देवताः प्रैषमैच्छन्थ्सोऽब्र-वीत्प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन्तस्माँत्पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्याँ प्रत्याऽगच्छत्तन्देवा अभि समगच्छन्ताऽमा वै नो- ॥ २० ॥ ऽद्य वसु वसतीतीन्द्रो हि देवानाव्ँवसु तदमावास्याया अमावास्यत्वं ब्रह्मवादिनो वदन्ति किन्देवत्यꣳ सान्नाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रव्ँवाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति ॥ २१ ॥ दधि मे जघ्नुष इन्द्रियव्ँवीर्यमि-त्यब्रवीदेतदस्मा अवदेयन्तनक्ति नो द्विचत्वारिꣳशच्च ॥३॥

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासे-ऽनुनिर्वाप्यो भवति तेन पूर्णमासस्सेन्द्र ऐन्द्रन्दध्यमावास्यायान्तेनाऽमावास्या सेन्द्रा य एवव्ँवि-द्वान्दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वश्वोऽस्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञे-ऽकुर्वत तदसुरा अकुर्वत ते देवा एता- ॥ २२ ॥ मिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुन्तां पौर्णमासꣳ सꣳस्थाप्याऽनु निरवपन्ततो देवा अभवन्पराऽसुरा यो भ्रातृव्य-वान्थ्स्यात्स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनु निर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याँऽऽग्ना-वैष्णवेन देवताँश्च यज्ञञ्च भ्रातृव्यस्य वृङ्क्ते मिथुनान्पशून्थ्सारस्वताभ्याय्ँयावदेवाऽस्याऽस्ति त-॥२३ ॥ थ्सर्वं-व्ँवृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवान्नाऽमावास्याꣳ हत्वा भ्रातृव्यन्नाऽऽ प्यायति साकंप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नाऽन्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यन्तृप्त एवैनमिन्द्रः प्रजया पशुभिस्त-र्पयति दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानश औदुंबरं ॥ २४ ॥ भवत्यूर्वा उदुम्बर ऊर्क्पशव

ऊर्जैवाऽस्मा ऊर्जं पशूनव रुन्धे नाऽगतश्रीर्महेन्द्रँय्यजेत त्रयो वै गतश्रियश्शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वान्देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राऽऽप्नोति पापीयान्भवति सँव्वथ्सरमिन्द्रँय्यजेत सँव्वथ्सरꣳ हि व्रतन्नाऽति स्वै- ॥ २५ ॥ वैनन्देवतेज्यमाना भूत्या इन्धे वसीयान्भवति सँव्वथ्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालन्निर्वपेथ्सँव्वथ्सरमेवैनँव्वृत्रञ्जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमा लम्भयति ततोऽधि काममँय्यजेत ॥ २६ ॥ एतान्तदौदुंबरꣳ स्वा त्रिꣳशच्च ॥ ४ ॥

नाऽसोमयाजी सन्नयेदनागतँव्वा एतस्य पयो योऽसोमयाजी यदसोमयाजी सन्नयेत्परिमोष एव सोऽनृतङ्करोत्यथो परैव सिच्यते सोमयाज्येव सन्नयेत्पयो वै सोमः पयस्सान्नाय्यं पयसैव पय आत्मन्धत्ते वि वा एतं प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यँय्यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा ॥ २७ ॥ अभ्युदेति त्रेधा तण्डुलान् वि भजेद्ये मद्ध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालङ्कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुँय्येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवाऽस्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छति यज्ञो वै विष्णुः पशवश्शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति न द्वे ॥ २८ ॥ यजेत यत्पूर्वया संप्रति यजेतोत्तरया छंबट्कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छंबट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयाऽवरुन्ध इन्द्रियमुत्तरया देवलोकमेव ॥ २९ ॥ पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवाऽस्मै लोकेऽर्द्धुकं भवति दाख्षायणयज्ञेन सुवर्गकामो यजेत पूर्णमासे सन्नयेन्मैत्रावरुण्याऽऽमिख्षयाऽमावास्यायाँय्यजेत पूर्णमासे वै देवानाꣳ सुतस्तेषामेतमर्द्धमासं प्रसुतस्तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् ॥ ३० ॥ पूर्वेद्युर्यजते वेदिमेव तत्करोति यद्वथ्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सम्पादयति स एतमर्द्धमासꣳ सधमादन्देवैस्सोमं पिबति यन्मैत्रावरुण्याऽऽमिख्षयाऽमावास्यायाँय्यजते यैवाऽसौ देवानाँव्वशाऽनूबन्ध्या सो एवैषैतस्य साख्षाद्वा एष देवानभ्यारोहति य एषाँय्यज्ञ- ॥ ३१ ॥ मभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविद्ध्यति पापीयान्भवति यदि नाऽवविद्ध्यति सदृङ्व्यावृत्काम एतेन यज्ञेन यजेत ख्षुरपविर्ह्येष यज्ञस्ताजक्पुण्यो वा भवति प्र वा मीयते तस्यैतद्व्रतन्नाऽनृतँव्वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नाऽस्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवास्सर्वन्न कुर्वन्ति ॥ ३२ ॥ चन्द्रमा द्वे देवलोकमेव यद्यज्ञं पल्पूलयेयुष्षट्च ॥ ५ ॥

एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवाऽवसाने वरे देवानामव स्यत्येतानि वा अङ्गापरूꣳषि सँव्वथ्सरस्य यद्दर्शपूर्णमासौ य एवँव्विद्वान्दर्शपू-

र्णमासौ यजतेऽङ्गापरूꣳष्येव सꣳवथ्सरस्य प्रति दधात्येते वै सꣳवथ्सरस्य चख्षुषी यद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गꣳल्लोकमनु पश्य- ॥ ३३ ॥ त्येषा वै देवानाꣳविक्रान्तिर्यद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमत एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमासौ यजते य एव देवयानः पन्था-स्तꣳ समारोहत्येतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्यां- ॥ ३४ ॥ मेवैभ्यो हव्यꣳवहत्येतद्वै देवानामास्यꣳयद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमासौ यजते साख्षादेव देवानामास्ये जुहोत्येष वै हविर्द्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रञ्जुहोति यजते दर्शपूर्णमासावहरहर्हविर्द्धानिनाꣳ सुतो य एववꣳविद्वान्दर्शपूर्ण-मासौ यजते हविर्द्धान्यस्मीति सर्वमेवाऽस्य बर्हिष्यन्दत्तं भवति देवा वा अह-॥ ३५ ॥ यंज्ञियन्ना-ऽविन्दन्ते दर्शपूर्णमासावपुनन्तौ वा एतौ पूतौ मेद्ध्यौ यद्दर्शपूर्णमासौ य एववꣳविद्वान्दर्शपूर्णमा-सौ यजते पूतावेवैनौ मेद्ध्यौ यजते नाऽमावास्यायाञ्च पौर्णमास्याञ्च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रिय-स्स्याथ्सोमस्य वै राज्ञोऽर्द्धमासस्य रात्रयः पत्नय आसन्तासाममावास्याञ्च पौर्णमासीञ्च नोपैत्- ॥ ३६ ॥ ते एनमभि समनह्येतान्तꣳयख्ष्म आर्च्छद्राजानꣳयख्ष्म आरदिति तद्राजयख्ष्मस्य जन्म यत्पापीयानभवत्तत्पापयख्ष्मस्य यज्जायाभ्यामविन्दत्तज्जायेन्यस्य य एवमेतेषाꣳयख्ष्माणाञ्जन्म वेद नैनमेते यख्ष्मा विन्दन्ति स एते एव नमस्यन्नुपाऽधावत्ते अब्रूताꣳवरꣳवृणावहा आवन्देवानां भागधे असावा-॥ ३७ ॥ ऽऽवदधि देवा इज्यान्ता इति तस्माꣳथ्सदृशीनाꣳ रात्रीणाममावास्यायाञ्च पौर्णमास्याञ्च देवा इज्यन्त एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवꣳवेद भूतानि ख्षुधमघ्नन्थ्सद्यो मनुष्या अर्द्धमासे देवा मासि पितरस्सꣳवथ्सरे वनस्पतयस्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्द्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते सꣳवथ्सरे वनस्पतयः फलङ्गृह्णन्ति य एवꣳवेद हन्ति ख्षुधं भ्रातृव्यम् ॥ ३८ ॥ पश्यति ताभ्यामहरैदसाव फलꣳ सप्त च ॥ ६ ॥

देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाऽश्रयन्त हिङ्करोति सामैवाऽकर्हिङ्करोति यत्रैव देवा अश्रयन्त तत एवैनान्प्र युङ्क्ते हिङ्करोति वाच एवैष योगो हिङ्करोति प्रजा एव तद्यजमानस्सृजते त्रिः प्रथमामन्वाह त्रिरुत्तमाꣳयज्ञस्यैव तद्बर्सं ॥ ३९ ॥ नह्यत्यप्रस्रꣳसाय सन्ततमन्वाह प्राणानाम-न्नाद्यस्य सन्तत्या अथो रख्षसामपहत्यै राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयꣳल्लोक इममेव लोकमभि जयति त्रिर्वि गृह्णाति त्रय इमे लोका इमानेव लोकानभि जयति बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभि जयति प्र वो ॥ ४० ॥ वाजा इत्यनिरुक्तां प्राजाप-त्यामन्वाह यज्ञो वै प्रजापतिर्यज्ञमेव प्रजापतिमा रभते प्र वो वाजा इत्यन्वाहाऽन्नꣳवै वाजोऽन्नमेवा-ऽव रुन्धे प्र वो वाजा इत्यन्वाह तस्माꣳत्प्राचीनꣳ रेतो धीयतेऽग्न आ याहि वीतय इत्याह तस्मात्प्र-तीचीः प्रजा जायन्ते प्र वो वाजा ॥ ४१ ॥ इत्यन्वाह मासा वै वाजा अर्द्धमासा अभिद्यवो देवा

हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानस्सुम्नयुरिदमसीदमसीत्येव यज्ञस्य प्रियन्धामाऽव रुन्धे यङ्कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्याऽनूच्याऽग्न आ याहि वीतय इति सन्ततमुत्तरमर्द्धर्चमा लभेत ॥ ४२ ॥ प्राणेनैवाऽस्याऽपानन्दाधार सर्वमायुरिति यो वा अरत्निꣳ सामिधेनीनाव्वेदाऽरत्नावेव भ्रातृव्यङ्कुरुतेऽर्द्धर्चौ सन्दधात्येष वा अरत्निस्सामिधेनीनाय्य एवव्वेदाऽरत्नावेव भ्रातृव्यङ्कुरुत ऋषेर्ऋषेर्वा एता निर्मिता यथ्सामिधेन्यस्ता यदसय्युक्तास्स्युः प्रजया पशुभिर्यजमानस्य वि तिष्ठेरन्नर्द्धर्चौ सन्दधाति सय्युनक्त्येवैनास्ता अस्मै सय्युक्ता अवरुद्धास्सर्वामाशिषन्दुह्रे ॥ ४३ ॥ बरुसव्वो जायन्ते प्र वो वाजा लभेत दधाति सन्दर्श च ॥ ७ ॥

अयज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथन्तरस्यैष वर्णस्तन्त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतन्तृचमन्वाह यज्ञमेव तथ्सामन्वन्तङ्करोत्यग्निरमुष्मिँल्लोक आसीदादित्योऽस्मिन्ताविमौ लोकावशान्ता- ॥ ४४ ॥ वास्तान्ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यग्न आ याहि वीतय इत्यस्मिँल्लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिँल्लोक आदित्यन्ततो वा इमौ लोकावशाम्यतायँ्य एवमन्वाहाऽनयोर्लोकयोश्शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवव्वेद पञ्चदश सामिधेनीरन्वाह पञ्चदश ॥ ४५ ॥ वा अर्द्धमासस्य रात्रयोऽर्द्धमासशस्सव्वथ्सर आप्यते तासान्त्रीणि च शतानि षष्टिश्चाऽक्षराणि तावतीस्सव्वथ्सरस्य रात्रयोऽक्षरश एव सव्वथ्सरमाप्नोति नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन्दारावार्द्रेऽग्निञ्जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदथ्स धूममजनयत्परुच्छेपोऽभ्यवदथ्सोऽग्निमजनयदृष इत्यब्रवी- ॥ ४६ ॥ यथ्समावद्विद्व कथा त्वमग्निमजीजनो नाऽहमिति सामिधेनीनामेवाऽहव्वर्णव्वेदेत्यब्रवीद्यद्घृतवत्पदमनूच्यते स आसाव्वर्णस्तन्त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति स्त्रियस्तेन यदृचस्स्त्रियस्तेन यद्गायत्रियस्स्त्रियस्तेन यथ्सामिधेन्यो वृषण्वतीमन्वाह ॥ ४७ ॥ तेन पुꣳस्वतीस्तेन सेन्द्रास्तेन मिथुना अग्निर्देवानान्दूत आसीदुशना काव्योऽसुराणान्तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निन्दूतव्वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन्पराऽसुरा यस्यैवव्विदुषोऽग्निन्दूतव्वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यद्ध्वरवतीमन्वाह भ्रातृव्यमेवैतया ॥ ४८ ॥ दुध्वरति शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया पवयति समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परि दधात्यस्कन्दाय यदत ऊर्द्ध्वमभ्यादद्ध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्त्रयो वा अग्नयो हव्यवाहनो देवानाङ्कव्यवाहनः पितृणाꣳ सहरक्षा असुराणान्त एतर्ह्या शꣳसन्ते माव्वरिष्यते मा- ॥ ४९ ॥ मिति वृणीद्ध्वꣳ हव्यवाहनमित्याह य एव देवानान्तव्वृणीत आर्षेयव्वृणीते बन्धोरेव नैत्यथो सन्तत्यै परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोऽनु प्र पिपते ॥ ५० ॥ अशान्तावाह पञ्चदशाऽब्रवीदन्वाहैतया वरिष्यते मामेकान्न त्रिꣳशच्च ॥ ८ ॥

अग्ने॑ मह॒ाꣳ अ॒सीत्या॑ह म॒हान् ह्येष यद॒ग्निर्ब्रा॑ह्म॒णेत्या॑ह ब्रा॒ह्म॒णो ह्येष भा॑र॒तेत्या॑हैष हि दे॒वेभ्यो॑ ह॒व्यं भर॑ति दे॒वेद्ध॒ इत्या॑ह दे॒वा ह्येतमैन्ध॑त॒ मन्वि॑द्ध॒ इत्या॑ह॒ मनु॒र्ह्येतमुत्त॑रो दे॒वेभ्य॒ ऐन्धद॒र्षि॑ष्टुत॒ इत्या॒हर्ष॑यो॒ ह्येतमस्तु॑व॒न्विप्रा॑नुमदित॒ इत्या॑ह॒ ॥ ५१ ॥ विप्रा॒ ह्येते यच्छु॑श्रु॒वाꣳस॑ः कविश॒स्त इत्या॑ह क॒वयो॒ ह्येते यच्छु॑श्रु॒वाꣳसो॒ ब्रह्म॑सꣳशित॒ इत्या॑ह॒ ब्रह्म॑सꣳशितो॒ ह्येष घृ॒ताह॑वन॒ इत्या॑ह घृ॒ताहु॑ति॒र्ह्य॑स्य प्रि॒यत॑मा प्र॒णीर्य॒ज्ञाना॒मित्या॑ह प्र॒णीर्ह्येष य॒ज्ञानाꣳ॑ र॒थीर॑ध्व॒रा॒णा॒मित्या॑हैष हि दे॑व॒र॒थोऽतू॒र्तो॒ होतेत्या॑ह॒ न ह्येतङ्कश्च॒न ॥ ५२ ॥ तर॑ति॒ तूर्णि॑र्ह॒व्य॒वा॒डित्या॑ह॒ सर्व॒ꣳ॒ ह्येष तर॒त्यास्पात्र॑ञ्जु॒हूर्दे॒वाना॒मित्या॑ह जु॒हूर्ह्येष दे॒वाना॑ञ्चम॒सो दे॑व॒पान॒ इत्या॑ह चम॒सो ह्येष दे॑व॒पानो॒ऽराꣳ॒ इ॑वाऽग्ने॒ ने॒मिर्दे॒वाꣳस्त्वं प॑रि॒भूर॒सीत्या॑ह दे॒वान् ह्येष प॑रि॒भूर्यद्ब्रूयादा व॑ह दे॒वान्दे॑वय॒ते यज॑मानायेति॒ भ्रातृ॑व्यमस्मै ॥ ५३ ॥ जनये॒दा व॑ह दे॒वान् यज॑माना॒येत्या॑ह॒ यज॑मानमे॒वैतेन॑ वर्द्धयत्य॒ग्निम॑ग्न॒ आ व॑ह॒ सोम॒मा व॒हेत्या॑ह दे॒वता॑ ए॒व तद्य॑थापूर्वमु॒प॑ ह्वयत॒ आ चा॑ऽग्ने दे॒वान् व॑ह सु॒यजा॑ च यज जातवेद॒ इत्या॑हा॒ऽग्निमे॒व तथ्सꣳश्य॑ति॒ सो॑ऽस्य॒ सꣳशि॑तो दे॒वेभ्यो॑ ह॒व्यँव्व॑हत्य॒ग्निर्हो॒ते- ॥ ५४ ॥ त्या॑हा॒ऽग्निर्वै दे॒वानाꣳ॒ होता॒ य ए॒व दे॒वानाꣳ॒ होता॒ तव्वृ॑णीते॒ स्मो व॒यमित्या॑हा॒ऽऽत्मान॑मे॒व स॒त्त्वङ्ग॑मयति सा॒धु ते॑ यजमान दे॒वते॒त्या॑हा॒ऽऽशिष॑मे॒वैतामा शा॑स्ते॒ यद्ब्रू॒याद्यो॑ऽग्निꣳ होता॑र॒मवृ॑था॒ इत्य॒ग्निनो॑भ॒यतो॒ यज॑मान॒ं परि॑ गृह्णी॒यात्प्र॒मायु॑कस्स्याद्यजमानदे॒व॒त्या॑ वै जु॒हूर्भ्रा॑तृव्यदेव॒त्यो॑प॒भृ- ॥ ५५ ॥ द्यद्वे इ॑व ब्रू॒याद्भ्रातृ॑व्यमस्मै जनयेद्घृ॒तव॑तीमद्ध्व॒र्यो॒ स्रुच॒मा॒ऽस्य॒स्वेत्या॑ह॒ यज॑मानमे॒वैतेन॑ वर्द्धयति दे॒वा॒यु॒व॒मित्या॑ह दे॒वान् ह्येषा॑ऽव॑ति वि॒श्ववा॑रा॒मित्या॑ह॒ विश्व॒ꣳ॒ ह्येषा॑ऽव॒तीडा॑महै दे॒वाꣳ ई॒डेन्या॑न्नम॒स्याम॑ नम॒स्यान्॒ यजा॑म य॒ज्ञिया॒नित्या॑ह मनु॒ष्या॑ वा ई॒डेन्या॑ः पि॒तरो॑ नम॒स्या॑ दे॒वा य॒ज्ञिया॑ दे॒वता॑ ए॒व तद्य॑थाभा॒गँय्य॑जति ॥ ५६ ॥ विप्रा॑नुमदित॒ इत्या॑ह च॒ना॒ऽस्मै॒ होतो॑पभृद्दे॒वता॑ ए॒व त्रीणि॑ च ॥ ९ ॥

त्रीꣳस्तृ॒चान॑नु॒ब्रूयाद्रा॒जन्य॑स्य त्र॒यो॒ वा अ॒न्ये रा॑ज॒न्या॑त्पुरु॑षा ब्राह्म॒णो वैश्य॑श्शू॒द्रस्ताने॒वा॒ऽस्मा॒ अनु॑कान्करोति॒ पञ्च॑द॒शा॒ऽनु॒ ब्रूयाद्राज॒न्य॑स्य पञ्च॒दशो॒ वै रा॑ज॒न्य॑स्स्व ए॒वैन॒ꣳ॒ स्तोमे॒ प्रति॑ष्ठापयति त्रि॒ष्टुभा॒ परि॑ दद्ध्यादिन्द्रि॒यँव्वै त्रि॒ष्टुगि॑न्द्रियका॑म॒ः खल॒ु वै रा॑जन्यो॑ यजते त्रि॒ष्टुभै॒वा॒ऽस्मा॑ इन्द्रि॒यं परि॑ गृह्णाति॒ यदि॑ का॒मये॑त ॥ ५७ ॥ ब्रह्मवर्च॒सम॒स्त्विति॑ गाय॒त्रिया परि॑ दद्ध्याद्ब्रह्मवर्च॒सँव्वै गा॑य॒त्री ब्र॑ह्मवर्च॒सम॒े॒व भ॑वति स॒प्त॒द॒शा॒ऽनु॒ ब्रू॒याद्वैश्य॑स्य स॒प्त॒द॒शो वै वैश्य॒स्स्व ए॒वैन॒ꣳ॒ स्तोमे॒ प्रति॑ष्ठापयति॒ जग॑त्या॒ परि॑ दद्ध्याज्जाग॑ता॒ वै प॒शव॑ः प॒शुका॑म॒ः खल॒ु वै वैश्यो॑ यजते॒ जग॑त्यै॒वा॒ऽस्मै॑ प॒शून्परि॑ गृह्णा॒त्येक॑वि॒ꣳ॒श॒ति॒मनु॒ ब्रू॒यात्प्र॒ति॒ष्ठाका॑मस्यैक॒वि॒ꣳ॒शस्स्तोमा॑नां प्र॒ति॒ष्ठा प्रति॑ष्ठित्यै ॥ ५८ ॥ च॒तु॒र्वि॑ꣳशति॒मनु॒ ब्रू॒याद्ब्रह्मवर्च॒सका॑मस्य॒ च॒तु॒र्वि॑ꣳशत्यक्षरा गाय॒त्री गा॑य॒त्री ब्र॑ह्मवर्च॒सङ्गा॑यत्रि॒यै॒वा॒ऽस्मै॑ ब्रह्मवर्च॒सम॒व रु॑न्धे त्रि॒ꣳ॒श॒त॒मनु॒ ब्रू॒याद॒न्नका॑मस्य त्रि॒ꣳ॒शद॑क्षरा वि॒राड॒न्नँव्वि॒राड्वि॒रा॒जै॒वा॒ऽस्मा॑ अ॒न्नाद्य॒म॒व रु॑न्धे॒ द्वात्रि॑ꣳशत॒मनु॒ ब्रू॒यात्प्र॒ति॒ष्ठाका॑मस्य॒ द्वात्रि॑ꣳशदक्षरा॒ऽनु॒ष्टुग॑नु॒ष्टुप्छन्द॑सां प्र॒ति॒ष्ठा प्रति॑ष्ठित्यै॒ षट्त्रि॑ꣳशत॒मनु॒ ब्रू॒यात्प॒शुका॑मस्य॒ षट्त्रि॑ꣳशदक्षरा बृह॒ती बार्॑ह॒ता॒ः प॒शवो॑

बृहत्यैवाऽस्मै पशू- ॥ ५९ ॥ नवं रुन्धे चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳश-दक्षरा त्रिष्टुगिन्द्रियन्त्रिष्टुप्त्रिष्टुभैवाऽस्मा इन्द्रियमवं रुन्धेऽष्टाचत्वारिꣳशतमनु ब्रूयात्पशुकाम-स्याऽष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवाऽस्मै पशूनवं रुन्धे सर्वाणि छन्दाꣳ-स्यनु ब्रूयाद्बहुयाजिनस्सर्वाणि वा एतस्य छन्दाꣳस्यवरुद्धानि यो बहुयाज्यपरिमितमनुं ब्रूयादपरि-मितस्याऽवरुद्धचै ॥ ६० ॥ कामयेत प्रतिष्ठित्यै पशूनृसप्तचत्वारिꣳशच्च ॥ १० ॥

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतन्देवानामुप व्ययते देवलक्ष्ममेव तत्कुरुते तिष्ठन्नन्वाह तिष्ठन् ह्याश्रुततरँव्वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याऽभिजित्या आसीनो यजत्य-स्मिन्नेव लोके प्रति तिष्ठति यत्क्रौञ्चमन्वाहाऽऽसुरन्तद्यन्मन्द्रं मानुषन्तद्यदन्तरा तथ्सदेवमन्तरा-ऽनूच्यꣳ सदेवत्वाय विद्वाꣳसो वै ॥ ६१ ॥ पुरा होतारोऽभूवन्तस्माद्विधृता अदूध्वानोऽभूवन्न प-न्थानस्समरुक्षन्नन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽथाऽन्वाहाऽदूध्वनाव्विधृत्यै पथामसꣳ-रोहायाऽथो भूतञ्चैव भविष्यच्चाऽवं रुन्धेऽथो परिमितञ्चैवाऽपरिमितञ्चाऽवं रुन्धेऽथो ग्राम्याꣳश्चैव पशूनारण्याꣳश्चाऽवं रुन्धेऽथो ॥ ६२ ॥ देवलोकञ्चैव मनुष्यलोकञ्चाऽभि जयति देवा वै सामिधेनी-रनूच्य यज्ञन्नाऽन्वंपश्यन्थ्स प्रजापतिस्तूष्णीमाघारमाऽघारयत्ततो वै देवा यज्ञमन्वंपश्यन् यत्तूष्णी-माघारमाघारयति यज्ञस्याऽनुख्यात्या अथो सामिधेनीरेवाऽभ्यनक्त्यलूक्षो भवति य एवँव्वेदाऽथो तर्पयत्येवैनास्तृप्यति प्रजया पशुभि- ॥ ६३ ॥ यं एवँव्वेद यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्वाभ्यां द्वे प्रीणीयाद्यत्तिसृभिरिति तद्वेचयेन्मनसाऽऽ घारयति मनसा ह्यनाप्तमाप्यते तिर्यञ्चमा घारयत्यछंब-ट्कारँव्वाक्च मनश्चाऽऽर्तीयेतामहन्देवेभ्यो हव्यँव्वहामीति वागब्रवीदहन्देवेभ्य इति मनस्तौ प्रजा-पतिं प्रश्नमैताꣳ सोऽब्रवीत् ॥ ६४ ॥ प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत्खलु तुभ्यन्न वाचा जुहवन्नित्यब्रवीत्तस्मान्मनसा प्रजापतये जुह्वति मनं इव हि प्रजापतिः प्रजापतेरास्यै परिधीन्थ्सं मार्ष्टि पुनात्येवैनान्त्रिर्मध्यमन्त्रयो वै प्राणाः प्राणानेवाऽभि जयति त्रिर्दक्षिणाद्धचैन्त्रयं ॥ ६५ ॥ इमे लोका इमानेव लोकानभि जयति त्रिरुत्तराद्धचैन्त्रयो वै देवयानाः पन्थानस्तानेवाऽभि जयति त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाऽभि जयति द्वादश सं पद्यन्ते द्वादश मासास्सँव्वथ्सरस्सँव्वथ्सरमेव प्रीणात्यथो सँव्वथ्सरमेवाऽस्मा उप दधाति सुवर्गस्य लोकस्य समष्टचा आघारमा घारयति तिर इव ॥ ६६ ॥ वै सुवर्गो लोकस्सुवर्गमेवाऽस्मै लोकं प्र रोचयत्यृजुमा घारयत्यृजुरिव हि प्राणस्सन्ततमा घारयति प्राणानामन्नाद्यस्य सन्तत्या अथो रक्षसामपहत्यै यङ्कामयेत प्रमायुकस्स्यादिति जिह्मन्तस्याऽऽ घारयेत्प्राणमेवाऽस्माज्जिह्मन्नयति ताजक्प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा-॥ ६७ ॥ ऽऽघारमाघार्य ध्रुवाꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानान्दूत आसीद्दैव्योऽसुराणान्तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्धि ब्रूहीत्या श्रावयेतीदन्देवाश्शृणुतेति वाव तदब्रवी-

दग्निर्देवो होतेति य एव देवानान्तमवृणीत ततो देवा ॥ ६८ ॥ अभवन्पराऽसुरा यस्यैवव्ँविदुषः प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यद्ब्राँह्मणश्चाऽब्राँह्मणश्च प्रश्नमेयाताँ ब्राह्मणायाऽधि ब्रूयाद्यद्ब्राँह्मणायाऽद्ध्याहाऽऽत्मनेऽद्ध्याहु यद्ब्राँह्मणं पराहाऽऽत्मानं पराऽऽहु तस्माद्ब्राह्मणो न परोच्यः ॥ ६९ ॥ वा आरण्याꣳश्चाव रुन्धेऽथो पशुभिस्सोऽब्रवीद्दक्षिणाद्ध्यैन्त्रय इव दध्रुवा देवाश्चत्वारिꣳशच्च ॥ ११ ॥

आयुष्ट आयुर्दा अग्न आ प्यायस्व सन्तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत्त्वा याम्युदु त्यच्चित्रम् । अपान्नपादा ह्यस्थादुपस्थञ्जिह्मानामूर्द्ध्वो विद्युतव्ँवसानः । तस्य ज्येष्ठं महिमानव्ँवहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः । स- ॥ ७० ॥ मन्या यन्त्युप यन्त्यन्यास्समानमूर्वन्नद्यः पृणन्ति । तमू शुचिꣳ शुचयो दीदिवाꣳसमपान्नपातं परि तस्थुरापः । तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण शिक्वना रेवदग्निर्दीदायाऽनिद्ध्मो घृतनिर्णिगप्सु । इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे । इन्द्रावरुणा युवमद्ध्वराय नो ॥ ७१ ॥ विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्युमति यो वनुष्यति वयञ्जयेम पृतनासु दूढ्यः । आ नो मित्रावरुणा प्र बाहवा । त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत् । स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ ॥ ७२ ॥ रराणो वीहि मृडीकꣳ सुहवो न एधि । प्रप्राऽयमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिश्शिवो नः । प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु । धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् । ॥ ७३ ॥ वि पाजसा वि ज्योतिषा । स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत् । तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्टरꣳ सपेम । स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् । अꣳहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायि ॥ ७४ ॥ यह्वीस्समद्ध्वराय नो वरुणꣳ राजꣳश्चतुश्चत्वारिꣳशच्च ॥ १२ ॥

विश्वरूपस्त्वष्टेन्द्रव्ँवृत्रं ब्रह्मवादिनस्स त्वै नाऽसोमयाज्येष वै देवरथो देवा वै नर्चि नाऽयज्ञोऽग्ने महान्नीविनिवीतमायुष्टे द्वादश ॥ १२ ॥ विश्वरूपो नैनꣳ शीतरूरावद्य वसु पूर्वेद्युर्वाजा इत्यग्ने महान्निवीतमन्या यन्ति चतुस्सप्ततिः ॥ ७४ ॥ विश्वरूपोऽनु ते दायि ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ द्वितीयकाण्डे षष्ठप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

समिधो यजति वसन्तमेवर्तूनामव रुन्धे तनूनपातय्यँजति ग्रीष्ममेवाऽव रुन्ध इडो यजति वर्षा एवाऽव रुन्धे बर्हिर्यजति शरदमेवाऽव रुन्धे स्वाहाकारय्यँजति हेमन्तमेवाऽव रुन्धे तस्मा-थ्स्वाहाकृता हेमन्पशवोऽव सीदन्ति समिधो यजत्युषस एव देवतानामव रुन्धे तनूनपातय्यँजति यज्ञमेवाऽव रुन्ध ॥ १ ॥ इडो यजति पशूनेवाऽव रुन्धे बर्हिर्यजति प्रजामेवाऽव रुन्धे समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारय्यँजति वाचमेवाऽव रुन्धे दश सं पद्यन्ते दशाक्षरा विराडन्नव्विँराड्विराजैवाऽन्नाद्यमव रुन्धे समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातय्यँजति ॥ २ ॥ यज्ञ एवाऽन्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति स्वाहाकारय्यँजति सुवर्ग एव लोके प्रति तिष्ठत्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठति देवासुरा एषु लोकेष्वस्पर्द्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान्प्राऽणुदन्त तत्प्रयाजानां ॥ ३ ॥ प्रयाजत्वय्यँस्यैवव्विँदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामञ्जुहोत्यभिजित्यै यो वै प्रयाजानां मिथुनव्वेँद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनन्तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनन्तदेतद्वै प्रयाजानां मिथुनय्यँ एवव्वेँद प्र ॥ ४ ॥ प्रजया पशुभिर्मिथुनैर्जायते देवानाव्वाँ अनिष्टा देवता आसन्नथाऽसुरा यज्ञमजिघाꣳसन्ते देवा गायत्रीव्व्यँौहन्पञ्चाऽक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाऽभवद्वर्म यजमानाय यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयो देवा वै पुरा रक्षोभ्य ॥ ५ ॥ इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन्तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन्वि वा एतद्यज्ञञ्छिन्दन्ति यथ्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य सन्तत्या अथो हविरेवाऽकरथो यथापूर्वमुपैति पिता वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत्पुत्रेण साधारण- ॥ ६ ॥ कुरुते तस्मादाहुर्यश्चैवव्वेँद यश्च न कथा पुत्रस्य केवलङ्कथा साधारणं पितुरित्य-स्कन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्दति गायत्र्येव तेन गर्भन्धत्ते सा प्रजां पशून् यजमानाय प्र

जनयति ॥ ७ ॥ यजति यज्ञमेवाऽव रुन्धे तनूनपातय्यँजति प्रयाजानामेवव्वेद प्र रक्षोभ्यस्साधारणं पञ्चत्रिꣳशच्च ॥ १ ॥

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति पूर्वार्द्धे जुहोति तस्मात्पूर्वार्द्धे चक्षुषी प्रबाहुग्जुहोति तस्मात्प्रबाहुक्चक्षुषी देवलोकव्वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्द्धेऽग्नये जुहोति दक्षिणार्द्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै राजानौ वा एतौ देवताना- ॥ ८ ॥ य्यँदग्नीषोमावन्तरा देवता इज्येते देवतानाव्विधृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वदन्ति किन्तद्यज्ञे यजमानः कुरुते येनाऽन्यतोदतश्च पशून्दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनाऽन्यतो-दतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार मूर्द्धन्वती पुरोनुवाक्या भवति मूर्द्धानमेवैनꣳ समानानाङ्करोति ॥ ९ ॥ नियुत्वत्या यजति भ्रातृव्यस्यैव पशून्नि युवते केशिनꣳ ह दार्भ्यङ्केशी सात्यकामिरुवाच सप्तपदान्ते शक्करीꣳ श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान्भ्रा-तृव्यान्नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयौर्लोकयोर्ज्योतिर्द्धत्ते यस्यै वीर्येण पूर्वार्द्धेनाऽन-ड्वान्भुनक्ति जघनार्द्धेन धेनुरिति पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जातानेव भ्रातृव्यान्प्र णुदत उपरिष्टाल्लक्ष्मा ॥ १० ॥ याज्या जनिष्यमाणानेव प्रति नुदते पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्य-स्मिन्नेव लोके ज्योतिर्द्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्द्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवव्वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात्पूर्वार्द्धेनाऽनड्वान्भुन-क्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्द्धेन धेनुर्य एवव्वेद भुङ्क्त एनमेतौ वज्र आज्यव्वज्र आज्यभागौ ॥ ११ ॥ वज्रो वषट्कारस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरत्यछंबट्कारमपगूर्य वषट्करोति स्तृत्यै गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारंभयति तस्मा-द्ब्राह्मणो मुख्यो मुख्यो भवति य एवव्वेद प्रैवैनं पुरोऽनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेणैवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति ॥ १२ ॥ वषट्कारेण स्थापयति त्रिपदा पुरोऽनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात्प्रति तिष्ठति गायत्री पुरोऽ-नुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्करी यद्वा एतया देवा अशिक्षन्तदशक्नुवन् य एवव्वेद शक्नोत्येव यच्छिक्षति ॥ १३ ॥ देवतानाङ्करोत्युपरिष्टाल्लक्ष्माऽऽज्यभागौ प्रति शक्नोत्येव द्वे च ॥ २ ॥

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशथ्स आत्मन्नाज्यमधत्त तन्देवा अब्रुवन्नेष वाव यज्ञो यदाज्य-मप्येव नोऽत्राऽस्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्या-ज्यभागावुप स्तृणन्त्यभि घारयन्ति ब्रह्मवादिनो वदन्ति कस्माथ्सत्याद्यातयामान्यन्यानि हवीꣳ-ष्ययातयाममाज्यमिति प्राजापत्य-॥ १४ ॥ मिति ब्रूयादयातयामा हि देवानां प्रजापतिरिति

छन्दाꣳसि देवेभ्योऽपाऽक्रामन्न वोऽभागानि हव्यँव्वँक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारय-
न्पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तञ्जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य
प्रीतानि देवेभ्यो हव्यँव्वँहन्त्यङ्गिरसो वा इत उत्तमास्सुवर्गँल्लोकमायन्तदृषयो यज्ञवास्त्वभ्यवायन्ते-
॥ १५ ॥ ऽपश्यन्पुरोडाशङ्कूर्मं भूतꣳ सर्पन्तन्तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो
देवेभ्यो ध्रियस्वेति स नाऽध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपा-
लोऽमावास्यायाञ्च पौर्णमास्याञ्चाऽच्युतो भवति सुवर्गस्य लोकस्याऽभिजित्यै तमब्रुवन्कथाऽहास्था
इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तो- ॥ १६ ॥ ऽवार्च्छत्येवमवाऽऽरमित्युपरिष्टादभ्य-
ज्याऽधस्तादुपाऽनक्ति सुवर्गस्य लोकस्य समष्ट्यै सर्वाणि कपालान्यभि प्रथयति तावतः
पुरोडाशानमुष्मिँल्लोकेऽभि जयति यो विदग्धस्स नैर्ऋतो योऽशृतस्स रौद्रो यश्शृतस्स
सदेवस्तस्मादविदहता शृतङ्कृत्यस्सदेवत्वाय भस्मनाऽभि वासयति तस्मान्माꣳसेनाऽस्थि छन्न-
व्वेदेनाऽभि वासयति तस्मात्- ॥ १७ ॥ केशैः शिरश्छन्नं प्रच्युतँव्वा एतदस्माल्लोकादगतन्देव-
लोकय्यँच्छृतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति यद्येकङ्कपालन्नश्येदेको मास-
स्सँव्वथ्सरस्याऽनवेतस्स्यादथ यजमानः प्र मीयेत यद्वे नश्येतान्द्वौ मासौ सँव्वथ्सरस्याऽनवेतौ
स्यातामथ यजमानः प्र मीयेत सङ्ख्यायोद्वासयति यजमानस्य ॥ १८ ॥ गोपीथाय यदि
नश्येदाश्विनन्द्विकपालन्निर्वपेद्द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवाऽस्मै
भेषजङ्करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति
प्रतिष्ठित्यै ॥ १९ ॥ प्राजापत्यन्तेऽक्षोऽनुपाक्तो वेदेनाऽभि वासयति तस्माद्यजमानस्य द्वात्रिꣳशच्च ॥ ३ ॥

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाऽश्विनौ हि
देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह
वज्रमेव तथ्सꣳ श्यति भ्रातृव्याय प्रहरिष्यन्स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या
एतावत एव भ्रातृव्यन्निर्भजति ॥ २० ॥ तस्मान्नाऽभागन्निर्भजन्ति त्रिर्हरति त्रय इमे लोका एभ्य
एवैनँल्लोकेभ्यो निर्भजति तूष्णीञ्चतुर्थꣳ हरत्यपरिमितादेवैनन्निर्भजत्युद्धन्ति यदेवाऽस्या अमे-
ध्यन्तदप हन्त्युद्धन्ति तस्मादोषधयः परा भवन्ति मूलञ्छिनत्ति भ्रातृव्यस्यैव मूलञ्छिनत्ति पितृ-
देवत्याऽतिखातेयतीङ्खनति प्रजापतिना ॥ २१ ॥ यज्ञमुखेन संमितामा प्रतिष्ठायै खनति यजमा-
नमेव प्रतिष्ठाङ्गमयति दक्षिणतो वर्षीयसीङ्करोति देवयजनस्यैव रूपमकः पुरीषवतीङ्करोति प्रजा वै
पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तङ्करोत्युत्तरं परिग्राहं परि गृह्णात्येतावती वै पृथिवी यावती
वेदिस्तस्या एतावत एव भ्रातृव्यन्निर्भज्याऽऽत्मन उत्तरं परिग्राहं परि गृह्णाति क्रूरमिव वा ॥ २२ ॥
एतत्करोति यद्वेदिङ्करोति धा असि स्वधा असीति योयुप्यते शान्त्यै प्रोक्षणीरा सादयत्यापो वै

रक्षोघ्नी रक्ष॑सामप॑हत्यै स्फ्यस्य वर्त्म॑न्थ्सादयति य॒ज्ञस्य॒ सन्त॑त्यै यन्द्विष्यात्तन्ध्याये-च्छुचैवैन॑मर्पयति ॥ २३ ॥ भजति प्रजाप॑तिनेव वै त्रय॑स्त्रि॒ꣳशच्च ॥ ४ ॥

ब्र॒ह्म॒वा॒दिनो॑ वदन्त्य॒द्भिर्ह॒वीꣳषि॒ प्रौक्ष॑ीः केना॒ऽप इति॒ ब्रह्म॒णेति॑ ब्रूयाद॒द्भिर्ह्ये॑व ह॒वीꣳषि॑ प्रो॒क्षति॒ ब्रह्म॑णा॒ऽप इ॒द्ध्माब॒र्हिः प्रोक्ष॑ति॒ मेद्ध्य॑मे॒वैन॑त्करोति॒ वेदि॒ं प्रोक्ष॑त्यृ॒क्षा वा ए॒षाऽलो॒-मका॑ऽमे॒द्ध्या यद्वेदि॒र्मेद्ध्या॑मे॒वैना॑ङ्करोति दि॒वे त्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वेति॒ ब॒र्हिरासाद्य प्रो- ॥ २४ ॥ क्ष॑त्ये॒भ्य ए॒वैन॑ल्लो॒केभ्यः प्रोक्ष॑ति क्रू॒रमि॑व॒ वा ए॒तत्क॑रोति॒ यत्खन॑त्य॒पो नि न॑यति॒ शान्त्यै॑ पु॒रस्ता॑त्प्रस्त॒रङ्गृ॑ह्णाति॒ मुख्य॑मे॒वैन॑ङ्क॒रोतीय॑न्तङ्गृह्णाति प्र॒जाप॑तिना य॒ज्ञमु॒खेन॒ सम्मि॑तं ब॒र्हिस्स्तृ॑णाति प्र॒जा वै ब॒र्हिः पृ॑थि॒वी वेदि॑ः प्र॒जा ए॒व पृ॑थि॒व्यां प्रति॑ ष्ठापयत्यन॑तिदृश्न॒ꣳ स्तृणाति प्र॒जयै॒वैन॑ं प॒शुभि॒रन॑तिदृश्न॒ङ्क॒रो- ॥ २५ ॥ त्युत्त॑रं ब॒र्हिषः॑ प्रस्त॒रꣳ सा॑दयति प्र॒जा वै ब॒र्हिर्यज॑मानः प्रस्त॒रो यज॑मानमे॒वाऽयज॑माना॒दुत्त॑रङ्क॒रोति॒ तस्मा॒द्यज॑मा॒नोऽयज॑माना॒दुत्त॑रो॒ऽन्तद॑धाति॒ व्यावृ॑त्त्या अ॒नक्ति॒ ह॒विष्कृ॑तमे॒वैन॒ꣳ सु॒व॒र्गल्लो॒कङ्ग॑मयति त्रे॒धाऽन॑क्ति॒ त्रय॑ इ॒मे लो॒का ए॒भ्य ए॒वैन॑ल्लो॒केभ्यो॑ऽ-नक्ति॒ न प्रति॑ शृ॒णाति॒ यत्प्र॑तिशृ॒णीयाद॒नू॑र्द्ध्वंभावु॒कय्य॑ज॑मानस्य स्यादु॒परी॑व॒ प्र ह॑र- ॥ २६ ॥ त्यु॒परी॑व॒ हि सु॑व॒र्गो लो॒को नि य॑च्छति॒ वृष्टि॑मे॒वाऽस्मै॒ नि य॑च्छति॒ नाऽत्य॑ग्रं प्र ह॑रे॒द्यदत्य॑ग्रं प्रह॒रेदत्या-सा॒रिण्य॑द्ध्व॒र्योर्ना॒शुका स्या॒न्न पु॒रस्ता॒त्प्रत्य॑स्ये॒द्यत्पु॒रस्ता॑त्प्र॒त्यस्यै॑थ्सुव॒र्गाल्लो॒काद्यज॑मान॒ं प्रति॑ नुदे-त्प्राञ्चं॑ प्र ह॑रति॒ यज॑मानमे॒व सु॑व॒र्गल्लो॒कङ्ग॑मयति॒ न विष्व॑ञ्चव्वि॒ यु॑याद्यद्विष्व॑ञ्चव्वियु॒या- ॥ २७ ॥ थ्स्त्र्य॑स्य जाये॒तो॒द्र्ध्वमु॒द्यौ॑त्यू॒र्द्ध्वमि॑व॒ हि पु॒ꣳसः पु॒मा॑ने॒वाऽस्य॑ जायते॒ यथ्स्फ्ये॑न॒ वोप॒वेषे॑ण वा योयु॒प्ये॒त॒ स्तृति॑रि॒वाऽस्य॒ सा हस्ते॑न योयु॒प्यते॒ यज॑मानस्य गोपी॒थाय॑ ब्रह्मवा॒दिनो॑ वदन्ति॒ किंय्य॒ज्ञस्य॒ यज॑मान॒ इति॑ प्रस्त॒र इति॒ तस्य॒ क्व॑ सु॒व॒र्गो॑ लो॒क इत्या॑हव॒नीय॒ इति॑ ब्रूया॒द्यत्प्र॑स्त॒रमा॑हव॒नीयै॑ प्र॒हर॑ति॒ यज॑मानमे॒व ॥ २८ ॥ सु॑व॒र्गल्लो॒कङ्ग॑मयति॒ वि वा ए॒तद्यज॑मानो लिशते॒ यत्प्र॑स्त॒रय्यो॑यु॒प्यन्ते॑ ब॒र्हिरनु॒ प्र ह॑रति॒ शान्त्या॑ अनारं॒भ॒ण इ॒व॒ वा ए॒तर्ह्य॑द्ध्व॒र्यु॒स्स ई॑श्व॒रो वेप॑नो भवि॑तो॒र्द्ध्रु॒वाऽसी॒तीमा-म॒भि मृ॑शती॒यव्वै द्ध्रु॒वाऽस्यामे॒व प्रति॑ तिष्ठति॒ न वेप॑नो भ॑वत्यगा(३)न॑ग्नी॒दित्या॑ह॒ यद्ब्रू॒याद॒गन्न-ग्निरित्य॒ग्नाव॒ग्निङ्ग॑मयेन्नि॒र्यज॑मान॒ꣳ सु॒व॒र्गाल्लो॒काद्भ॑जेदग॒न्नित्ये॒व ब्रू॑याद्यज॑मानमे॒व सु॑व॒र्गल्लो॒कङ्ग॑-मयति ॥ २९ ॥ आ॒साद्य॒ प्राऽन॑तिदृश्नङ्क॒रोति हरति वियुयाद्यज॑मानमे॒वाऽग्निरिति॑ स॒प्तद॑श च ॥ ५ ॥

अ॒ग्नेस्त्र॒यो ज्याया॑ꣳसो॒ भ्रात॑र आसन्ते दे॒वेभ्यो॑ ह॒व्यव्व॑ह॑न्तः॒ प्राऽमीयन्त॒ सो॑ऽग्निर॑बिभेदि॒त्थ-व्वाव स्य आर्ति॒माऽरि॑ष्यतीति॒ स निला॑यत॒ सो॑ऽपः प्राऽविश॒त्तन्दे॒वता॒ः प्रैष॑मैच्छ॒न्तं मथ्स्य॒ः प्राऽब्रवी॒त्तम॑शप॒द्धि॒याधि॑या त्वा वद्ध्यासु॒र्यो मा॒ प्राऽवो॑च॒ इति॒ तस्मा॒न्मथ्स्य॒न्धि॒याधि॑या घ्नन्ति श॒प्तो ॥ ३० ॥ हि तम॒न्वविन्द॒न्तम॑ब्रुवन्नुप॑ न॒ आ व॑र्तस्व ह॒व्यन्नो॑ व॒हेति॒ सो॑ऽब्रवी॒द्वरव्वृ॑णै॒ यदे॒व गृ॑ही॒तस्या॒ऽहु॑तस्य बहिःपरि॒धि स्कन्दा॒त्तन्मे॒ भ्रातॄ॒णां भा॒ग॒धेय॑मसदिति॒ तस्मा॒द्यद्गृ॑ही॒तस्या॒ऽहु॑तस्य बहिःपरि॒धि स्कन्द॑ति॒ तेषा॒न्तद्भा॒ग॒धेय॒न्ताने॒व तेन॑ प्रीणाति परि॒धीन्परि॑ दधाति॒ रक्ष॑सामप॑हत्यै॒ सꣳ

स्पर्शयति ॥ ३१ ॥ रक्षसामनन्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षा-ꣳस्यपहन्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति यजुषाऽन्यान्तूष्णीमन्यां मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्थ्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां ॥ ३२ ॥ पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान्भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वायाऽथो मिथुनत्वायाऽग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन्ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्नि- ॥ ३३ ॥ मुपामन्त्रयन्त राज्येन पितरो यमन्तस्मादग्निर्देवानामन्नादो यमः पितृणाꣳ राजा य एवँव्वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति सकृथ्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्द्धादव द्यत्येषा वै रुद्रस्य ॥ ३४ ॥ दिख्स्वायामेव दिशि रुद्रन्निरवदयते द्विरभि घारयति चतुरवत्तस्याऽऽप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत्पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानस्स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनाङ्गोपीथाय ॥ ३५ ॥ शप्तस्स्पर्शयति भूतानामग्निꣳ रुद्रस्य सप्तत्रिꣳशच्च ॥ ६ ॥

मनुः पृथिव्या यज्ञियमैच्छथ्स घृतन्निषिक्तमविन्दथ्सोऽब्रवीत्कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोस्स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्मोपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याह- ॥ ३६ ॥ यँव्वै रथन्तरमिमामेव सहाऽन्नाद्येनोप ह्वयत उपहूतँव्वामदेव्यꣳ सहाऽन्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहाऽन्तरिक्षेणोप ह्वयत उपहूतं बृहथ्सह दिवेत्याहैरँव्वै बृहदिरामेव सह दिवोप ह्वयत उपहूतास्सप्त होत्रा इत्याह होत्रा एवोप ह्वयत उपहूता धेनु- ॥ ३७ ॥ स्सहर्षभेत्याह मिथुनमेवोप ह्वयत उपहूतो भक्षस्सखेत्याह सोमपीथमेवोप ह्वयत उपहूताँ(४) हो इत्याहाऽऽत्मानमेवोप ह्वयत आत्मा ह्युपहूतानाँव्वसिष्ठ इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येता- ॥ ३८ ॥ मग्रेऽपश्यद्घृतपदीत्याह यदेवाऽस्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयतां ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते दैव्या अद्ध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते य इमँय्यज्ञमवान् ये यज्ञपतिँव्वर्द्धानित्याह ॥ ३९ ॥ यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्त उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोप ह्वयते पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे उपहूतोऽयँय्यजमान इत्याह यजमानमेवोप ह्वयत उत्तरस्यान्देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत

॥ ४० ॥ इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यन्धामेदमसीदमसीत्येव यज्ञस्य प्रियन्धामोप ह्वयते विश्वमस्य प्रियमुपहूतमित्याहाऽछंबट्कारमेवोप ह्वयते ॥ ४१ ॥ आह धेनुरेतावँद्वानित्याह धामनुपहूतश्चतुस्त्रिꣳशच ॥ ७ ॥

पशवो वा इडाँ स्वयमा दत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति वाचस्पतये त्वा हुतं प्राऽश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राऽश्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तय्यद्धोता प्राश्नीयाद्धोता- ॥ ४२ ॥ ऽऽर्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दद्ध्यादपशुर्यजमानस्स्याद्वाचस्पतये त्वा हुतं प्राऽश्नामीत्याह परोक्षमेवैनञ्जुहोति सदसस्पतये त्वा हुतं प्राऽश्नामीत्याह स्वगाकृत्यै प्राऽश्नन्ति तीर्थ एव प्राऽश्नन्ति दक्षिणान्ददाति तीर्थ एव दक्षिणान्ददाति वि वा एतद्यज्ञ- ॥ ४३ ॥ञ्छिंदन्ति यन्मद्ध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सन्तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्थ्स यज्ञमविद्ध्यत्तन्देवा अभि समगच्छन्त कल्पतान्न इदमिति तेऽब्रुवन्थ्स्विष्टँव्वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तथ्स्विष्टकृतस्स्विष्टकृत्त्वन्तस्याऽऽविद्धन्नि- ॥ ४४ ॥ रकृन्तन् यवेन संमितन्तस्माद्यवमात्रमव द्येद्यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य यदुप च स्तृणीयादभि च घारयेदुभयतस्सꣳश्वायि कुर्यादवदायाऽभि घारयति द्विस्सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत्तिरश्चीनमतिहरेदनभिविद्धँय्यज्ञस्याऽभि विंद्ध्येदग्रेण परि हरति तीर्थेनैव परि हरति तत्पूष्णे पर्यहरन्तत् ॥ ४५ ॥ पूषा प्राश्य दतोऽरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि तन्देवा अब्रुवन्वि वा अयमार्द्धर्प्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्थ्सोऽबिभेद्बृहस्पतिरित्थँव्वाव स्य आर्तिमाऽरिष्यतीति स एतं मन्त्रमपश्यथ्सूर्यस्य त्वा चक्षुषा प्रति पश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः ॥ ४६ ॥ किञ्चन हिनस्ति सोऽबिभेत्प्रतिगृह्णन्तं मा हिꣳसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामीत्यब्रवीथ्सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णाथ्सोऽबिभेत्प्राश्नन्तम्मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राऽश्नामीत्यब्रवीन्न ह्यग्नेरास्यङ्किञ्चन हिनस्ति सोऽबिभेत्- ॥ ४७ ॥ प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरङ्किञ्चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात्प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्थ्सं मृशतेऽमृतँव्वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते ॥ ४८ ॥ प्राश्नीयाद्धोता यज्ञन्निरहरन्तच्चक्षुरास्यङ्किञ्चन हिनस्ति सोऽबिभेच्चतुश्चत्वारिꣳशच ॥ ८ ॥

अग्नीध आ दधात्यग्निमुखानेवर्तून्प्रीणाति समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्धत्येव जुहोति परिधीन्थ्सं मार्ष्टि पुनात्येवैनांन्थ्सकृथ्सकृथ्सं मार्ष्टि पराङिव ह्येतर्हि यज्ञश्चतुस्सं पद्यते चतुष्पादः पशवः पशूनेवाऽव रुन्धे ब्रह्मन्प्र स्थास्याम इत्याहाऽत्र वा एतर्हि

यज्ञश्रितो ॥ ४९ ॥ यत्र ब्रह्मा यत्रैव यज्ञश्रितस्तत एवैनमा रभते यद्धस्तेन प्रमीवेद्वेपनस्स्याद्य-च्छीर्ष्णा शीर्षक्तिमान्थ्स्याद्यत्तूष्णीमासीताऽसंप्रत्तो यज्ञस्स्यात्प्र तिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञश्रितो यत्रैव यज्ञश्रितस्तत एवैन॑ सं प्र यच्छति देव सवितरेतत्ते प्रा- ॥ ५० ॥ ऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठस्स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्या आश्राव्याऽऽह देवान् यजेति ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दा॑सीति ब्रूयाद्गायत्रीन्त्रिष्टुभ- ॥ ५१ ॥ ञ्जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दा॑सीति तानेव तद्यजति देवानाँव्वा इष्टा देवता आसन्नथाऽग्निर्नोदज्वलत्तन्देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तथ्समिन्ध एतदुर्वै नामाऽऽसुर आसीथ्स एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेत- ॥ ५२ ॥ दु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुरय्यँज्ञस्याऽऽशिषङ्गमयेदिदन्द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिषङ्गमयत्यार्द्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमराथ्स्मेति वावैतदाहोपश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी ॥ ५३ ॥ स्तामित्याहाऽऽशिषमेवैतामा शास्ते यद्ब्रूयाथ्सूपावसाना च स्वद्ध्यवसाना चेति प्रमायुको यजमानस्स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवाऽस्मै गव्यूतिमा शास्ते न प्रमायुको भवति तयो-राविद्यग्निरिद॑ हविरजुषतेत्याह या अयाख्म ॥ ५४ ॥ देवतास्ता अरीरधामेति वावैतदाह यन्न निर्दिशेत्प्रतिवेशय्यँज्ञस्याऽऽशीर्गच्छेदा शास्तेऽयय्यँजमानोऽसावित्याह निर्दिश्यैवैन॑ सुवर्गल्लो-कङ्गमयत्यायुरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽशिषमेवैतामा शास्ते सजातवनस्यामा शास्त इत्याह प्राणा वै सजाताः प्राणानेव ॥ ५५ ॥ नाऽन्तरेति तदग्निर्देवो देवेभ्यो वनते वयमग्रेर्मानुषा इत्याहाऽग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाहेह गतिर्वामस्येदञ्च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै ॥ ५६ ॥ श्रितस्ते प्र त्रिष्टुभमेतद्द्यावापृथिवी या अयाख्म प्राणानेव षट्चत्वारि॑शच्च ॥ ९ ॥

देवा वै यज्ञस्य स्वगाकर्तारन्नाऽविन्दन्ते शय्युं बार्हस्पत्यमब्रुवन्निमन्नो यज्ञ॑ स्वगा कुर्विति सोऽब्रवीद्वरँव्वृणै यदेवाऽब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शय्युमेव तस्य बार्हस्पत्यय्यँज्ञस्याऽऽशीर्गच्छत्येतन्ममे-त्यब्रवीत्किं मे प्रजाया ॥ ५७ ॥ इति योऽपगुरातै शतेन यातयाद्यो निहनथ्सहस्रेण यातयाद्यो लोहितङ्करवद्यावतः प्रस्कद्य पा॑सून्थ्सङ्गृह्णात्तावतस्सँवथ्सरान्पितृलोकन्न प्र जानादिति तस्माद्ब्रा-ह्मणाय नाऽप गुरेत न नि हन्यान्न लोहितङ्कुर्यादेतावता हैनसा भवति तच्छय्योरा वृणीमह इत्याह यज्ञमेव तथ्स्वगा करोति त- ॥ ५८ ॥ च्छय्योरा वृणीमह इत्याह शय्युमेव बार्हस्पत्यं भागधेयेन

समर्द्धयति गातुँय्यज्ञाय गातुँय्यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते सोमँय्यजति रेत एव तद्दधाति त्वष्टारँय्यजति रेत एव हितन्त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वा-याऽग्निङ्गृहपतिँय्यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते ॥ ५९ ॥ यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसँय्याजा ऋचमनूच्य पत्नीसँय्याजानामृचा यजत्यजामित्वायाऽथो मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसँय्याजास्समिष्टयजुः पञ्चमं पङ्क्तिमेवाऽनु प्रयन्ति पङ्क्तिमनूद्यन्ति ॥ ६० ॥ प्रजायां करोति तत्क्रियते त्रयस्त्रिꣳशच्च ॥ १० ॥

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यस्सदः । उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि । त्वꣳ ह यद्यविष्ठ्य सहसस्सूनवाहुत । ऋतावा यज्ञियो भुवः । अयमग्निस्सहस्रिणो वाजस्य शतिनस्पतिः । मूर्द्धा कवी रयीणाम् । तन्नेमिमृभवो यथाऽऽ नमस्व सहूतिभिः । नेदीयो यज्ञ-॥ ६१ ॥ मङ्गिरः । तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् । कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिङ्गोषु स्तरामहे । मा नो देवाना-वँविशः प्रस्नातीरिवोस्राः । कृशन्न हासुरघ्नियाः । मा नस्समस्य दूढ्यः परिद्वेषसो अꣳहतिः । ऊर्मिर्न नावमा वधीत् । नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमै- ॥ ६२ ॥ रमित्रमर्दय । कुविथ्सु नो गविष्टयेऽग्ने सँव्वेषिषो रयिम् । उरुकृदुरु णस्कृधि । मा नो अस्मिन्महाधने परा वग्भारभृद्यथा । सँव्वर्गꣳ सꣳ रयिञ्जय । अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्द्धा नो अमवच्छवः । यस्याऽजुषन्नमस्विनश्शमीमदुर्मखस्य वा । तङ्घेदग्निर्वृधाऽवति । परस्या अधि ॥ ६३ ॥ सँव्वतोऽव-राꣳ अभ्या तर । यत्राहमस्मि ताꣳ अव । विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्न-मीमहे । य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः । अग्ने पुरो रुरोजिथ । सखायस्सँव्वस्सम्यञ्चमि-षꣳ स्तोमञ्चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते । सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिद्ध्यसे स नो वसून्या भर । प्रजापते स वेद सोमापूषणेमौ देवौ ॥ ६४ ॥ यज्ञममैरधि वृषन्नेकान्न विꣳशतिश्च ॥ ११ ॥

उशन्तस्त्वा हवामह उशन्तस्समिधीमहि । उशन्नुशत आ वह पितॄन् हविषे अत्तवे । त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभ-जन्त धीराः । त्वया हि नः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳर-पोर्णु वीरेभिरश्वैर्मघवा भवा ॥ ६५ ॥ नः । त्वꣳ सोम पितृभिस्सँव्विदानोऽनु द्यावापृथिवी आ ततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् । अग्निष्वात्ताः पितर एह गच्छत सदस्सदस्सदत सुप्रणीतयः । अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरन्दधातन । बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषद्ध्वम् । त आ गताऽवसा शन्तमेना-ऽथाऽस्मभ्यꣳ ॥ ६६ ॥ शँय्योररपो दधात । आऽहं पितॄन्थ्सुविदत्राꣳ अविथ्सि नपातञ्च विक्रम-

णश्च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः । उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् । उदीरतामवर उत्परास उन्मध्यमाः पितरस्सोम्यासः । असु- ॥ ६७ ॥ य्यँ ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु । इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु । अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् । यदग्ने ॥ ६८॥ कव्यवाहन पितॄन् यक्ष्यृतावृधः । प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ । त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यस्स्वधया ते अक्षन्नद्धि त्वन्देव प्रयता हवीꣳषि । मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिरृक्वभिर्वावृधानः । याꣳश्च देवा वावृधुर्ये च देवान्थ्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति । ॥ ६९ ॥ इमय्यँम प्रस्तरमा हि सीदाऽङ्गिरोभिः पितृभिस्संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व । अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य । अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवस्सोम्यासः । तेषाꣳव्वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ७० ॥ भवाऽस्मभ्यमसु- य्यँदग्ने मदन्ति सौमनस एकश्च ॥ १२ ॥

समिधश्चक्षुषी प्रजापतिराज्यन्देवस्य स्फ्यं ब्रह्मवादिनोऽद्भिरग्रेस्त्रयो मनुः पृथिव्याः पशवोऽग्नीधे देवा वै यज्ञस्य युक्ष्वोशन्तस्त्वा द्वादश ॥ १२ ॥ समिधो याज्या तस्मात्राऽभागꣳ हि तमन्वित्याह प्रजा वा आहेत्याह युक्ष्वा हि सप्ततिः ॥ ७० ॥ समिधस्सौमनसे स्याम ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां द्वितीयकाण्डे षष्ठः प्रश्नस्समाप्तः ॥

॥ इति द्वितीयं काण्डम् ॥

॥ द्वितीयकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ६५ | ३२७८ |
| २ | १२ | ७१ | ३५२६ |
| ३ | १४ | ५६ | २९६५ |
| ४ | १४ | ४८ | २४०६ |
| ५ | १२ | ७४ | ३६६५ |
| ६ | १२ | ७० | ३४३३ |
| ॥ संहतसङ्ख्या ॥ | | | |
| ६ | ७५ | ३८४ | १९२७३ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

॥ अथ तृतीयं काण्डम् ॥

॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

प्रजापतिरकामयत प्रजास्सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजास्सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत सोऽकामयत प्रजास्सृजेयेति स तृतीयमतप्यत स एतन्दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजत यत्तपस्तप्त्वा दीक्षितवादंवदति प्रजा एव तद्यजमान- ॥ १ ॥ स्सृजते यद्वै दीक्षितोऽमेध्यं पश्यत्यपाऽस्माद्दीक्षा क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रञ्चक्षुस्सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्याह नाऽस्माद्दीक्षाऽप क्रामति नाऽस्य नीलन्न हरो व्येति यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलन्दीक्षा- ॥ २ ॥ न्तपोऽस्य निर्घ्नन्त्युन्दतीर्बलन्धत्तौजो धत्त बलन्धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते नाऽस्यौजो बलन्न दीक्षान्न तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तो- ॥ ३ ॥ र्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवाऽन्वारभते स एनꣳ सं पारयत्येदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यांयजुषा सन्तरन्त इत्याहर्क्सामाभ्याꣳ ह्येष यजुषा सन्तरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाऽऽशिषमेवैतामा शास्ते ॥ ४ ॥ यजमानो दीक्षाꣳ हन्तोर्ब्राह्मणाश्चतुर्विꣳशतिश्च ॥ १ ॥

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यङ्गच्छेति मे सोमाय ब्रूताद्यो वै सोमꣳ राजानꣳ साम्राज्यंल्लोकङ्गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यञ्छन्दाꣳसि खलु वै सोमस्य राज्ञस्साम्राज्यो लोकः पुरस्तात्सोमस्य क्रयादेवमभि मन्त्रयेत साम्राज्यमेवै- ॥ ५ ॥ नंल्लोकङ्गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यंयो वै तानूनप्त्रस्य प्रतिष्ठांवेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति प्रजापतौ मनसीति ब्रूयात्त्रिरव जिघ्रेत्प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवंवेद प्रत्येव तिष्ठति यो ॥ ६ ॥ वा अध्वर्योः प्रतिष्ठा-

व्वँेद प्रत्येव तिष्ठति यतो मन्येताऽनभिक्रम्य होष्यामीति तत्तिष्ठन्ना श्रावयेदेषा वा अद्ध्वर्योः प्रतिष्ठा य एवव्वँेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्माथ्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अद्ध्वर्योस्स्वव्वँेद स्ववानेव भवति स्रुग्वा अस्य स्वव्वायव्यमस्य ॥ ७ ॥ स्वञ्चमसोऽस्य स्वय्यद्वायव्यव्वा चमसव्वाऽनन्वारभ्याऽऽश्रावयेत्स्वादियात्तस्मादन्वारभ्याऽऽ-श्राव्यꣳ स्वादेव नैति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितस्सोमो भवत्यप्रतिष्ठित-स्स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽद्ध्वर्युर्वायव्यव्वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमस्स्तोमस्य स्तोम उक्थानाङ्ग्रहव्वा गृहीत्वा चमसव्वोन्नीय स्तोत्रमु-पाकुर्यात्प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यद्ध्वर्युः ॥ ८ ॥
एव तिष्ठति यो वायव्यमस्य ग्रहव्वैकान्न विꣳशतिश्च ॥ २ ॥

यज्ञव्वा एतथ्सं भरन्ति यथ्सोमक्रयण्यै पदय्यज्ञमुखꣳ हविर्द्धाने यर्हि हविर्द्धाने प्राची प्रव-र्तयेयुस्तर्हि तेनाऽक्षमुपाऽञ्ज्याद्यज्ञमुख एव यज्ञमनु सन्तनोति प्राञ्चमग्निं प्र हरन्त्युत्पत्नीमा नय-न्त्यन्वनाꣳसि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनु द्ध्यायति स ईश्वरो रुद्रो भूत्वा ॥ ९ ॥ प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चन्नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत्तेनैवैनं भागिनङ्करोति यजमानो वा आहवनीयो यजमानव्वा एतद्विकर्षन्ते यदाहवनीयात्पशु-श्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यव्वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानन्न-श्येदाज्यस्य प्रत्याख्यायमव द्येथ्सैव ततः प्रायश्चित्तिर्ये पशुव्विमथ्नीरन् यस्तान्कामयेताऽऽर्तिमा-र्च्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीद्ध्रे जुहुयान्नमोवृक्तिमेवैषाव्वृङ्क्ते ताजगार्तिमार्च्छन्ति ॥ १० ॥ भूत्वा ततष्षड्विꣳशतिश्च ॥ ३ ॥

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः । तस्मै प्रति प्र वेदय चिकित्वाꣳ अनु मन्य-ताम् । इमं पशुं पशुपते ते अद्य बद्ध्नाम्यग्ने सुकृतस्य मद्ध्ये । अनु मन्यस्व सुयजा यजाम जुष्टन्देवानामिदमस्तु हव्यम् । प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् । सुवर्गय्याहि पथिभिर्देवयानैरोषधीषु प्रति तिष्ठा शरीरैः । येषामीशे ॥ ११ ॥ पशुपतिः पशूनाञ्चतुष्पदामुत च द्विपदाम् । निष्क्रीतोऽयय्यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु । ये बद्ध्यमानमनु बद्ध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च । अग्निस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया सव्विदानः । य आरण्याः पशवो विश्वरूपा विरूपास्सन्तो बहुधैकरूपाः । वायुस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया सव्विदानः । प्रमुञ्चमाना ॥ १२ ॥ भुवनस्य रेतो गातुन्धत्त यजमानाय देवाः । उपाकृतꣳ शशमानय्यदस्थाज्जीवन्देवानामप्येतु पाथः । नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिस्सह देवयानः । जीवन्देवानामप्येतु पाथस्सत्यास्सन्तु यजमानस्य कामाः । यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः । शमितार उपेतन

यज्ञ- ॥ १३ ॥ न्देवेभिरिन्वितम् । पाशात्पशुं प्र मुञ्चत बन्धायज्ञपतिं परि । अदितिः पाशं प्र मुमोक्त्वेतन्नमः पशुभ्यः पशुपतये करोमि । अरातीयन्तमधरङ्कृणोमि यन्द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् । त्वामु ते दधिरे हव्यवाहꣳ शृतङ्कर्तारमुत यज्ञियञ्च । अग्ने सदक्षस्सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व । जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ । घृतेन त्वन्तनुवो वर्द्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः । स्वाहा देवेभ्यो देवेभ्यस्स्वाहा ॥ १४ ॥ ईशै प्रमुञ्चमाना यज्ञन्त्वꣳ षोडश च ॥ ४ ॥

प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्याऽऽलभत आत्मनोऽनाव्रस्काय द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्या उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवाऽव रुन्धे मृत्यवे वा एष नीयते यत्पशुस्तय्यँदन्वारभेत प्रमायुको यजमान-स्स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै ॥ १५ ॥ यत्पशुर्मायुमकृतेति जुहोति शान्त्यै शमितार उपेतनेत्याह यथायजुरेवैतद्वपायाव्वा आह्रियमाणायामग्नेर्मेधोऽप क्रामति त्वामु ते दधिरे हव्यवाहमिति वपामभि जुहोत्यग्नेरेव मेधमव रुन्धेऽथो शृतत्वाय पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यस्स्वाहेत्यभितो वपाञ्जुहोति तानेवोभयान्प्रीणाति ॥ १६ ॥ व्यावृत्त्या अभितो वपां पञ्च च ॥ ५ ॥

यो वा अयथादेवतय्यँज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतन्न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्यर्चाऽऽग्नीध्रमभि मृशेद्वैष्णव्या हविर्द्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुप चरति न देवताभ्य आ वृश्च्यते वसीयान्भवति युनज्मि ते पृथिवीञ्ज्योतिषा सह युनज्मि वायुमन्तरिक्षेण ॥ १७ ॥ ते सह युनज्मि वाचꣳ सह सूर्येण ते युनज्मि तिस्रो विपृचस्सूर्यस्य ते । अग्निर्देवता गायत्री छन्द उपांꣳशोः पात्रमसि सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवताऽनुष्टुप्छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो देवता बृहती ॥ १८ ॥ छन्दश्शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट्छन्दो दध्रुवस्य पात्रमसि ॥ १९ ॥ अन्तरिक्षेण बृहती त्रयस्त्रिꣳशच्च ॥ ६ ॥

इष्टर्गो वा अद्ध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदद्ध्वर्युः पुरस्ताच्छर्म नह्यतेऽनात्यै सव्वेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टन्देवतासु वा एते प्राणापानयो- ॥ २० ॥ व्यायच्छन्ते येषाꣳ सोमस्समृच्छते सव्वेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै सव्वेश उपवेशश्छन्दोभिरेवाऽस्य छन्दाꣳसि वृङ्क्ते

प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथन्तरे भवत इयँव्वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरैत्यद्य वाव रथन्तरꣳ श्वो बृहदद्याश्वादेवैनमन्तरैति भूत- ॥ २१ ॥ व्वाव रथन्तरं भविष्यद्बृहद्भूताच्चैवैनं भविष्यतश्चाऽन्तरैति परिमितँव्वाव रथन्तरमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चाऽन्तरैति विश्वामित्रजमदग्नी वसिष्ठेनाऽस्पर्द्धेताꣳ स एतज्जमदग्नि-र्विहव्यमपश्यत्तेन वै स वसिष्ठस्येन्द्रियँव्वीर्यमवृङ्क्त यद्विहव्यꣳ शस्यत इन्द्रियमेव तद्वीर्यं-य्यजमानो भ्रातृव्यस्य वृङ्क्ते यस्य भूयाꣳसो यज्ञक्रतव इत्याहुस्स देवता वृङ्क्त इति यद्यग्निष्टोमस्सोमः परस्तात्स्या-दुक्थ्यङ्कुर्वीत यद्युक्थ्यस्स्यादतिरात्रङ्कुर्वीत यज्ञक्रतुभिरेवाऽस्य देवता वृङ्क्ते वसीयान्भवति ॥ २२ ॥ प्राणापानयोर्भूतँव्वृङ्क्तेऽष्टाविꣳशतिश्च ॥ ७ ॥

निग्राभ्यास्स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयताऽपानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयताऽऽत्मानं मे तर्पयताऽङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा ॥ २३ ॥ गणा मे मा वि तृषन्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्र-स्सोमोऽवीवृधँव्वो मनसा सुजाता ऋतप्रजाता भग इद्वस्स्याम । इन्द्रेण देवीर्वीरुधस्सँविदाना अनु मन्यन्ताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशस्स्वायै देवतायै निर्याच्याऽभि षुणोति यो वै सोमस्याऽभिषूयमाणस्य ॥ २४ ॥ प्रथमोऽꣳशुस्स्कन्दति स ईश्वर इन्द्रियँव्वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभि मन्त्रयेताऽऽ माऽस्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय द्र-प्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः । तृतीयँय्योनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु सप्त होत्राः ॥ २५ ॥ तर्पयत माऽभिषूयमाणस्य यश्च दश च ॥ ८ ॥

यो वै देवान्देवयशसेनाऽर्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्य-यशसी मनुष्येषु यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपाꣳशु गृह्णीयाद्यानूर्द्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनाऽर्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनु-ष्येष्वग्निः प्रातस्सवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणन्दधा- ॥ २६ ॥ त्वायुष्मन्तस्सहभक्षास्स्याम । विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषाँव्वदन्तो वयन्देवानाꣳ सुमतौ स्याम । इदन्तृतीयꣳ सवनङ्कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनास्सुवरानशानास्स्विष्टिन्नो अभि वसीयो नयन्तु । आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्या- ॥ २७ ॥ स्सौम्यास्ता अनायतना ऐन्द्रवायवमादायाऽऽघारमाघारयेदद्ध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाऽद्ध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः

करोत्यायतनवान्भवति य एवँव्वेदाऽथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति ॥ २८ ॥ य एवँव्वेदैष ते रुद्र भागो यन्निरयाचथास्तञ्जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ सँव्वथ्सरीणाꣳ स्वस्तिम् । मनुः पुत्रेभ्यो दायँव्व्यभजथ्स नाभानेदिष्ठं ब्रह्मचर्य-व्वसन्तन्निरभजथ्स आऽगच्छथ्सोऽब्रवीत्कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते ते ॥ २९ ॥ सुवर्गँल्लोकन्न प्र जानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गँल्लोकँय्यन्तो य एषां पशवस्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्रवीत्ते सुवर्गँल्लोकँय्यन्तो य एषां पशव आसन्तानस्मा अददुस्तं पशुभिश्चरन्तँय्यज्ञवास्तौ रुद्र आऽगच्छथ्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै ॥ ३० ॥ मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाऽभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे माऽऽ भजाऽथ ते पशून्नाऽभि मꣳस्य इति तस्मा एतं मन्थिनस्सꣳस्रा-वमजुहोत्ततो वै तस्य रुद्रः पशून्नाऽभ्यमन्यत यत्रैतमेवँव्विद्वान्मन्थिनस्सꣳस्रावञ्जुहोति न तत्र रुद्रः पशूनभि मन्यते ॥ ३१ ॥ दधात्वायतनवतीर्या उपजीवनीयो भवति तेऽदुर्वै यत्रैतमेकादश च ॥ ९ ॥

जुष्टो वाचो भूयासञ्जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तस्मिन्मा धास्स्वाहा सर-स्वत्यै । ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि । यस्ते द्रप्सस्स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् । अद्ध्वर्योर्वा परि यस्ते पवित्राथ्स्वाहाकृतमिन्द्राय तञ्जुहोमि । यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात् ॥ ३२ ॥ पुरोडाशात्करम्भात् । धानासोमान्मन्थिन इन्द्र शुक्राथ्स्वाहाकृतमिन्द्राय तञ्जुहोमि । यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान्थ्स्वाहाकृतः पुनरप्येति देवान् । दिवः पृथिव्याः पर्यन्तरिक्षाथ्स्वाहाकृतमिन्द्राय तञ्जुहोमि । अद्ध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि ॥ ३३ ॥ च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानꣳ सर्पन्ति पराञ्चो हि यन्ति पराचीभिस्स्तुवते वैष्णव्यर्चा पुनरेत्योप तिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाऽकर्विष्णो त्वन्नो अन्तमश्शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उथ्सन्दुह्रते अक्षितमित्याह यदेवाऽस्य शयानस्योपशुष्यति तदेवाऽस्यैतेनाऽऽ प्याययति ॥ ३४ ॥ परिवापात्प्रजां मयि दुह्रते चतुर्दश च ॥ १० ॥

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसँव्वीरवत्तमम् । गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवथ्सखा सदमिदप्रमृष्यः । इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुद्ध्नस्सभावान् । आ प्यायस्व सन्ते । इह त्वष्टारमग्रियँव्विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः । तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणस्स्यस्व । यतो वीरः ॥ ३५ ॥ कर्मण्यस्सुदक्षो युक्तग्रावा जायते देव-कामः । शिवस्त्वष्टरिहाऽऽ गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव । पिशङ्गरूपस्सुभरो वयो-धाश्श्रुष्टी वीरो जायते देवकामः । प्रजान्त्वष्टा वि ष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः । प्र णो देव्या नो दिवः । पीपिवाꣳसꣳ सरस्वतस्स्तनँय्यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् । ॥ ३६ ॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषान्ते सुम्नमीमहे । यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम । दिव्यꣳ सुपर्णव्ँवयसं बृहन्तमपाङ्गर्भं-व्ँवृषभमोषधीनाम् । अभीपतो वृष्ट्या तर्पयन्तन्तꣳ सरस्वन्तमवसे हुवेम । सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्य- ॥ ३७ ॥ माहुतं प्रजान्देवि दिदिड्ढि नः । या सुपाणिस्स्वङ्गुरिस्सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविस्सिनीवाल्यै जुहोतन । इन्द्रव्ँवो विश्वतस्परीन्द्रन्नरः । असितवर्णा हरयस्सुपर्णा मिहो वसाना दिवमुत्पतन्ति । त आऽववृत्रन्थ्सदनानि कृत्वाऽऽदित्पृथिवी घृतैर्व्युद्यते । हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् । शुचिभ्राजा उषसो ॥ ३८ ॥ नवेदा यशस्वतीरपस्युवो न सत्याः । आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् । शिवाभिर्न स्मयमानाभिराऽगात्पतन्ति मिहस्स्तनयन्त्यभ्रा । वाश्रेव विद्युन्मिमाति वत्सन्न माता सिषक्ति । यदेषाव्ँवृष्टिरसर्जि । पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः । यत्क्रीडथ मरुत ॥ ३९ ॥ ऋष्टिमन्त आप इव सद्ध्रियञ्चो धवद्ध्वे । अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिꣳ सु कर्ष विषितन्न्यञ्चꣳ समा भवन्तूद्वता निपादाः । त्वन्त्या चिदच्युताऽग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः । अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम । याश्च ॥ ४० ॥ माया मायिनाव्ँविश्वमिन्व त्वे पूर्वीस्सन्दधुः पृष्टबन्धो । दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः । पिन्वन्त्यपो मरुतस्सुदानवः पयो घृतवद्विदथेष्वाभुवः । अत्यन्न मिहे वि नयन्ति वाजिनमुत्सन्दुहन्ति स्तनयन्तमक्षितम् । उदप्रुतो मरुतस्ताꣳ ईयर्त वृष्टिं- ॥ ४१ ॥ यें विश्वे मरुतो जुनन्ति । क्रोशाति गर्दा कन्येव तुन्ना पेरुन्तुञ्जाना पत्येव जाया । घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताऽऽप ओषधीः । ऊर्जञ्च तत्र सुमतिञ्च पिन्वथ यत्रा नरो मरुतस्सिञ्चथा मधु । उदु त्यच्चित्रम् । और्वभृगुवच्छुचिमप्रवानवदा हुवे । अग्निꣳ समुद्रवाससम् । आ सवꣳ सवितुर्यथा भगस्येव भुजिꣳ हुवे । अग्निꣳ समुद्रवाससम् । हुवे वातस्वनङ्कविं पर्जन्यक्रन्द्यꣳ सहः । अग्निꣳ समुद्रवाससम् ॥ ४२ ॥ वीर इषꣳ हव्यमुषसो मरुतश्च वृष्टिं भगस्य द्वादश च ॥ ११ ॥

प्रजापतिरकामयतैष ते गायत्रो यज्ञव्ँवै प्रजापतेर्जायमानाः प्राजापत्या यो वा अयथादेवतमिष्टगो निग्राभ्यास्स्थ यो वै देवाञ्जुष्टोऽग्निना रयिमेकादश ॥ ११ ॥ प्रजापतिरकामयत प्रजापतेर्जायमाना व्यायच्छन्ते महामिमान्माया मायिनान्द्विचत्वारिꣳशत् ॥ ४२ ॥ प्रजापतिरकामयताऽग्निꣳ समुद्रवाससम् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां तृतीयकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ।। तृतीयकाण्डे द्वितीयप्रश्नप्रारम्भः ।।

।। श्रीगुरुभ्यो नमः हरिः ओ(४)म् ।।

यो वै पवमानानामन्वारोहान् विद्वान् यजतेऽनु पवमानाना रोहति न पवमानेभ्योऽव च्छिद्यते श्येनोऽसि गायत्रछन्दा अनु त्वाऽऽरभे स्वस्ति मा सं पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा सं पारय सघाऽसि जगतीछन्दा अनु त्वाऽऽरभे स्वस्ति मा सं पारयेत्याहैते ।। १ ।। वै पवमानानामन्वारोहास्तान् य एवँविद्वान् यजतेऽनु पवमानाना रोहति न पवमानेभ्यो-ऽव च्छिद्यते यो वै पवमानस्य सन्ततिँवेद सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजां पवमानस्य ग्रहा गृह्यन्तेऽथ वा अस्यैतेऽगृहीता द्रोणकलश आधवनीयः पूतभृत्तान् यदगृहीत्वोपाकुर्यात्पवमानँवि ।। २ ।। च्छिन्द्यात्तँविच्छिद्यमानमध्वर्योः प्राणोऽनु वि च्छिद्येतो-पयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभि मृशेदिन्द्राय त्वेत्याधवनीयँविश्वेभ्यस्त्वा देवे-भ्य इति पूतभृतं पवमानमेव तथ्सन्तनोति सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजाम् ।। ३ ।। एते वि द्विचत्वारिꣳशच्च ।। १ ।।

त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमव लुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशु-पात्रेऽꣳशुमवास्य तन्तृतीयसवनेऽपिसृज्याऽभि षुणुयाद्यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तथ्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अति यन्त्यन्यमपश्यन्त- ।। ४ ।। स्सेतुनाऽति य-न्त्यन्यम् । द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान् । तिरोधायैत्यसितँवसान-श्शुक्रमा दत्ते अनुहाय जार्यै । देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन्त-मतन्वताऽग्निहोत्रँव्रतमकुर्वत तस्माद्द्विव्रतस्स्याद्द्विर्ह्यग्निहोत्रञ्जुह्वति पौर्णमासँयज्ञमग्नीषोमीयं ।।५।। पशुमकुर्वत दार्श्यँयज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातस्सवनमकुर्वत वरुणप्रघासान्माध्यन्दिनꣳ सवनꣳ साकमेधान्पितृयज्ञन्त्र्यम्बकाꣳस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगाꣳसन्तन्ना-ऽन्ववायन्तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्याऽध्वरत्वन्ततो देवा अभवन्प-राऽसुरा य एवँविद्वान्थ्सोमेन यजते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ।। ६ ।। अपश्यन्तोऽग्नी-षोमीयमात्मना परा त्रीणि च ।। २ ।।

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान्देवान्परिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शङ्गवे शञ्जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारस्स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे । प्राणाय मे वर्चोदा वर्चसे पवस्वाऽपानाय व्यानाय वाचे ॥ ७ ॥ दक्षक्रतुभ्याञ्चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ श्रोत्रायाऽऽत्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरिन्द्रस्य विश्वेषान्देवानाञ्जठरमसि वर्चोदा मे वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय त्वा यन्त्वा सोमेनाऽतीतृपय्यन्त्वा सोमेनाऽमीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा ॥ ८ ॥ वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे । बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनन्तृप्तो भूत्याऽभि पवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनन्तृप्तो ब्रह्मवर्चसेनाऽभि पवत आमयाव्य-॥ ९ ॥ वेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनन्तृप्त आयुषाऽभि पवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनन्तृप्तः प्राणापानाभ्याँव्वाचो दक्षक्रतुभ्याञ्चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक्प्र धन्वति ॥ १० ॥ वाचे रूपेभ्यो वर्चोदा आमयावी पञ्चचत्वारिꣳशच्च ॥ ३ ॥

स्फ्यस्स्वस्तिर्विघनस्स्वस्तिः पर्शुर्वेदिः परशुर्नस्स्वस्तिः । यज्ञिया यज्ञकृतस्स्थ ते माऽस्मिन् यज्ञ उप ह्वयद्ध्वमुप मा द्यावापृथिवी ह्वयेतामुपाऽऽस्तावः कलशस्सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तान्नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुप तिष्ठते यज्ञो वै मखो ॥ ११ ॥ यज्ञँव्वाव स तद्दहन्तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीद्ध्रन्तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्याऽनिर्घाताय या वै ॥ १२ ॥ देवतास्सदस्यार्तिमार्पयन्ति यस्ता विद्वान्प्रसर्पति न सदस्यार्तिमार्च्छति नमोऽग्नये मखघ्न इत्याहैता वै देवतास्सदस्यार्तिमाऽर्पयन्ति ता य एवँव्विद्वान्प्रसर्पति न सदस्यार्तिमार्च्छति दृढे स्थश्शिथिरे समीची माऽꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षा-॥ १३ ॥ दग्निः पृथिव्या यमः पितृभ्यस्सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सन्तासन्नमस्सदसे नमस्सदसस्पतये नमस्सखीनां पुरोगाणाञ्चक्षुषे नमो दिवे नमः पृथिव्या अहे दैधिषव्योदतस्तिष्ठाऽन्यस्य सदने सीद योऽस्मत्पाकतर उन्निवत उदुद्वतश्च गेषं पातं मा द्यावापृथिवी अद्याऽह्नस्सदो वै प्रसर्पन्तं ॥ १४ ॥ पितरोऽनु प्र सर्पन्ति त एनमीश्वरा हिꣳसितोस्सदः प्रसृप्य दक्षिणार्द्धं परेक्षेताऽऽगन्त पितरः पितृमानहँय्युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नम-

स्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै ॥ १५ ॥ मखो वा अन्तरिक्षात्प्रसर्पन्तन्त्रयस्त्रिꣳशच्च ॥ ४ ॥

भक्षेहि मा ऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरो वसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ सघ्यासन्नृचक्षसन्त्वा देव सोम सुचक्षा अव ख्येषं मन्द्राऽभिभूतिः केतुर्यज्ञानाँव्वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे ॥ १६ ॥ शंभूर्मयोभूस्स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्माया ऽऽयुषे वर्चसे । वसुमद्गणस्य सोम देव ते मतिविदः प्रातस्सवनस्य गायत्रछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देव ते मतिविदो माद्ध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य ॥ १७ ॥ पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आ प्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे । हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति ॥ १८ ॥ गाः । अपाम सोमममृता अभूमाऽदर्शम ज्योतिरविदाम देवान् । किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य । यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराऽहार्जातवेदा विचर्षणिः । पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः । पुनर्मे अश्विना युवञ्चक्षुरा धत्तमक्ष्योः । इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य ॥ १९ ॥ शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आपूर्यास्स्थाऽऽ मा पूरयत प्रजया च धनेन च । एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्ददध्वन्नमो वः पितरो रसाय नमो वः पितरश्शुष्माय नमो वः पितरो जीवाय नमो वः पितर- ॥ २० ॥ स्स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एत-स्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मान्तेऽनु य एतस्मिँल्लोके स्थ यूयन्तेषाँव्वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहन्तेषाँव्वसिष्ठो भूयासं प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । ॥ २१ ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् । देवकृतस्यैनसोऽव-यजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यप्सु धौतस्य सोम देव ते नृभिस्सुतस्येष्टयजुषस्स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षङ्कृतस्योपहूतस्योपहूतो भक्षयामि ॥ २२ ॥ विश्वचर्षणे त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्याऽति स्तुतस्तोमस्य जीवाय नमो वः पितरो बभूव चतुश्चत्वारिꣳशच्च ॥ ५ ॥

महीनां पयोऽसि विश्वेषान्देवानान्तनूरृद्ध्यासमद्य पृषतीनाङ्ग्रहं पृषतीनाङ्ग्रहोऽसि विष्णोरुहृदयमस्येकमिष विष्णुस्त्वाऽनु वि चक्रमे भूतिर्दद्ध्ना घृतेन वर्द्धतान्तस्य मेष्टस्य वीतस्य

द्रविणमा गम्याज्ज्योतिरसि वैश्वानरं पृश्न्यै दुग्धय्ँयावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्तमिन्द्र ते ॥ २३ ॥ ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम् । यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकास्स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकास्स्युर्य-थ्स्कन्देद्यजमानः प्रमायुकस्स्यात्पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवाऽस्मै पुनर्गृह्णाति प्राणो वै पृषदाज्यं प्राणो वा ॥ २४ ॥ एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवाऽस्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णात्यमृतय्ँवै हिरण्यं प्राणः पृषदाज्यममृतमेवाऽस्य प्राणे दधाति शतमानं भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यश्वमव घ्रापयति प्राजापत्यो वा अश्वः प्राजा-पत्यः प्राणस्स्वादेवाऽस्मै योनेः प्राणन्निर्मिमीते वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति ॥ २५ ॥ ते पृषदाज्यं प्राणो वै योनेः प्राणन्द्वाविꣳशतिश्च ॥ ६ ॥

देव सवितरेतत्ते प्राऽऽह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपाथ्साम्नस्सत्या व आशिषस्सन्तु सत्या आकूतय ऋतञ्च सत्यञ्च वदत स्तुत देवस्य सवितुः प्रसवे स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतन्दुहामा मा स्तुतस्य स्तुतङ्गम्याच्छस्त्रस्य शस्त्र- ॥ २६ ॥ मस्यूर्जं मह्यꣳ शस्त्रन्दुहामा मा शस्त्रस्य शस्त्रङ्गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं माऽऽ गम्यात् । यज्ञो बभूव स आ बभूव स प्र जज्ञे स वा-वृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम् । यज्ञो वा वै ॥ २७ ॥ यज्ञपतिन्दुहे यज्ञपतिर्वा यज्ञन्दुहे स यस्स्तुतशस्त्रयोर्दोहमविद्वान् यजते तय्ँयज्ञो दुहे स इष्ट्वा पापीयान्भवति य एनयोर्दोहव्ँविद्वान् यजते स यज्ञन्दुहे स इष्ट्वा वसीयान्भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतन्दुहामा मा स्तुतस्य स्तुतङ्गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रन्दुहामा मा शस्त्रस्य शस्त्रङ्गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्तय्ँय एवव्ँविद्वान् यजते दुह एव यज्ञमिष्ट्वा वसीयान्भवति ॥ २८ ॥ शस्त्रव्ँवै शस्त्रन्दुहान्द्वाविꣳशतिश्च ॥ ७ ॥

श्येनाय पत्वने स्वाहा वट्थ्स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट्थ्स्वयमभि-गूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट्थ्स्वयमभिगूर्ताय नम ऊर्जे होत्राणाꣳ स्वाहा वट्थ्स्व-यमभिगूर्ताय नमः पयसे होत्राणाꣳ स्वाहा वट्थ्स्वयमभिगूर्ताय नमः प्रजापतये मनवे स्वाहा वट्-थ्स्वयमभिगूर्ताय नम ऋतमृतपास्सुवर्वाट्थ्स्वाहा वट्थ्स्वयमभिगूर्ताय नमस्तृपन्ताꣳ होत्रा मधो-र्घृतस्य यज्ञपतिमृषय एनसा- ॥ २९ ॥ ऽऽहुः । प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध । सन्नस्ताभ्याꣳ सृजतु विश्वकर्मा घोरा ऋषयो नमो अस्त्वेभ्यः । चक्षुष एषां मनसश्च सन्धौ

बृहस्पतये महि षद्द्युमन्नमः । नमो विश्वकर्मणे स उ पात्वस्मानन्यान्थ्सोमपान्मन्यमानः । प्राणस्य विद्वान्थ्समरे न धीर एनश्चकृवान्महि बद्ध एषाम् । तवँविश्वकर्म- ॥ ३० ॥ न्प्र मुञ्चा स्वस्तये ये भक्षयन्तो न वसून्यानृहुः । यानग्नयोऽन्वतप्यन्त धिष्णिया इयन्तेषामवया दुरिष्टचै स्विष्टिन्नस्ताङ्कृणोतु विश्वकर्मा । नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामास्सुदेवा अकामा वो दक्षिणान्ननीनिम मा नस्तस्मादेनसः पापयिष्ट । यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणान्न ॥ ३१ ॥ नयेदेभ्यो वृश्च्येत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत्प्रीणात्यस्मे देवासो वपुषे चिकित्सत यमाशिरा दंपती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः । आशीर्दाया दंपती वाममश्नुतामरिष्टो रायस्सचताꣳ समोकसा । य आऽसिचथ्सन्दुग्धङ्कुम्भ्या सहेष्टेन यामन्नमतिञ्जहातु सः । सर्पिर्ग्रीवी ॥ ३२ ॥ पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य । सहजानिर्यस्सुमखस्यमान इन्द्रायाऽऽशिरꣳ सह कुम्भ्याऽदात् । आशीर्म ऊर्जमुत सुप्रजास्त्वमिषन्दधातु द्रविणꣳ सवर्चसम् । सञ्जयन्क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्थ्सपत्नान् । भूतमसि भूते मा धा मुखमसि मुखं भूयासन्द्यावापृथि- वीभ्यान्त्वा परि गृह्णामि विश्वे त्वा देवा वैश्वानराः ॥ ३३ ॥ प्र च्यावयन्तु दिवि देवान्दꣳहाऽन्त- रिक्षे वयाꣳसि पृथिव्यां पार्थिवान्ध्रुवन्ध्रुवेण हविषाऽव सोमन्नयामसि । यथा नस्सर्वमिज्जगदय- क्ष्मꣳ सुमना असत् । यथा न इन्द्र इद्विशः केवलीस्सर्वास्समनसः करत् । यथा नस्सर्वा इद्दिशो- ऽस्माकङ्केवलीरसन् ॥ ३४ ॥ एनसा विश्वकर्मन्नु यो दक्षिणान्न सर्पिर्ग्रीवी वैश्वानराश्चत्वारिꣳशच्च ॥ ८ ॥

यद्वै होताऽद्ध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातस्सवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातस्सवनङ्गायत्रियैव प्रातस्सवने वज्रमन्तर्द्धत्त उक्थ- वँवाचीत्याह माद्ध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं माद्ध्यन्दि- नꣳ सवनन्त्रिष्टुभैव माद्ध्यन्दिने सवने वज्रमन्तर्द्धत्त- ॥ ३५ ॥ उक्थवँवाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्द्धत्ते ब्रह्म- वादिनो वदन्ति स त्वा अद्ध्वर्युस्स्याद्यो यथासवनं प्रतिगरे छन्दाꣳसि संपादयेत्तेजः प्रातस्सवन आत्मन्दधीतेन्द्रियं माद्ध्यन्दिने सवने पशूꣳस्तृतीयसवन इत्युक्थशा इत्याह प्रातस्सवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि ॥ ३६ ॥ त्रिपदा गायत्री गायत्रं प्रातस्सवनं प्रातस्सवन एव प्रतिगरे छन्दाꣳसि सं पादयत्यथो तेजो वै गायत्री तेजः प्रातस्सवनन्तेज एव प्रातस्सवन आत्मन्धत्त उक्थवँवाचीत्याह माद्ध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं माद्ध्यन्दिनꣳ सवनं माद्ध्यन्दिन एव सवने प्रतिगरे छन्दाꣳसि सं पादयत्यथो इन्द्रियवँवै त्रिष्टुगिन्द्रियं माद्ध्यन्दिनꣳ सवन- ॥ ३७ ॥ मिन्द्रियमेव माद्ध्यन्दिने सवन आत्मन्धत्त उक्थवँवाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वराः पशवो जागतन्तृतीयसवनन्तृतीयसवन एव

प्रतिगरे छन्दाꣳसि सं पादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन्धत्ते यद्वै होताऽध्वर्युमभ्याह्वयत आव्यमस्मिन्दधाति तद्यन्ना- ॥ ३८ ॥ ऽपहनीत पुराऽस्य संवथ्सराद्गृह आ वेवीरन्छोꣳसा मोद इवेति प्रत्याह्वयते तेनैव तदप हते यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते यदभिप्रतिगृणीयाद्यथाऽऽयतया समृच्छते तादृगेव तद्यदर्द्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्प्रबाहुग्वा ऋत्विजामुद्गीथा उद्गीथ एवोद्गातृणा- ॥ ३९ ॥ मृचः प्रणव उक्थशꣳसिनां प्रतिगरोऽध्वर्यूणां य एवं विद्वान्प्रतिगृणात्यन्नाद एव भवत्याऽस्य प्रजायां वाजी जायत इयं वै होताऽसावध्वर्युर्यदासीनश्शꣳसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत्तिष्ठन्प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति ॥ ४० ॥ तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे यदासीनश्शꣳसति तस्मादितःप्रदानन्देवा उप जीवन्ति यत्तिष्ठन्प्रतिगृणाति तस्मादमुतःप्रदानं मनुष्या उप जीवन्ति यत्प्राङासीनश्शꣳसति प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति पराङा वर्तते वज्रमेव तन्नि करोति ॥ ४१ ॥ सवने वज्रमन्तर्द्धत्ते त्रीण्येतान्यक्षराणीन्द्रियं माद्ध्यन्दिनꣳ सवनन्नोद्गातृणामध्वर्युर्नैति वर्तयत्यष्टौ च ॥ ९ ॥

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यान्त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याऽद्ध्यक्षाभ्याङ्गृह्णाम्युपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यान्त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याऽद्ध्यक्षाभ्याङ्गृह्णाम्युपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यान्त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याऽद्ध्यक्षाभ्याङ्गृह्णामि देवेभ्यस्त्वा विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्यो विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व ॥ ४२ ॥ तन्ते दुश्चक्षा माऽव ख्यन्मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि मयि वसुस्संयद्वसुश्श्रोत्रपाश्श्रोत्रं मे पाहि भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहन्तमधरं पादयामि यथेन्द्राऽहमुत्तमश्चेतयानि ॥ ४३ ॥ रक्षस्व भ्रातृव्यस्त्रयोदश च ॥ १० ॥

प्र सो अग्ने तवोतिभिस्सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वꣳ सख्यमाविथ । प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपाञ्ज्योतीꣳषि बिभ्रते न वेधसे । अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः । तिस्र उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् । संवाङ्कर्मणा समिषा ॥ ४४ ॥ हिनोमीन्द्राविष्णू अपसस्पारे अस्य । जुषेथां यज्ञन्द्रविणञ्च धत्तमरिष्टैर्नः पथिभिः पारयन्ता । उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथान्त्रेधा सहस्रं वि तदैरयेथाम् । त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानी-

रुषसंस्ते अग्ने । ताभिर्देवानामवो यक्षि विद्वानथा ॥ ४५ ॥ भव यजमानाय शंय्योः । अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः । स त्रीꣳरेकादशाꣳ इह । यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः । नभन्तामन्यके समे । इन्द्राविष्णू दृꣳहिताश्शंबरस्य नव पुरो नवतिञ्च श्नथिष्टम् । शतव्वर्चिनस्सहस्रञ्च साकꣳ हथो अप्रत्यसुरस्य वीरान् । उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः । अथाऽब्रवीद्वृत्रमिन्द्रो हनिष्यन्थ्सखे विष्णो वितरव्वि क्रमस्व ॥ ४६ ॥ इषाऽथ त्वा त्रयोदश च ॥ ११ ॥

यो वै पवमानानान्त्रीणि परिभूस्स्पयस्स्वस्तिर्भक्षेहिं मही नां पयोऽसि देव सवितरेतत्ते श्येनाय यद्वै होतोपयामगृहीतोऽसि वाक्षसत्प्र सो अग्न एकादश ॥ ११ ॥ यो वै स्पयस्स्वस्तिस्स्वधायै नमः प्र मुञ्च तिष्ठतीव षट्चत्वारिꣳशत् ॥ ४६ ॥ यो वै पवमानानाव्वि क्रमस्व ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां तृतीयकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ तृतीयकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

अग्ने तेजस्विन्तेजस्वी त्वन्देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तव्वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि तेजोविदसि तेजो मा मा हासीन्माऽहन्तेजो हासिषं मा मान्तेजो हासीदिन्द्रौजस्विन्नोजस्वी त्वन्देवेषु भूया ओजस्वन्तं मामायुष्मन्तव्वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौ- ॥ १ ॥ जसे जुहोम्योजोविदस्योजो मा मा हासीन्माऽहमोजो हासिषं मा मामोजो हासीथ्सूर्य भ्राजस्विन्भ्राजस्वी त्वन्देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तव्वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपाञ्च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माऽहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीन्मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियन्दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ २ ॥ क्षत्रस्य च मयि त्रयोविꣳशतिश्च ॥ १ ॥

वायुर्हिङ्कर्ताऽग्निः प्रस्तोता प्रजापतिस्साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनन्ते देवाः प्राणभृतः प्राणं मयि दधत्वेतद्वै सर्वमद्ध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्त इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवा- ॥ ३ ॥ स्सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीन्देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्याँ मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु ॥ ४ ॥ शꣳसिषद्विश्वे देवा अष्टाविꣳशतिश्च ॥ २ ॥

वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाऽग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषान्देवानाँ प्रियं पाथ उपेहि मान्दासु ते शुक्र शुक्रमा धूनोमि भन्दनासु कोतनासु नूतनासु रेशीषु मेषीषु वाशीषु विश्वभृत्सु माद्ध्वीषु ककुहासु शक्वरीषु ॥ ५ ॥ शुक्रासु ते शुक्र शुक्रमा धूनोमि शुक्रन्ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आऽस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत । ककुहꣳ रूपव्वृँषभस्य रोचते बृहत्सोमस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगाः । यत्ते सोमाऽदाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहोशिक्त्वन्देव सोम गायत्रेण छन्दसाऽग्नेः ॥ ६ ॥ प्रियं पाथो अपीहि वशी त्वन्देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मथ्सखा त्वन्देव सोम जागतेन छन्दसा विश्वेषान्देवानाँ प्रियं पाथो अपीह्या नः प्राण एतु परावत आऽन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अद्ध्यमृतमसि प्राणाय त्वा । इन्द्राग्नी मे वर्चः कृणुताव्वँर्चस्सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना । दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाऽभवत् ॥ ७ ॥ शक्वरीष्वग्नेर्बृहस्पतिः पञ्चविꣳशतिश्च ॥ ३ ॥

एतद्वा अपान्नामधेयङ्गुह्यय्यँदाधावा मान्दासु ते शुक्र शुक्रमा धूनोमीत्याहाऽपामेव नामधेयेन गुह्येन दिवो वृष्टिमव रुन्धे शुक्रन्ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपय्यँद्रात्रिस्सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिञ्च्यावयत्याऽस्मिन्नुग्रा ॥ ८ ॥ अचुच्यवुरित्याह यथायजुरेवैतत्ककुहꣳ रूपव्वृँषभस्य रोचते बृहदित्याहैतद्वा अस्य ककुहꣳ रूपय्यँद्वृष्टी रूपेणैव वृष्टिमव रुन्धे यत्ते सोमाऽदाभ्यन्नाम जागृवीत्याहैष ह वै हविषा हविर्यजति योऽदाभ्यङ्गृहीत्वा सोमाय जुहोति परा वा एतस्याऽऽयुः प्राण एति ॥ ९ ॥ योऽꣳशुङ्गृह्णात्या नः प्राण एतु परावत इत्याहाऽऽयुरेव प्राणमात्मन्धत्तेऽमृतमसि प्राणाय त्वेति हिरण्यमभि व्यनित्यमृतव्वैँ हिरण्यमायुः प्राणोऽमृतेनैवाऽऽयुरात्मन्धत्ते शतमानं भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यप उप स्पृशति भेषजव्वाँ आपो भेषजमेव कुरुते ॥ १० ॥ उग्रा एत्यापस्त्रीणि च ॥ ४ ॥

वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाश्चक्षुरसि श्रोत्रन्नाम धातुराधिपत्य

आयुर्मे दा रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दा ऋतमसि सत्यन्नामेन्द्रस्याऽऽधिपत्ये क्षत्रं मे दा भूतमसि भव्यन्नाम पितृणामाधिपत्येऽपामोषधीनाङ्गर्भन्धा ऋतस्य त्वा व्योमन ऋतस्य ॥ ११ ॥ त्वा विभूमन ऋतस्य त्वा विधर्मण ऋतस्य त्वा सत्यायर्तस्य त्वा ज्योतिषे प्रजापतिर्विराजमपश्यत्तया भूतञ्च भव्यञ्चाऽसृजत तामृषिभ्यस्तिरोऽदधात्ताञ्जमदग्निस्तपसाऽपश्यत्तया वै स पृश्नीन्कामानसृजत तत्पृश्नीनां पृश्नित्वँय्यत्पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान् यजमानोऽव रुन्धे वायुरसि प्राणो ॥ १२ ॥ नामेत्याह प्राणापानावेवाऽव रुन्धे चक्षुरसि श्रोत्रन्नामेत्याहाऽऽयुरेवाऽव रुन्धे रूपमसि वर्णो नामेत्याह प्रजामेवाऽव रुन्ध ऋतमसि सत्यन्नामेत्याह क्षत्रमेवाऽव रुन्धे भूतमसि भव्यन्नामेत्याह पशवो वा अपामोषधीनाङ्गर्भः पशूनेवा- ॥ १३ ॥ ऽव रुन्ध एतावद्वै पुरुषं परितस्तदेवाऽव रुन्ध ऋतस्य त्वा व्योमन इत्याहेयँव्वा ऋतस्य व्योमेमामेवाऽभि जयत्यृतस्य त्वा विभूमन इत्याहाऽन्तरिक्षँव्वा ऋतस्य विभूमाऽन्तरिक्षमेवाऽभि जयत्यृतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाऽभि जयत्यृतस्य ॥ १४ ॥ त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यन्दिश एवाऽभि जयत्यृतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिस्सुवर्गमेव लोकमभि जयत्येतावन्तो वै देवलोकास्तानेवाऽभि जयति दश सं पद्यन्ते दशाक्षरा विराडन्नँव्विराड्विराज्येवाऽन्नाद्ये प्रति तिष्ठति ॥ १५ ॥ व्योमन ऋतस्य प्राणः पशूनेव विधर्म दिवमेवाऽभि जयत्यृतस्य षट्चत्वारिꣳशच्च ॥ ५ ॥

देवा वै यद्यज्ञेन नाऽवारुन्धत तत्परैरवाऽरुन्धत तत्पराणां परत्वँय्यत्परे गृह्यन्ते यदेव यज्ञेन नाऽवरुन्धे तस्याऽवरुद्धचै यं प्रथमङ्गृह्णातीममेव तेन लोकमभि जयति यद्द्वितीयमन्तरिक्षन्तेन यन्तृतीयममुमेव तेन लोकमभि जयति यदेते गृह्यन्त एषाँल्लोकानामभिजित्या ॥ १६ ॥ उत्तरेष्वहस्स्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाँल्लोकान्पुनरिमँल्लोकं प्रत्यवरोहन्ति यत्पूर्वेष्वहस्स्वितः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेष्वहस्स्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उप जीवन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्यादद्भ्य ओषधयस्सं भवन्त्योषधयो ॥ १७ ॥ मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्र जायन्त इति परानन्विति ब्रूयाद्यद्गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्मादद्भ्य ओषधयस्सं भवन्ति यद्गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नँय्यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात्प्रजापतिं प्रजा अनु प्र जायन्ते ॥१८॥ अभिजित्यै भवन्त्योषधयोऽष्टाचत्वारिꣳशच्च ॥ ६ ॥

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञञ्छन्दाꣳसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाऽक्रामद्यज्ञञ्छन्दाꣳसि ते देवा अमन्यन्ताऽमी वा इदमभूवन् यद्वयꣳ स्म इति ते प्रजापतिमुपाऽधावन्त्सोऽब्रवीत्प्रजापतिश्छन्दसाँव्वीर्यमादाय तद्वः प्र दास्यामीति स छन्दसाँव्वीर्य-

॥१९॥ मादाय तदेभ्यः प्राऽयच्छत्तदनु छन्दाऽस्यपाऽक्रामञ्छन्दाऽसि यज्ञस्ततो देवा अभवन्परा-ऽसुरा य एवञ्छन्दसाँव्वीर्यं-व्वेदाऽऽ श्रावयाऽस्तु श्रौषडयज ये यजामहे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ब्रह्मवादिनो वदन्ति कस्मै कमद्ध्वर्युरा श्रावयतीति छन्दसाँव्वीर्यायेति ब्रूयादेतद्वै ॥२०॥ छन्दसाँव्वीर्यमा श्रावयाऽस्तु श्रौषडयज ये यजामहे वषट्कारो य एवँव्वेद सर्वैरेव छन्दोभिरर्चति यत्किञ्चाऽर्चति यदिन्द्रो वृत्रमहन्नमेद्ध्यचन्तद्यद्यतीन्नपावपदमेद्ध्यचन्तदथ कस्मादिन्द्रो यज्ञ आ सꣳस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव तद्यजन्ति य एवँव्वेदोपैनँय्यज्ञो नमति ॥ २१ ॥ छन्दसाँव्वीर्य-व्वा एव तदष्टौ च ॥ ७ ॥

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् । आ वृश्च्यते वा एतद्यजमानोऽग्निभ्याँय्यदेनयोश्शृतङ्कृत्याऽथाऽन्यत्राऽव-भृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति नाऽऽर्तिमाच्छति यजमानो यत्कुसीद- ॥ २२ ॥ मप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेत-त्तदग्ने अनृणो भवामि । विश्वलोप विश्वदावस्य त्वाऽऽसञ्जुहोम्यग्धादेकोऽहुतादेकस्समसनादेकः । ते नः कृण्वन्तु भेषजꣳ सदस्सहो वरेण्यम् । अयन्नो नभसा पुरस्सꣳस्फानो अभि रक्षतु । गृहाणा-मसमत्यै बहवो नो गृहा असन् । स त्वन्नो ॥ २३ ॥ नभसस्पत ऊर्जन्नो धेहि भद्रया । पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि । देव सꣳस्फान सहस्रपोषस्येशिषे स नो रास्वाऽज्यानिꣳ रायस्पोषꣳ सु-वीर्यꣳ सँव्वत्सरीणाꣳ स्वस्तिम् । अग्निर्वाव यम इयँय्यमी कुसीदँव्वा एतद्यमस्य यजमान आ दत्ते यदोषधीभिर्वेदिꣳ स्तृणाति यदनुपौष्य प्रयायाद्ग्रीवबद्धमेन- ॥ २४ ॥ ममुष्मिँल्लोके नेनीयेरन् यत्कुसीदमप्रतीत्तं मयीत्युपौषतीहैव सन् यमङ्कुसीदन्निरवदायाऽनृणस्सुवर्गँल्लोकमेति यदि मिश्र-मिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत्प्रदाव्यस्स एवैनꣳ स्वदयत्यहाँव्वि-धान्यामेकाष्टकायामपूपञ्चतुश्शरावं पक्त्वा प्रातरेतेन कक्षमुपौषेद्यदि ॥ २५ ॥ दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुप यन्ति यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारँव्विद्वान् यजते सममुष्मिँल्लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता तान् य एवँव्विद्वान् यजते सममुष्मिँल्लोक इष्टापूर्तेन गच्छ-तेऽयन्नो नभसा पुर ॥ २६ ॥ इत्याहाऽग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वन्नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव सꣳस्फानेत्याहाऽसौ वा आदित्यो देवस्सꣳस्फान आदित्यमेव तदाहैतन्मे गोपायेति ॥ २७ ॥ कुसीदन्त्वन्न एनमोषेद्यदि पुर आदित्यमेव तदाहैतन्मे गोपायेति ॥८॥

एतँय्युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नश्शाप्त जनुषा सुभागा

रायस्पोषेण समिषा मदेम । नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहङ्गृणामि । अनु मन्यस्व सुयजा यजाम जुष्टन्देवानामिदमस्तु हव्यम् । देवानामेष उपनाह आसीदपाङ्गर्भ ओषधीषु न्यक्तः । सोमस्य द्रप्समवृणीत पूषा ॥ २८ ॥ बृहन्नद्रिरभवत्तदेषाम् । पिता वत्सानां पतिरघ्नियानामथो पिता महताङ्गर्गराणाम् । वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः । त्वाङ्गावोऽवृणत राज्याय त्वाꣳ हवन्त मरुतस्स्वर्काः । वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो वि भजा वसूनि । व्यृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्त एष ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते ॥ २९ ॥ पूषा क्रियन्त एषोऽष्टौ च ॥ ९ ॥

सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः । बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीञ्जुहोतु । यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्यै तान्देवैस्समजीगमम् । आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद । भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः । वि ते भिनद्मि तकरीव्वँि योनिव्वँि गवीन्यौ । वि ॥ ३० ॥ मातरञ्च पुत्रञ्च वि गर्भञ्च जरायु च । बहिस्ते अस्तु बालिति । उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम् । एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनाऽनु प्रथताꣳ स्वाहा । मही द्यौः पृथिवी च न इमय्यँज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ ३१ ॥ गवीन्यौ वि चतुश्चत्वारिꣳशच्च ॥ १० ॥

इदव्वँामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते । अयव्वां परि षिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये । अस्मे इन्द्राबृहस्पती रयिन्धत्तꣳ शतग्विनम् । अश्वावन्तꣳ सहस्रिणम् । बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः । इन्द्रः पुरस्तादुत मध्यतो नस्सखा सखिभ्यो वरिवः कृणोतु । वि ते विष्वग्वातजूतासो अग्ने भामास- ॥ ३२ ॥ श्शुचे शुचयश्चरन्ति । तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः । त्वामग्ने मानुषीरीडते विशो होत्राविदव्वँिविचिꣳ रत्नधातमम् । गुहा सन्तꣳ सुभग विश्वदर्शतन्तुविष्मणसꣳ सुयजङ्घृतश्रियम् । धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् । धाता प्रजाया उत राय ईशे धातेदव्वँिश्वं भुवनञ्जजान । धाता पुत्रय्यँजमानाय दाता ॥ ३३ ॥ तस्मा उ हव्यङ्घृतवद्विधेम । धाता ददातु नो रयिं प्राचीञ्जीवातुमक्षिताम् । वयन्देवस्य धीमहि सुमतिꣳ सत्यराधसः । धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृतास्सव्व्यँयन्ताव्विँश्वे देवासो अदितिस्सजोषाः । अनु नोऽद्याऽनुमतिर्यज्ञन्देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतान्दाशुषे मयः । अन्विदनुमते त्वं ॥ ३४ ॥ मन्यासै शञ्च नः कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः । अनु मन्यतामनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणम् । तस्यै वयꣳ हेडसि माऽपि भूम सा नो देवी सुहवा शर्म यच्छतु । यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्ष-

ँ सा नों देवी सुहवा शर्मं यच्छतु । ॥ ३५ ॥ राकामहँ सुहवाँ सुष्टुती हुवे शृणोतुं नस्सुभगा बोधंतु त्मनां । सीव्यत्वपंस्सूच्याऽच्छिंद्यमानया ददांतु वीरँ शतदांयमुक्थ्यंम् । यास्तें राके सुमतयंस्सुपेशंसो याभिर्ददांसि दाशुषे वसूंनि । ताभिंर्नो अद्य सुमना उपागंहि सहस्रपोषँ सुंभगे ररांणा । सिनींवालि या सुंपाणिः । कुहूमहँ सुभगांवँविद्मनापंसमस्मिन् यज्ञे सुहवांञोहवीमि । सा नों ददातु श्रवणं पितृणान्तस्यांस्ते देवि हविषां विधेम ॥ कुहूर्देवानांममृतंस्य पत्नी हव्यां नो अस्य हविषंश्चिकेतु । सन्दाशुषें किरतु भूरिं वामँ रायस्पोषंश्चिकितुषें दधातु ॥ ३६ ॥ भामांसो दाता त्वमन्तरिंख्षँ सा नों देवी सुहवा शर्मं यच्छतु श्रवणश्चतुर्विंँशतिश्च ॥ ११ ॥

अग्ने तेजस्विन्वायुर्वसंवस्त्वैतद्वा अपाँव्वायुरंसि प्राणो नामं देवा वै यद्यज्ञेन न प्रजापंतिर्देवासुरानायुर्दा एत-य्यँयुवांनँ सूर्यो देव इदँव्वामेकांदश ॥ ११ ॥ अग्ने तेजस्विन्वायुरंसि छन्दंसाँव्वीर्यं मातरंश्च षट्त्रिंँशत् ॥ ३६ ॥ अग्ने तेजस्विँश्चिकितुषें दधातु ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां तृतीयकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ तृतीयकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

वि वा एतस्यं यज्ञ ऋद्ध्यते यस्यं हविरंतिरिच्यंते सूर्यो देवो दिंविषद्भ्य इत्यांह बृहस्पतिंना चैवाऽस्यं प्रजापंतिना च यज्ञस्य व्यृद्धमपिं वपति रख्षाँसि वा एतत्पशुँ संचन्ते यदेंकदेवत्यं आलंब्धो भूयान्भवंति यस्यांस्ते हरिंतो गर्भ इत्यांह देवत्रैवैनांङ्गमयति रख्षंसामपंहत्या आ वर्तन वर्तयेत्यांह ॥ १ ॥ ब्रह्मंणैवैनमा वंर्तयति वि तें भिनद्मि तकरीमित्यांह यथायजुरेवैतदुरुद्रप्सो विश्वरूप इन्दुरित्यांह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिस्समर्द्धयति दिवँव्वै यज्ञस्य व्यृद्धङ्गच्छति पृथिवीमतिंरिक्तन्तद्यन्न शमयेदार्तिमार्च्छेद्यजंमानो मही द्यौः पृथिवी चं न इत्यां- ॥ २ ॥ ह द्यावांपृथिवीभ्यामेव यज्ञस्य व्यृद्धञ्चाऽतिंरिक्तञ्च शमयति नाऽऽर्तिमार्च्छति यजंमानो भस्मंनाऽभि

स॒मूँहति स्व॒गाकृ॑त्या॒ अथो॑ अ॒नयो॑र्वा ए॒ष गर्भो॒ऽनयो॑रे॒वैन॒न्दधाति॒ यद॑व॒द्येद॑ति॒ तद्रे॑चये॒द्यन्नाऽव॒द्येत्प॒-शोराल॑ब्धस्य॒ नाऽव॑ द्येत्पु॒रस्ता॒न्नाभ्या॑ अ॒न्यद॑व॒द्येदु॒परि॑ष्टाद॒न्यत्पु॒रस्ता॒द्वै नाभ्यै॑ ॥ ३ ॥ प्रा॒ण उ॒परि॑ष्टा-द॒पा॒नो याव॑ने॒व प॒शुस्तस्या॒ऽव॑ द्यति॒ विष्ण॑वे शिपिवि॒ष्टाय॑ जुहोति॒ यद्वै य॒ज्ञस्या॑ऽति॒रिच्य॑ते॒ यः प॒शो-र्भू॒मा या पु॒ष्टिस्तद्विष्णु॑श्शिपिवि॒ष्टोऽति॑रिक्त ए॒वाऽति॑रिक्त॒न्दधा॒त्यति॑रिक्तस्य॒ शान्त्या॑ अ॒ष्टाप्रू॑द्धिर॑ण्य-न्दक्षि॑णा॒ऽष्टाप॑दी॒ ह्ये॑षाऽऽत्मा न॑व॒मः प॒शोरा॒प्त्या॑ अन्तरको॒श उ॒ष्णीषे॒णाऽऽवि॑ष्टितं भवत्येवमि॑व॒ हि प॒शुरु॒ल्ब॑मिव॒ चर्मे॑व मा॒ꣳसमि॒वाऽस्थी॑व॒ याव॑ने॒व प॒शुस्तमा॒प्त्वाऽव॑ रुन्धे॒ यस्यै॒षा य॒ज्ञे प्राय॑श्चित्तिः क्रि॒यत॑ इ॒ष्ट्वा वसी॑यान्भवति ॥ ४ ॥ व॒र्तये॒त्याह॒ न॒ इति॒ वै नाभ्या॒ उल्ब॑मि॒वैक॑विꣳशतिश्च ॥ १ ॥

आ वा॑यो भूष शुचिपा॒ उप॑ नस्स॒हस्र॑न्ते नि॒युतो॑ विश्ववार । उपो॑ ते॒ अन्धो॒ मद्य॑मयामि॒ यस्य॑ देव दधि॒षे पू॑र्व॒पेय॑म् । आकू॑त्यै॒ त्वा॒ कामा॑य॒ त्वा स॒मृधे॑ त्वा किक्कि॒टा ते॒ मनः॑ प्र॒जाप॑तये॒ स्वाहा॑ कि-क्कि॒टा तें प्रा॒णँव्वा॒यवे॒ स्वाहा॑ किक्कि॒टा ते॒ चक्षुस्सू॒र्याय॒ स्वाहा॑ किक्कि॒टा ते॒ श्रोत्र॒न्द्यावा॑पृथि॒वीभ्या॒ꣳ स्वाहा॑ किक्कि॒टा ते॒ वाच॒ꣳ सर॑स्वत्यै॒ स्वाहा॒ ॥ ५ ॥ त्वन्तु॒रीया॑ व॒शिनी॑ व॒शाऽसि॑ स॒कृद्यत्त्वा॒ मन॑सा गर्भ॒ आऽशय॑त् । व॒शा त्वँव्व॒शिनी॑ गच्छ दे॒वान्थ्स॒त्यास्स॑न्तु॒ यज॑मानस्य॒ कामाः॑ । अ॒जाऽसि॑ रयि॒ष्ठा पृ॑थि॒व्या॒ꣳ सी॑दो॒र्ध्वाऽन्तरि॑क्ष॒मुप॑ तिष्ठस्व दि॒वि ते॑ बृ॒हद्भाः । तन्तु॑न्त॒न्वन्रज॑सो भा॒नुमन्वि॑हि॒ ज्यो-ति॑ष्मतः प॒थो र॑क्ष धि॒या कृ॒तान् । अ॒नु॒ल्ब॒णँव्व॑यत॒ जोगु॑वा॒मपो॒ मनु॑र्भव ज॒नया॒ दैव्य॒ञ्जन॑म् । मन॑सो ह॒विर॑सि प्र॒जाप॑ते॒र्वर्णो॒ गात्रा॑णान्ते गात्र॒भाजो॑ भूयास्म ॥ ६ ॥ सर॑स्वत्यै॒ स्वाहा॒ मनु॒स्त्रयो॑दश च ॥ २ ॥

इ॒मे वै स॒हाऽऽस्तान्ते वा॒युर्व्यवा॒त्ते गर्भ॑मदधाता॒न्त॒ꣳ सोम॒ः प्राऽज॑नयद॒ग्निर॑ग्रसत॒ स ए॒तं प्र॒जाप॑तिराग्ने॒यम॒ष्टाक॑पालमपश्य॒त्तन्निर॑वप॒त्तेनै॒वैना॑म॒ग्नेरधि॒ निर॑क्रीणा॒त्तस्मा॑द॒प्यन्य॑देव॒त्या॑मा॒लभ॑मान आग्ने॒यम॒ष्टाक॑पालं पु॒रस्ता॒न्निर्व॑पेद॒ग्नेरे॒वैना॒मधि॑ नि॒ष्क्रीया॑ऽऽलभ॑ते॒ यद्- ॥ ७ ॥ वा॒युर्व्यवा॒त्तस्मा॑द्वा-य॒व्या॑ य॒दिमे गर्भ॒मद॑धाता॒न्तस्मा॑द्द्यावापृथि॒व्या॑ यथ्सोम॒ः प्राऽज॑नयद॒ग्निर॑ग्रसत॒ तस्मा॑दग्नीषो॒मीया॒ यद॒नयो॑र्वि॒यत्यो॒र्वाग॒वद॒त्तस्मा॑थ्सारस्व॒ती य॒त्प्र॒जाप॑तिर॒ग्नेरधि॑ नि॒रक्री॑णा॒त्तस्मा॑त्प्राजाप॒त्या सा वा ए॒षा स॑र्वदेव॒त्या॑ यद॒जा व॒शा वा॑य॒व्या॑मा ल॑भेत॒ भूति॑कामो वा॒युर्वै क्षेपि॑ष्ठा दे॒वता॑ वा॒युमे॒व स्वेन॑ ॥ ८ ॥ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैनं॒ भूति॑ङ्गमयति द्यावापृथि॒व्या॑मा ल॑भेत कृ॒षमा॑णः प्रति॒ष्ठाका॑मो दि॒व ए॒वाऽस्मै॑ प॒र्जन्यो॑ वर्षति॒ व्य॑स्यामोष॑धयो रोहन्ति स॒मर्द्धु॑कमस्य स॒स्यं भ॑वत्यग्नीषो॒मीया॒मा ल॑भेत॒ यः का॒मये॑ताऽन्न॑वानन्ना॒दस्स्या॒मित्य॒ग्निनै॒वाऽन्न॒मव॑ रुन्धे॒ सोमे॑ना॒ऽन्नाद्य॒मन्न॑वाने॒वाऽन्ना॒दो भ॑वति सारस्व॒तीमा ल॑भेत॒ य ॥ ९ ॥ ई॒श्व॒रो वा॒चो व॑दि॒तोस्सन्वाच॒न्न वदे॒द्वाग्वै सर॑स्वती॒ सर॑स्व-तीमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ सैवाऽस्मि॒न्वाच॒न्दधाति प्राजाप॒त्यामा ल॑भेत॒ यः का॒मये॑ता॒ऽनभि-जितम॒भि ज॑येय॒मिति॑ प्र॒जाप॑ति॒स्सर्वा॑ दे॒वता॑ दे॒वता॑भिरे॒वाऽन॑भिजितम॒भि ज॑यति वा॑य॒व्य॑योपाक॑रोति वा॒योरे॒वैना॑मवरु॒द्ध्याऽऽलभ॑त॒ आकू॑त्यै त्वा॒ कामा॑य॒ त्वे- ॥ १० ॥ त्या॑ह यथाय॒जुरे॒वैतत्कि॑क्कि-टाका॒रञ्जु॑होति किक्कि॒टाका॒रेण॒ वै ग्रा॒म्याः प॒शवो॑ रमन्ते॒ प्राऽऽर॒ण्याः प॑तन्ति॒ यत्कि॑क्कि॒टाका॒रञ्जु॑होति॒

ग्राम्याणाँ पशूनान्धृत्यै पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सुवर्गँल्लोकङ्गमयति त्वन्तुरीया वशिनी वशाऽसीत्याह देवत्रैवैनाङ्गमयति सत्यास्सन्तु यजमानस्य कामा इत्याहैष वै कामो ॥ ११ ॥ यजमानस्य यदनार्त उदृचङ्गच्छति तस्मादेवमाहाऽजाऽसि रयिष्ठेत्याहैष्वेवैनाँल्लोकेषु प्रतिष्ठापयति दिवि ते बृहद्भा इत्याह सुवर्ग एवाऽस्मै लोके ज्योतिर्दधाति तन्तुन्तन्वन्नजसो भानुमन्विहीत्याहेमानेवाऽस्मै लोकाञ्ज्योतिष्मतः करोत्यनुल्बणव्वँयत जोगुवामप इत्या- ॥ १२ ॥ ह यदेव यज्ञ उल्बणङ्क्रियते तस्यैवैषा शान्तिर्मनुर्भव जनया दैव्यञ्जनमित्याह मानव्यो वै प्रजास्ता एवाऽऽद्याः कुरुते मनसो हविरसीत्याह स्वगाकृत्यै गात्राणान्ते गात्रभाजो भूयास्मेत्याहाऽऽशिषमेवैतामा शास्ते तस्यै वा एतस्या एकमेवाऽदेवयजनय्यँदालब्धायामभ्रो ॥ १३ ॥ भवति यदालब्धायामभ्रस्यादप्सु वा प्रवेशयेथ्सर्वाँ-व्वँा प्राऽश्नीयाद्यदप्सु प्रवेशयेँद्यज्ञवेशसङ्कुर्याथ्सर्वामेव प्राऽश्नीयादिन्द्रियमेवाऽऽत्मन्धत्ते सा वा एषा त्रयाणामेवाऽवरुद्धा सव्वँथ्सरसदस्सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन्तेषामेवैषाऽऽप्ता ॥ १४ ॥ यथ्स्वेन सारस्वतीमा लभेत यः कामाय त्वा कामोऽप इत्यभ्रो द्विचत्वारिꣳशच्च ॥३॥

चित्तञ्च चित्तिश्चाऽऽकूतञ्चाऽऽकूतिश्च विज्ञातञ्च विज्ञानञ्च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरञ्च प्रजापतिर्जयानिन्द्राय वृष्णे प्राऽयच्छदुग्रः पृतनाज्येषु तस्मै विशस्समनमन्त सर्वास्स उग्रस्स हि हव्यो बभूव देवासुरास्सय्यँत्ता आसन्थ्स इन्द्रः प्रजापतिमुपाऽधावत्तस्मा एताञ्जयान्प्राऽयच्छत्तानजुहोत्ततो वै देवा असुरानजयन् यदजयन्तज्जयानाञ्जयत्वꣳ स्पर्द्धमानेनैते होतव्या जयत्येव तां पृतनाम् ॥ १५ ॥ उप पञ्चविꣳशतिश्च ॥ ४ ॥

अग्निर्भूतानामधिपतिस्स माऽवत्विन्द्रो ज्येष्ठानाय्यँमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रस्सत्यानाव्वँरुणोऽपाꣳ समुद्रस्स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनान्त्वष्टा रूपाणाव्वँिष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत । अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यान्देवहूत्याम् ॥ १६ ॥ अवरे सप्तदश च ॥ ५ ॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन्तानभ्यातन्वत यद्देवानाङ्कर्माऽऽसीदार्ध्यत तद्यदसुराणान्न तदार्ध्यत येन कर्मणेर्थ्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा यद्विश्वे देवास्समभरन्तस्मादभ्यातानना वैश्वदेवा यत्प्रजापतिर्जयान्प्राऽयच्छत्तस्माज्जयाः प्राजापत्या ॥ १७ ॥ यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृताꣳ राष्ट्रभृत्त्वन्ते देवा अभ्यातानैरसुरानभ्यातन्वत जयैरजयन्राष्ट्रभृद्भी राष्ट्रमाऽददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्या-

तानत्वय्यँज्ञैरजयन्तज्जयानाञ्जयत्वय्यँद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृताꣳ राष्ट्रभृत्त्वन्ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्थ्स्यात्स एताञ्जुहुयादभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति राष्ट्रभृद्भी राष्ट्रमा दत्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ॥ १८ ॥ प्राजापत्यास्सोऽष्टादश च ॥ ६ ॥

ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽफ्सरस ऊर्जो नाम स इदं ब्रह्म ख्षत्रं पातु ता इदं ब्रह्म ख्षत्रं पान्तु तस्मै स्वाहा ताभ्यस्स्वाहा सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽफ्सरस आयुवस्सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नख्षत्राण्यफ्सरसो बेकुरयो भुज्युस्सुपर्णो यज्ञो गन्धर्वस्तस्य दख्षिणा अफ्सरसस्स्तवाः प्रजापतिर्विश्वकर्मा मनो ॥ १९ ॥ गन्धर्वस्तस्यर्ख्सामान्यफ्सरसो वह्नय इषिरो विश्वव्यचा वातो गन्धर्वस्तस्याऽऽपोऽफ्सरसो मुदा भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाऽज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ सव्ँवथ्सरीणाꣳ स्वस्तिम् । परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमफ्सरसो भुवस्सुख्षितिस्सुभूतिर्भद्रकृथ्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽफ्सरसो रुचो दूरेहेतिरमृडयो ॥ २० ॥ मृत्युर्गन्धर्वस्तस्य प्रजा अफ्सरसो भीरुवश्चारुः कृपणकाशी कामो गन्धर्वस्तस्याऽऽधयोऽफ्सरसश्शोचयन्तीर्नाम स इदं ब्रह्म ख्षत्रं पातु ता इदं ब्रह्म ख्षत्रं पान्तु तस्मै स्वाहा ताभ्यस्स्वाहा स नो भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै ख्षत्राय महि शर्म यच्छ ॥ २१ ॥ मनोऽमृडयष्षट्चत्वारिꣳशच्च ॥ ७ ॥

राष्ट्रकामाय होतव्या राष्ट्रव्ँवै राष्ट्रभृतो राष्ट्रेणैवाऽस्मै राष्ट्रमव रुन्धे राष्ट्रमेव भवत्यात्मने होतव्या राष्ट्रव्ँवै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रय्यँच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमव रुन्धे वसिष्ठस्समानानां भवति ग्रामकामाय होतव्या राष्ट्रव्ँवै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवाऽस्मै राष्ट्रꣳ सजातानव रुन्धे ग्रा- ॥ २२ ॥ म्येव भवत्यधिदेवने जुहोत्यधिदेवन एवाऽस्मै सजातानव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते रथमुख ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवाऽस्मा ओजोऽव रुन्ध ओजस्व्येव भवति यो राष्ट्रादपभूतस्स्यात्तस्मै होतव्या यावन्तोऽस्य रथास्स्युस्तान्ब्रूयाद्युङ्ध्वमिति राष्ट्रमेवाऽस्मै युनक्त्या- ॥ २३ ॥ हुतयो वा एतस्याऽक्लृप्ता यस्य राष्ट्रन्न कल्पते स्वरथस्य दख्षिणञ्चक्रं प्रवृह्य नाडीमभि जुहुयादाहुतीरेवाऽस्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनु कल्पते सङ्ग्रामे सय्ँयत्ते होतव्या राष्ट्रव्ँवै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये सङ्ग्रामꣳ सय्ँयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ सङ्ग्रामं मान्धुक इद्ध्मो ॥ २४ ॥ भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रति वेष्टयन्ति य उन्माद्येत्तस्मै होतव्या गन्धर्वाफ्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाफ्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यस्स्वाहेति जुहोति तेनैवैनाञ्छमयति नैयग्रोध औदुंबर आश्वत्थः प्लाख्ष इतीद्ध्मो भवत्येते वै गन्धर्वाप्सरसाङ्गृहास्स्व एवैना- ॥ २५ ॥ नायतने शमयत्यभिचरता प्रतिलोमꣳ होतव्याः प्राणानेवाऽस्य प्रतीचः

प्रति यौति तन्ततो येन केन च स्तृणुते स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निरृतिगृहीत-न्निरृतिगृहीत एवैनन्निरृत्या ग्राहयति यद्वाचः क्रूरन्तेन वषट्करोति वाच एवैनङ्क्रूरेण प्र वृश्चति ताजगार्तिमार्च्छति यस्य कामयेताऽन्नाद्य- ॥ २६ ॥ मा ददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि सङ्गृह्णीयात्प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवाऽस्याऽन्नाद्यमा दत्त इदमहममुष्याऽऽमुष्यायणस्याऽन्नाद्यꣳ हरामीत्याहाऽन्नाद्यमेवाऽस्य हरति षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवाऽस्याऽन्नाद्यन्नादायर्तवोऽस्मा अनु प्र यच्छन्ति ॥ २७ ॥ यो ज्येष्ठबन्धुरपभूतस्स्यात्तꣳ स्थलेऽवसाय्य ब्रह्मौदनञ्चतुश्शरावं पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलँव्वर्ष्मणैवैनँव्वर्ष्म समानानाङ्गमयति चतुश्शरावो भवति दिक्ष्वेव प्रति तिष्ठति क्षीरे भवति रुचमेवाऽस्मिन्दधात्युद्धरति शृतत्वाय सर्पिष्वान्भवति मेध्यत्वाय चत्वार आर्षेयाः प्राऽश्नन्ति दिशामेव ज्योतिषि जुहोति ॥ २८ ॥ ग्रामी युनक्तीद्ध्मस्स्व एवैनानन्नाद्यँय्यच्छन्त्येकान्न पञ्चाशच्च ॥ ८ ॥

देविका निर्वपेत्प्रजाकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छन्दोभिरेवाऽस्मै प्रजाः प्र जनयति प्रथमन्धातारङ्करोति मिथुनी एव तेन करोत्यन्वेवाऽस्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति प्रजास्वेव प्रजातासु कुह्वा वाचन्दधात्येता एव निर्वपेत्पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसी- ॥ २९ ॥ व खलु वै पशवश्छन्दोभिरेवाऽस्मै पशून्प्र जनयति प्रथमन्धातारङ्करोति प्रैव तेन वापयत्यन्वेवाऽस्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति पशूनेव प्रजातान्कुह्वा प्रति ष्ठापयत्येता एव निर्वपेद्ग्रामकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै ग्रामश्छन्दोभिरेवाऽस्मै ग्राम- ॥ ३० ॥ मव रुन्धे मद्ध्यतो धातारङ्करोति मद्ध्यत एवैनङ्ग्रामस्य दधात्येता एव निर्वपेज्ज्योगामयावी छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतमभि मन्यन्ते यस्य ज्योगामयति छन्दोभिरेवैनमगदङ्करोति मद्ध्यतो धातारङ्करोति मद्ध्यतो वा एतस्याऽक्लृप्तँय्यस्य ज्योगामयति मद्ध्यत एवाऽस्य तेन कल्पयत्येता एव नि- ॥ ३१ ॥ र्वपेद्यँय्यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतन्नोप नमन्ति यँय्यज्ञो नोपनमति प्रथमन्धातारङ्करोति मुखत एवाऽस्मै छन्दाꣳसि दधात्युपैनँय्यज्ञो नमत्येता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमन्धातारङ्करो- ॥ ३२ ॥ त्युपरिष्टादेवाऽस्मै छन्दाꣳस्ययातयामान्यव रुन्ध उपैनमुत्तरो यज्ञो नमत्येता एव निर्वपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतन्नोप नमन्ति यं मेधा नोपनमति प्रथमन्धातारङ्करोति मुखत एवाऽस्मै छन्दाꣳसि दधात्युपैनं मेधा नमत्येता एव निर्वपे- ॥ ३३ ॥ द्रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक्छन्दोभिरेवाऽस्मिन्रुचन्दधाति क्षीरे भवन्ति रुचमेवाऽस्मिन्दधति मद्ध्यतो धातारङ्करोति मद्ध्यत एवैनꣳ रुचो दधाति गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती

सिनीवाल्यनुष्टुप्कुहूर्द्धाता वषट्कारः पूर्वपक्षो राकाऽपरपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाताऽष्टौ ॥ ३४ ॥ वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा एकादशाक्षरा त्रिष्टुब्द्वादशाऽऽदित्या द्वादशाक्षरा जगती प्रजापतिरनुष्टुब्धाता वषट्कार एतद्वै देविकास्सर्वाणि च छन्दाꣳसि सर्वाश्च देवता वषट्कारस्ता यथ्सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयन्निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनन्न प्र दहन्त्यथो यस्मै कामाय निरुप्यन्ते तमेवाऽऽभिरुपाऽऽप्नोति ॥ ३५ ॥ पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसि ग्रामङ्कल्पयत्येता एव निरुक्तमन्धातारङ्करोति मेधा नमत्येता एव निर्वपेदष्टौ दहन्ति नव च ॥ ९ ॥

देविकाः प्रजाकामो मिथुनी पशुकामः प्रैव ग्रामकामो ज्योगामयावी यꣳयज्ञो य ईजानो यं मेधा रुक्कामोऽष्टौ ॥ देविका भवन्ति दधति राष्ट्रकामाय भवति दधाति ॥

वास्तोष्पते प्रति जानीह्यस्मान्थ्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शञ्चतुष्पदे । वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । आवः क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिस्सदा नः । यथ्सायंप्रातरग्निहोत्रञ्जुहोत्याहुतीष्टका एव ता उप धत्ते ॥ ३६ ॥ यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यथ्सायंप्रातर्जुहोत्यहोरात्राण्येवाऽऽस्वेष्टकाः कृत्वोप धत्ते दश समानत्र जुहोति दशाक्षरा विराड्विराजमेवाऽऽप्त्वेष्टकाङ्कृत्वोप धत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनꣳ ॥ ३७ ॥ रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयञ्जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्च्छति यजमानो यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिञ्जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिञ्जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्या- ॥ ३८ ॥ द्दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ वास्तोष्पतीयञ्जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति यदेकया जुहुयाद्दर्विहोमङ्कुर्यात्पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय यद्धुत आदध्याद्रुद्रङ्गृहानन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा यज्ञवेशसꣳवाऽऽदहनꣳवा तादृगेव तदयन्ते योनिरृत्वियं इत्यरण्योस्समारोहय- ॥ ३९ ॥ त्येष वा अग्नेर्योनिस्स्व एवैनꣳयोनौ समारोहयत्यथो खल्वाहुर्यदरण्योस्समारूढो नश्येदुदस्याऽग्निस्सीदेत्पुनराधेयस्स्यादिति या ते अग्ने यज्ञिया तनूस्तयेह्या रोहेत्यात्मन्थ्समारोहयते यजमानो वा अग्नेर्योनिस्स्वायामेवैनꣳयोन्याꣳ समारोहयते ॥ ४० ॥ धत्तेऽर्वाचीनꣳ स्याथ्समारोहयति पञ्चचत्वारिꣳशच्च ॥ १० ॥

त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा । हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे । सुगार्हपत्यास्समिषो दिदीह्यस्मद्रियक्सं मिमीहि श्रवाꣳसि । त्वञ्च सोम नो वशो जीवातुन्न मरामहे । प्रियस्तोत्रो वनस्पतिः । ब्रह्मा देवानां पदवीः कवीनामृषिर्वि-

प्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः ॥ ४१ ॥ पवित्रमत्येति रेभन्न् । आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे । सत्यसवꣳ सवितारम् । आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽ देवो याति भुवना विपश्यन्न् । यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा ॥ ४२ ॥ नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः । गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन्न् । हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्न् । बृहस्पतिरभिकनिक्रदद्गा उत प्राऽस्तौदुच्च विद्वाꣳ अगायत् । एन्द्र सानसिꣳ रयिꣳ ॥ ४३ ॥ सजित्वानꣳ सदासहम् । वर्षिष्ठमूतये भर । प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राऽऽ भर दक्षिणेना वसूनि पतिस्सिन्धूनामसि रेवतीनाम् । त्वꣳ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो । भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄꣳश्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो ॥ ४४ ॥ विश्वचर्षणे । मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसिम् । सत्यश्चित्रश्रवस्तमम् । मित्रो जनान् यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभि चष्टे सत्याय हव्यङ्घृतवद्विधेम । प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् । य- ॥ ४५ ॥ चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि । यत्किञ्चेदव्वँरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः । कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म । सर्वा ता वि ष्य शिथिरेव देवाऽथा ते स्याम वरुण प्रियासः ॥ ४६ ॥ सोमो गोषु मा रयिं मन्त्रो यच्चिद्धिथिरा सप्त च ॥ ११ ॥

वि वा एतस्या ऽऽवायो इमे वै चित्तञ्चाऽग्निर्भूतानान्देवा वा अभ्यातानानृताषाड्राष्ट्रकामाय देविका वास्तोष्पते त्वमग्ने बृहदेकादश ॥ ११ ॥ वि वा एतस्येत्याह मृत्युर्गन्धर्वोऽव रुन्धे मह्यचतस्त्वमग्ने बृहथ्षट्चत्वारिꣳशत् ॥ ४६ ॥ वि वा एतस्य प्रियासः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां तृतीयकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ तृतीयकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यान्देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम् । यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीरम् । निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती । सहस्रपोषꣳ सुभगा रराणा सा न आ गन्वर्चसा ॥ १ ॥ संविदाना । अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् । माध्यꣳ हि पौर्णमासञ्जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथाऽस्मभ्यꣳ सहवीराꣳ रयिन्नि यच्छतम् । आदित्याश्चाऽङ्गिरसश्चाऽग्नीनाऽदधत ते दर्शपूर्णमासौ प्रैप्सन्तेषामङ्गिरसान्निरुप्तꣳ हविरासीदथाऽऽदित्या एतौ होमावपश्यन्तावजुहवुस्ततो वै ते दर्शपूर्णमासौ ॥ २ ॥ पूर्व आऽलभन्त दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुयात्साक्षादेव दर्शपूर्णमासावा लभते ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावा लभेत य एनयोरनुलोमञ्च प्रतिलोमञ्च विद्यादित्यमावास्याया ऊर्ध्वन्तदनुलोमं पौर्णमास्यै प्रतीचीनन्तत्प्रतिलोमय्यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावा लभेताऽमुमपक्षीयमाणमन्वप ॥ ३ ॥ क्षीयेत सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्यां वै सरस्वत्यनुलोममेवैनावा लभतेऽमुमाप्यायमानमन्वा प्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेथ्सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालय्यदाग्नेयो भवत्य-ग्निर्वै यज्ञमुखय्यँज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवाऽऽरभ्य प्र तनुते सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासस्सरस्वान्तावेव साक्षादा रभत ऋद्ध्नोत्याभ्यान्द्वादशकपालस्सरस्वते भवति मिथुनत्वाय प्रजात्यै मिथुनौ गावौ दक्षिणा समृद्ध्यै ॥ ४ ॥ वर्चसा वै ते दर्शपूर्णमासावप तनुते सरस्वत्यै पञ्चविꣳशतिश्च ॥ १ ॥

ऋषयो वा इन्द्रं प्रत्यक्षन्नाऽपश्यन्तव्वसिष्ठः प्रत्यक्षमपश्यथ्सोऽब्रवीद्ब्राह्मणन्ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति तस्मा एतान्थ्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राऽजायन्त तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते रश्मिरसि क्षयाय त्वा क्षयञ्जिन्वे- ॥ ५ ॥ त्याह देवा वै क्षयो देवेभ्य एव यज्ञं प्राऽऽह प्रेतिरसि धर्माय त्वा धर्मञ्जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राऽऽहाऽन्वितिरसि दिवे त्वा दिवञ्जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राऽऽह विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिञ्जिन्वेत्याह वृष्टिमेवाऽव

॥ ६ ॥ रुन्धे प्रवाऽस्यनुवाऽसीत्याह मिथुनत्वायोशिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाऽष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राऽऽहौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेत्याह देवानेव पितॄननु सन्तनोति तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वे- ॥ ७ ॥ त्याह पितॄनेव प्रजा अनु सन्तनोति पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेत्याह प्रजा एव पशूननु सन्तनोति रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून्प्रति ष्ठापयत्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं-ञ्जिन्वेत्याहाऽभिजित्या अधिपतिरसि प्राणाय त्वा प्राण- ॥ ८ ॥ ञ्जिन्वेत्याह प्रजास्वेव प्राणान्द-धाति त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय सꣳरोहोऽसि नीरोहोऽसीत्याह प्रजात्यै वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्याह प्रतिष्ठित्यै ॥ ९ ॥ जिन्वेत्यव प्रजा जिन्व प्राणन्त्रिꣳशच्च ॥ २ ॥

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्का-रेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽ-स्मान्द्वेष्टि यञ्च वयन्द्विष्मो विष्णोः क्रमेणाऽत्येनान्क्रामामीन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण ॥ १० ॥ सहजान् विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणाऽपरजानिन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति । यत्ते अग्ने तेजस्तेनाऽहन्तेजस्वी भूयासय्यँत्ते अग्ने वर्चस्तेनाऽहँव्वर्चस्वी भूयासय्यँत्ते अग्ने हरस्तेनाऽहꣳ हरस्वी भूयासम् ॥ ११ ॥ बृहता साम्ना वषट्कारेण वज्रेण षट्चत्वारिꣳशच्च ॥ ३ ॥

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकङ्गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः । ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीस्सवित- ॥ १२ ॥ देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि । ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः । तेनाऽग्ने त्वमुत वर्द्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आ धेह्येनम् । यज्ञहनो वै देवा यज्ञमुषः ॥ १३ ॥ स्सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य । ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहस्सपशुस्सुवर्गँल्लोकमेत्यप वै सोमेनेजा-नाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयन्निर्वपेदग्निस्सर्वा देवताः ॥ १४ ॥ पाङ्क्तो यज्ञो देवताश्चैव यज्ञञ्चाऽव रुन्धे गायत्रो वा अग्निर्गायत्रछन्दास्तञ्छन्दसा व्यर्द्धयति यत्पञ्चकपालङ्क-रोत्यष्टाकपालः कार्योऽष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रछन्दास्स्वेनैवैनन्छन्दसा समर्द्धयति पङ्क्त्यौ

याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति ॥ १५ ॥ सवितर्देवा यज्ञमुखस्सर्वा देवतास्त्रिचत्वारिंशच्च ॥ ४ ॥

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः । सक्ष शूष सवितर्विश्वचर्षण एतेभिस्सोम नामभिर्विधेम ते तेभिस्सोम नामभिर्विधेम ते । अहं परस्तादहमवस्तादहञ्ज्योतिषा वि तमो ववार । यदन्तरिक्षन्तदु मे पिताऽभूदहꣳ सूर्यमुभयतो ददर्शाऽहं भूयासमुत्तमस्समानाना- ॥ १६ ॥ मा समुद्रादाऽन्तरिक्षात्प्रजापतिरुदधिञ्च्यावयातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्धीदन्दिव्यन्नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् । पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याऽग्नावादित्यञ्जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून् ॥ १७ ॥ प्रति ष्ठापयति कविर्यज्ञस्य वि तनोति पन्थान्नाकस्य पृष्ठे अधि रोचने दिवः । येन हव्यँव्वहसि यासि दूत इतः प्रचेता अमुतस्सनीयान् । यास्ते विश्वास्समिधस्सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः । तास्ते गच्छन्त्वाहुतिङ्घृतस्य देवायते यजमानाय शर्म । आशासानस्सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यँय्यजमानाय तिष्ठ ॥ १८ ॥ समानानामोषधीष्वेव पशून्मह्यँय्यजमानायैकञ्च ॥ ५ ॥

सन्त्वा नह्यामि पयसा घृतेन सन्त्वा नह्याम्यप ओषधीभिः । सन्त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता सनवो वाजमस्मे । प्रैतु ब्रह्मणस्पत्नी वेदिँव्वर्णेन सीदतु । अथाऽहमनुकामिनी स्वे लोके विशा इह । सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इमँव्वि ष्यामि वरुणस्य पाश- ॥ १९ ॥ य्यमबद्ध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि । प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रन्नयत्वदितिर्मद्ध्यन्ददताꣳ रुद्रावसृष्टाऽसि युवा नाम मा मा हिꣳसीर्वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीस्सादयामि विश्वस्य ते विश्वावतो वृष्णियावत- ॥ २० ॥ स्तवाऽग्ने वामीरनु सन्दृशि विश्वा रेताꣳसि धिषीयाऽगन्देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्थ्सुन्वति यजमान आशिषस्स्वाहाकृतास्समुद्रेष्ठा गन्धर्वमा तिष्ठताऽनु । वातस्य पत्मन्निड ईडिताः ॥ २१ ॥ पाशँव्वृष्णियावतस्त्रिꣳशच्च ॥ ६ ॥

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः पराऽपतथ्स पृथिवीं प्राऽविशथ्स खदिरोऽभवद्यस्य खादिरस्स्रुवो भवति छन्दसामेव रसेनाऽव द्यति सरसा अस्याऽऽहुतयो भवन्ति तृतीयस्यामितो दिवि सोम आसीत्तङ्गायत्र्याऽहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वँय्यस्य पर्णमयी जुहू- ॥ २२ ॥ र्भवति सौम्या अस्याऽऽहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीर्देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाऽशृणोथ्सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति ब्रह्म वै पर्णो विण्मरुतोऽन्नँव्विण्मारुतोऽश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्म-

णैवान्नमव रुन्धेऽथो ब्रह्मै- ॥ २३ ॥ व विश्यद्धचूहति राष्ट्रव्वै पर्णो विडश्वत्थो यत्पर्णमयी जुहूर्भव-त्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यद्धचूहति प्रजापतिर्वा अजुहोत्सा यत्राऽऽहुतिः प्रत्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत यस्य वैकङ्कती ध्रुवा भवति प्रत्येवाऽस्याऽऽहुतयस्तिष्ठन्त्यथो प्रैव जायत एतद्वै स्रुचाꣳ रूपय्यँस्यैवꣳ रूपास्स्रुचो भवन्ति सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्ते नाऽस्याऽपरूपमात्मञ्जायते ॥ २४ ॥ जुहूरथो ब्रह्म स्रुचाꣳ सप्तदश च ॥ ७ ॥

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तङ्गृह्णामि दक्षाय दक्षवृधे रातन्देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यो दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वाऽपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तञ्जहि प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तञ्जुहोमि ॥ २५ ॥ ओषधीभ्यश्चतुर्दश च ॥ ८ ॥

याव्वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आ वृश्च्येते प्राजापत्यन्दधिग्रहङ्गृह्णीयात्प्रजापतिस्सर्वा देवता देवताभ्य एव नि ह्नुवाते ज्येष्ठो वा एष ग्रहाणाय्यँस्यैष गृह्यते ज्यैष्ठ्यमेव गच्छति सर्वासाव्वा एतद्देवतानाꣳ रूपय्यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्त उपयामगृहीतो- ॥ २६ ॥ ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तङ्गृह्णामीत्याह ज्योतिरेवैनꣳ समानानाङ्करोत्यग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्यपेन्द्र द्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै प्राणाय त्वाऽपानाय त्वेत्याह प्राणानेव यजमाने दधाति तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तञ्जुहोमी- ॥ २७ ॥ त्याह प्रजापतिस्सर्वा देवतास्सर्वाभ्य एवैनन्देवताभ्यो जुहोत्याज्यग्रहङ्गृह्णीयात्तेजस्कामस्य तेजो वा आज्यन्तेजस्व्येव भवति सोमग्रहङ्गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसव्वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहङ्गृह्णीयात्पशुकामस्योग्वै दध्यूर्क्पशव ऊर्जैवाऽस्मा ऊर्जं पशूनव रुन्धे ॥ २८ ॥ उपयामगृहीतो जुहोमि त्रिचत्वारिꣳशच्च ॥ ९ ॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः । स्वादोस्स्वादीयस्स्वादुना सृजा समत ऊ षु मधु मधुनाऽभि योधि । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिः प्रजापतये त्वा । प्राणग्रहान्गृह्णात्येतावद्वा अस्ति यावदेते ग्रहास्स्तोमाश्छन्दाꣳसि पृष्ठानि दिशो यावदेवाऽस्ति त- ॥ २९ ॥ दव रुन्धे ज्येष्ठा वा एतान्ब्राह्मणाः पुरा विदामक्रन्तस्मात्तेषाꣳ सर्वा दिशोऽभिजिता अभूवन् यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्च गृह्यन्ते पञ्च दिशस्सर्वास्वेव दिक्ष्वृध्नुवन्ति नवनव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति

प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः ॥ ३० ॥ प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति दशमेऽहन्गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत्प्रजा यन्ति यद्वामदेव्यँय्योनेश्च्यवते दशमेऽहन्वामदेव्य-य्योनेश्च्यवते यद्दशमेऽहन्गृह्यन्ते प्राणेभ्य एव तत्प्रजा न यन्ति ॥ ३१ ॥ तत्प्राणग्रहास्सप्तत्रिꣳशच्च ॥१०॥

प्र देवन्देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् । अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते । रथो न योरभीवृतो घृणीवाञ्चेतति त्मना । अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चित्सहीयान्देवो जीवातवे कृतः । इडायास्त्वा पदे वयन्नाभा पृथिव्या अधि । जातवेदो नि धीमह्यग्ने हव्याय वोढवे । ॥ ३२ ॥ अग्ने विश्वेभिस्स्वनीक देवैरूर्णावन्तं प्रथमस्सीद योनिम् । कुलायिनङ्घृतवन्तꣳ सवित्रे यज्ञन्नय यजमानाय साधु । सीद होतस्स्व उ लोके चिकित्वान्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः । नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदथ्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रम्भरश्शुचिजिह्वो अग्निः । त्वन्दूतस्त्व- ॥ ३३ ॥ मु नः परस्पास्त्वँव्वस्य आ वृषभ प्रणेता । अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः । अभि त्वा देव सवितरीशानँव्वार्याणाम् । सदाऽवन्भागमीमहे । मही द्यौः पृथिवी च न इमँय्यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । तमु ॥ ३४ ॥ त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणेरणे । उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि । धनञ्जयो रणेरणे । आ यꣳ हस्ते न खादिनꣳ शिशुञ्जातन्न बिभ्रति । विशामग्निꣳ स्वध्वरम् । प्र देवन्देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु । आ ॥ ३५ ॥ जातञ्जातवेदसि प्रियꣳ शिशीताऽतिथिम् । स्योन आ गृहपतिम् । अग्निनाऽग्निस्समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्थ्सता । सखा सख्या समिध्यसे । तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् । यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानस्सचन्ते यत्र पूर्वे साध्यास्सन्ति देवाः ॥ ३६ ॥ वोढवे दूतस्त्वन्तमु सीदत्वा यत्र चत्वारि च ॥ ११ ॥

पूर्णर्षयोऽग्निना ये देवास्सूर्यो मा सन्त्वा नह्यामि वषट्कारस्स खदिर उपयामगृहीतोऽसि यान्वै त्वे क्रतुं प्र देवमेकादश ॥ ११ ॥ पूर्णा सहजान्तवाऽग्ने प्राणैरेव षट्त्रिꣳशत् ॥ ३६ ॥ पूर्णा सन्ति देवाः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां तृतीयकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥

॥ इति तृतीयं काण्डम् ॥

## ॥ तृतीयकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ४२ | २२४८ |
| २ | ११ | ४६ | २३३५ |
| ३ | ११ | ३६ | १८५७ |
| ४ | ११ | ४६ | २३९२ |
| ५ | ११ | ३६ | १७९० |

## ॥ संहतसङ्ख्या ॥

| | | | |
|---|---|---|---|
| ५ | ५५ | २०६ | १०६२२ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ चतुर्थं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याऽभरत् । युक्त्वाय मनसा देवान्थ्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतस्सविता प्र सुवाति तान् । युक्तेन मनसा वयन्देवस्य सवितुस्सवे । सुवर्गेयाय शक्त्यै । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इ- ॥ १ ॥ न्मही देवस्य सवितुः परिष्टुतिः । युजे वां ब्रह्म पूर्व्यन्नमोभिर्वि श्लोका यन्ति पत्थ्येव सूराः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः । यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाꣳसि देवस्सविता महित्वना । देव सवितः प्र सुव यज्ञं प्र सुव ॥ २ ॥ यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतन्नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः । इमन्नो देव सवित-र्यज्ञं प्र सुव देवायुवꣳ सखिविदꣳ सत्राजितन्धनजितꣳ सुवर्जितम् । ऋचा स्तोमꣳ समर्धय गाय-त्रेण रथन्तरम् । बृहद्गायत्रवर्तनि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारि-॥ ३ ॥ रसि पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर त्रैष्टु-भेन त्वा छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसाऽऽददेऽङ्गिरस्वद्धस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् । तया ज्योतिरजस्रमिदग्निं खात्वी न आ भराऽऽनुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत् ॥ ४ ॥ इद्यज्ञं प्र सुव नारिरानुष्टुभेन त्वा छन्दसा त्रीणि च ॥ १ ॥

इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवास्सुतमा बभूवुरृतस्य सामन्थ्सरमारपन्ती । प्रतूर्तँव्वाजिन्ना द्रव वरिष्ठामनु सँव्वतम् । दिवि ते जन्म परममन्तरिक्षे ना-भिः पृथिव्यामधि योनिः । युञ्जाथाꣳ रासभय्युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् । योगेयोगे तवस्तरँव्वाजेवाजे हवामहे । सखाय इन्द्रमूतये । प्रतूर्व-॥ ५ ॥ न्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि । उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन् । पूष्णा सयुजा सह । पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेह्यग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरि-

ष्यामोऽग्निं पुरीष्यमङ्गिरस्वद्भरामः । अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य ॥ ६ ॥ पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान । आगत्य वाज्यध्वनस्सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते । आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनाम तव्वँयम् । द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रस्ते योनिः । विख्याय चक्षुषा त्वमभि तिष्ठ ॥ ७ ॥ पृतन्यतः । उत्क्राम महते सौभगायाऽस्मादास्थानाद्द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निङ्खनिष्यन्त उपस्थे अस्याः । उदक्रमीद्द्रविणोदा वाज्यर्वाऽकस्स लोकꣳ सुकृतं पृथिव्याः । ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे । अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाꣳ स्थानादुज्जिहतामोषधयस्सुपिप्पलाः । जिघर्म्य- ॥ ८ ॥ ग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा । पृथुन्तिरश्चा वयसा बृहन्तँव्व्यचिष्ठमन्नꣳ रभसव्ँविदानम् । आ त्वा जिघर्मि वचसा घृतेनाऽरक्षसा मनसा तज्जुषस्व । मर्यश्रीस्स्पृहयद्वर्णो अग्निर्नाऽभिमृशे तनुवा जर्हृषाणः । परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे । परि त्वाऽग्ने पुरव्ँवयव्ँविप्रꣳ सहस्य धीमहि । धृषद्वर्णन्दिवेदिवे भेत्तारं भङ्गुरावतः । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वव्ँवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे शुचिः ॥ ९ ॥ प्रतूर्वन्थ्सूर्यस्य तिष्ठ जिघर्मि भेत्तारव्ँविꣳशतिश्च ॥ २ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्यास्सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि । ज्योतिष्मन्तन्त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् । शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्यास्सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि । अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् । वर्द्धमानं मह आ च पुष्करन्दिवो मात्रया वरिणा प्रथस्व । शर्म च स्थो ॥ १० ॥ वर्म च स्थो अच्छिद्रे बहुले उभे । व्यचस्वती सव्ँवसाथां भर्तमग्निं पुरीष्यम् । सव्ँवसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् । पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । तमु त्वा दध्यङ्ङृषिः पुत्र ईधे ॥ ११ ॥ अथर्वणः । वृत्रहणं पुरन्दरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणेरणे । सीद होतस्स्व उ लोके चिकित्वान्थ्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः । नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदथ्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रम्भरश्शुचिजिह्वो अग्निः । सꣳ सीदस्व महाꣳ असि शोचस्व ॥ १२ ॥ देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् । जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु । दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥ १३ ॥ स्थ ईधे शोचस्व सप्तविꣳशतिश्च ॥ ३ ॥

सन्ते वायुर्मातरिश्वा दधातूत्तानायै हृदयय्यद्विलिष्टम् । देवानाय्यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम् । सुजातो ज्योतिषा सह शर्म वरूथमाऽसदस्सुवः । वासो अग्ने विश्वरूपᳪ सव्व्ययस्व विभावसो । उदु तिष्ठ स्वद्ध्वराऽवा नो देव्या कृपा । दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः । ॥ १४ ॥ ऊर्द्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्द्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे । स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रश्शिशुः परि तमाᳪस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः । स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्न् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः । शिवो भव ॥ १५ ॥ प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीन् । प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा । रासभो वाङ्कनिक्रदथ्सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः । वृषाऽग्निव्वृषणं भरन्नपाङ्गर्भᳪ समुद्रियम् । अग्न आ याहि ॥ १६ ॥ वीतय ऋतᳪ सत्यम् । ओषधयः प्रति गृह्णीताऽग्निमेतᳪ शिवमायन्तमभ्यत्र युष्मान् । व्यस्यन्विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिᳪ हनत् । ओषधयः प्रति मोदद्ध्वमेनं पुष्पावतीस्सुपिप्पलाः । अयव्वो गर्भ ऋत्वियः प्रत्नᳪ सधस्थमाऽसदत् ॥ १७ ॥ सुशस्तिभिश्शिवो भव याहि षट्त्रिᳪशच्च ॥ ४ ॥

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः । सुशर्मणो बृहतश्शर्मणि स्यामग्नेरहᳪ सुहवस्य प्रणीतौ । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । मित्र-॥ १८ ॥ स्सᳪसृज्य पृथिवीं भूमिञ्च ज्योतिषा सह । सुजातञ्जातवेदसमग्निव्वैश्वानरव्विभुम् । अयक्ष्माय त्वा सᳪ सृजामि प्रजाभ्यः । विश्वे त्वा देवा वैश्वानरास्सᳪ सृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् । रुद्रास्सम्भृत्य पृथिवीं बृहज्ज्योतिस्समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते । सᳪसृष्टाव्वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीङ्कृत्वा सिनीवाली करोतु ॥ १९ ॥ ताम् । सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखान्दधातु हस्तयोः । उखाङ्करोतु शक्त्या बाहुभ्यामदितिर्द्धिया । माता पुत्रय्यथोपस्थे साऽग्निं बिभर्तु गर्भ आ । मखस्य शिरोऽसि यज्ञस्य पदे स्थः । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्पृथिव्यसि रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमस्या-॥ २० ॥ दित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद्द्यौरसि विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवाऽसि धारया मयि प्रजाᳪ रायस्पोषङ्गौपत्यᳪ सुवीर्यᳪ सजातान् यजमानायाऽदित्यै रास्नाऽस्यदितिस्ते बिलङ्गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत् । कृत्वाय सा महीमुखां मृन्मयीय्योनिमग्नयै । तां पुत्रेभ्यस्सं प्राऽयच्छददितिश्श्रपयानिति ॥ २१ ॥ मित्रः करोत्वन्तरिक्षमसि प्र चत्वारि च ॥ ५ ॥

वस॑वस्त्वा धूपयन्तु गाय॒त्रेण॒ छन्द॑साऽङ्गिर॒स्वद्रु॒द्रास्त्वा॑ धूपयन्तु॒ त्रैष्टु॑भेन॒ छन्द॑साऽङ्गिर॒स्व-दा॑दि॒त्यास्त्वा॑ धूपयन्तु॒ जाग॑तेन॒ छन्द॑साऽङ्गिर॒स्वद्विश्वे॑ त्वा दे॒वा वै॑श्वान॒रा धू॑पय॒न्त्वानु॑ष्टुभेन॒ छन्द॑-साऽङ्गिर॒स्वदिन्द्र॑स्त्वा धूपयत्वङ्गि॒र॒स्वद्विष्णु॑स्त्वा धूपयत्वङ्गि॒र॒स्वद्वरु॑णस्त्वा धूपयत्वङ्गि॒र॒स्वददि॑ति-स्त्वा दे॒वी वि॒श्वदे॑व्यावती पृथि॒व्यास्स॒धस्थे॑ऽङ्गि॒र॒स्वत्ख॑नत्ववट दे॒वाना॑न्त्वा॒ पत्नी॑- ॥ २२ ॥ दे॒वी-र्वि॒श्वदे॑व्यावतीः पृथि॒व्यास्स॒धस्थे॑ऽङ्गि॒र॒स्वद्द॑धतूखे धि॒षणा॑स्त्वा दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्यास्स॒ध-स्थे॑ऽङ्गि॒र॒स्वद॒भीन्ध॑तामुखे॒ ग्नास्त्वा॑ दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्यास्स॒धस्थे॑ऽङ्गि॒र॒स्वच्छ्रू॑पयन्तूखे॒ वरू॑-त्रयो॒ जन॑यस्त्वा दे॒वीर्वि॒श्वदे॑व्यावतीः पृथि॒व्यास्स॒धस्थे॑ऽङ्गि॒र॒स्वत्प॑चन्तूखे । मित्रै॒तामु॒खां प॑चै॒षा मा भे॑दि । ए॒तान्ते॒ परि॑ ददा॒म्यभि॑त्त्यै । अ॒भीमां ॥ २३ ॥ म॑हि॒ना दिवं॑ मि॒त्रो ब॑भूव स॒प्रथाः॑ । उ॒त श्रव॑-सा पृथि॒वीम् । मि॒त्रस्य॑ चर्॒षणी॒धृत॒श्श्रवो॑ दे॒वस्य॑ सान॒सिम् । द्यु॒म्नञ्चि॒त्रश्र॑वस्तमम् । दे॒वस्त्वा॑ सवि॒-तोद्व॑पतु सुपा॒णिस्स्व॑ङ्गु॒रिः । सु॒बा॒हुरु॒त शक्त्या॑ । अप॑द्यमाना पृथि॒व्याशा॒ दिश॒ आ पृ॑ण । उत्ति॑ष्ठ बृ॒हती भ॑वो॒दू॒र्ध्वा ति॑ष्ठ ध्रु॒वा त्वम् । वस॑वस्त्वाऽऽ च्छृ॑न्दन्तु गाय॒त्रेण॒ छन्द॑साऽङ्गिर॒स्वद्रु॒द्रास्त्वाऽऽ च्छृ॑न्द-न्तु त्रैष्टु॑भेन॒ छन्द॑साऽङ्गिर॒स्वदा॑दि॒त्यास्त्वाऽऽ च्छृ॑न्दन्तु जाग॑तेन॒ छन्द॑साऽङ्गिर॒स्वद्विश्वे॑ त्वा दे॒वा वै॑श्वान॒रा आ च्छृ॑न्द॒न्त्वानु॑ष्टुभेन॒ छन्द॑साऽङ्गि॒र॒स्वत् ॥ २४ ॥ पत्नी॑रि॒माꣳ रु॒द्रास्त्वाऽऽ च्छृ॑न्द॒न्त्वेका॑न्न वि॒ꣳश॒तिश्च॑ ॥ ६ ॥

समा॑स्त्वाऽग्न ऋ॒तवो॑ वर्द्धयन्तु सँव्व॑थ्स॒रा ऋष॑यो॒ यानि॑ स॒त्या । सन्दि॒व्येन॑ दीदिहि रोच॒नेन॒ विश्वा॒ आ भा॑हि प्र॒दिशः॑ पृथि॒व्याः । सश्चे॒द्ध्यस्वा॑ऽग्ने॒ प्र च॑ बोधयैनमुच्च॑ तिष्ठ मह॒ते सौभ॑गाय । मा च॑ रिषदुपस॒त्ता ते॑ अग्ने ब्र॒ह्माण॑स्ते य॒शस॑स्सन्तु॒ माऽन्ये । त्वाम॑ग्ने वृणते ब्राह्म॒णा इ॒मे शि॒वो अ॑ग्ने ॥ २५ ॥ स॒ँव्वर॑णे भवा नः । स॒पत्न॒हा नो॑ अभिमाति॒जिच्च स्वे गये॑ जागृह्य॒प्रयु॑च्छन्न् । इ॒हैवाऽग्ने॒ अधि॑ धारया र॒यिं मा त्वा॒ नि क्र॒न्पूर्व॒चितो॑ निका॒रिणः॑ । ख्ष॒त्रम॑ग्ने सु॒यम॑मस्तु॒ तुभ्य॑मुपस॒त्ता व॑र्द्धतान्ते॒ अनि॑ष्टृतः । ख्ष॒त्रेणा॑ऽग्ने॒ स्वायु॒स्सꣳ र॑भस्व मि॒त्रेणा॑ऽग्ने मि॒त्रधे॑ये यतस्व । स॒जा॒ताना॑ मद्ध्यमस्था ए॑धि॒ राज्ञा॑मग्ने विह॒व्यो॑ दीदिही॒ह । अति॒ ॥ २६ ॥ निहो॒ अति॒ स्रिधो॒ऽत्यचि॑त्ति॒मत्यरा॑तिमग्ने । विश्वा॒ ह्य॑ग्ने दुरि॒ता सह॒स्वाऽथाऽस्मभ्यꣳ॑ स॒हवी॑राꣳ र॒यिन्दाः॑ । अ॒ना॒धृ॒ष्यो जा॒तवे॑दा॒ अनि॑ष्टृतो वि॒राड॑ग्ने ख्षत्र॒भृद्दी॑दिही॒ह । विश्वा॒ आशाः॑ प्रमु॒ञ्चन्मानु॑षीर्भि॒यश्शि॒वाभि॑र॒द्य परि॑ पाहि नो वृधे । बृह॑स्पते सवितर्बो॒धयै॑न॒ꣳ सꣳशि॑तञ्चिथ्सन्त॒राꣳ सꣳ शि॑शाधि । व॒र्द्धयै॑नं मह॒ते सौभ॑गाय॒ ॥ २७ ॥ विश्वे॑ ए॒नमनु॑ मदन्तु दे॒वाः । अ॒मु॒त्र॒भूया॑दध॒ यद्य॒मस्य॒ बृह॑स्पते अ॒भिश॑स्ते॒रमु॑ञ्चः । प्रत्यौ॑हतामश्विना॑ मृ॒त्युम॑स्माद्दे॒वाना॑मग्ने भि॒षजा॒ शची॑भिः । उद्व॒यन्त॑म॒सस्परि॒ पश्य॑न्तो॒ ज्योति॒रुत्त॑रम् । दे॒वन्दे॑व॒त्रा सूर्य॑मग॒न्म॒ ज्योति॑रुत्त॒मम् ॥ २८ ॥ इ॒मे शि॒वो अ॑ग्ने॒ऽति सौभ॑गाय॒ चतु॑स्त्रिꣳशच्च ॥ ७ ॥

ऊ॒र्द्ध्वा अ॑स्य स॒मिधो॑ भवन्त्यू॒र्द्ध्वा शु॒क्रा शो॒चीꣳष्य॒ग्नेः । द्यु॒मत्त॑मा सु॒प्रती॑कस्य सू॒नोः ।

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथ आऽनक्ति मद्ध्वा घृतेन । मद्ध्वा यज्ञन्नख्षसे प्रीणा-
नो नराशꣳसो अग्ने । सुकृद्देवस्सविता विश्ववारः । अच्छाऽयमेति शवसा घृतेनेडानो वह्निर्नमसा ।
अग्निꣳ स्रुचो अद्ध्वरेषु प्रयथ्सु । स यख्षदस्य महिमानमग्नेस्स ॥ २९ ॥ ई मन्द्रासु प्रयसः । वसु-
श्चेतिष्ठो वसुधातमश्च । द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः । ते
अस्य योषणे दिव्ये न योना उषासानक्ता । इमय्ँयज्ञमवतामद्ध्वरन्नः । दैव्या होतारावूर्द्ध्वमद्ध्वरन्नो-
ऽग्नेर्जिह्वामभि गृणीतम् । कृणुतन्नस्स्विष्टिम् । तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती ॥ ३० ॥
भारती । मही गृणाना । तन्नस्तुरीपमद्भुतं पुरुख्षु त्वष्टा सुवीरम् । रायस्पोषव्ँविष्यतु नाभिमस्मे ।
वनस्पतेऽव सृजा रराणस्त्मना देवेषु । अग्निर्हव्यꣳ शमिता सूदयाति । अग्ने स्वाहा कृणुहि जातवेद
इन्द्राय हव्यम् । विश्वे देवा हविरिदञ्जुषन्ताम् । हिरण्यगर्भस्समवर्तताऽग्रे भूतस्य जातः पतिरेक
आसीत् । स दाधार पृथिवीन्द्या-॥ ३१ ॥ मुतेमाङ्कस्मै देवाय हविषा विधेम । यः प्राणतो निमिषतो
महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम । य
आत्मदा बलदा यस्य विश्व उपासते प्रशिषय्ँयस्य देवाः । यस्य छायाऽमृतय्ँयस्य मृत्युः कस्मै देवाय
हविषा विधेम । यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहा- ॥ ३२ ॥ ऽऽहुः । यस्येमाः
प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम । यङ्क्रन्दसी अवसा तस्तभाने अभ्यैख्षेतां मनसा
रेजमाने । यत्राऽधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम । येन द्यौरुग्रा पृथिवी च दृढे येन
सुवस्स्तभितय्ँयेन नाकः । यो अन्तरिख्षे रजसो विमानः कस्मै देवाय हविषा विधेम । आपो ह
यन्महतीर्विश्व- ॥ ३३ ॥ मायन्दख्षन्दधाना जनयन्तीरग्निम् । ततो देवानान्निरवर्तताऽसुरेकः कस्मै
देवाय हविषा विधेम । यश्चिदापो महिना पर्यपश्यद्दख्षन्दधाना जनयन्तीरग्निम् । यो देवेष्वधि देव
एक आसीत्कस्मै देवाय हविषा विधेम ॥ ३४ ॥ अग्नेस्स सरस्वती द्याꣳ सह विश्वश्चतुस्त्रिꣳशच्च ॥ ८ ॥

ऊर्द्ध्वा यः प्राणतो य आत्मदा यस्येमे यङ्क्रन्दसी येन द्यौरापो ह यत्ततो देवानाय्ँयश्चिदापो यो देवेषु नव ॥

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ
स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा विश्वे
देवस्य नेतुर्मर्तो वृणीत सख्यव्ँविश्वे राय इषुद्ध्यसि द्युम्नव्ँवृणीत पुष्यसे स्वाहा मा सु भित्था मा सु
रिषो दृꣳहस्व वीडयस्व सु । अम्ब धृष्णु वीरयस्वा- ॥ ३५ ॥ ऽग्निश्चेदङ्करिष्यथः । दृꣳहस्व देवि
पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि । जुष्टन्देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे
अस्मिन् । मित्रैतामुखान्तपैषा मा भेदि । एतान्ते परि ददाम्यभित्त्यै । द्रवन्नस्सर्पिरासुतिः प्रत्नो होता
वरेण्यः । सहसस्पुत्रो अद्भुतः । परस्या अधि सव्ँवतोऽवराꣳ अभ्या ॥ ३६ ॥ तर । यत्राऽहमस्मि
ताꣳ अव । परमस्याः परावतो रोहिदश्व इहाऽऽगहि । पुरीष्यः पुरुप्रियोऽग्ने त्वन्तरा मृधः । सीद त्वं
मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ

शुक्रज्योतिर्वि भाहि । अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपञ्जातवेदश्शिवो भव । शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशस्सर्वास्स्वाँय्योनिमिहाऽऽसदः ॥ ३७ ॥ वीरयस्वाऽऽतपन्विꣳशतिश्च ॥ ९ ॥

यदग्ने यानि कानि चाऽऽ ते दारूणि दद्ध्मसि । तदस्तु तुभ्यमिद्घृतन्तज्जुषस्व यविष्ठ्य । यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वन्तदस्तु ते घृतन्तज्जुषस्व यविष्ठ्य । रात्रिꣳरात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम । नाभा ॥ ३८ ॥ पृथिव्यास्संमिधानमग्निꣳ रायस्पोषाय बृहते हवामहे । इरंमदं बृहदुक्थँय्यजत्रञ्जेतारमग्निं पृतनासु सासहिम् । यास्सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपि दधाम्यास्ये । दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराꣳ उत । हनूभ्याꣳ स्तेनान्भगवस्ताꣳस्त्वङ्खाद सुखादितान् । ये जनेषु मलिम्लवस्स्तेनासस्तस्करा वने । ये ॥ ३९ ॥ कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः । यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान्दिप्साच्च सर्वन्तं मस्मसा कुरु । सꣳशितं मे ब्रह्म सꣳशितँव्वीर्यं बलम् । सꣳशितङ्क्षत्रञ्जिष्णु यस्याऽहमस्मि पुरोहितः । उदेषां बाहू अतिरमुद्वर्च उदू बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि ॥ ४० ॥ स्वाꣳ अहम् । दृशानो रुक्म उर्व्या व्यद्यौदुर्मर्षमायुश्श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनन्द्यौरजनयथ्सुरेताः । विश्वा रूपाणि प्रति मुञ्चते कविः प्राऽसावीद्भद्रन्द्विपदे चतुष्पदे । वि नाकमख्यथ्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो ॥ ४१ ॥ अन्तर्वि भाति देवा अग्निन्धारयन्द्रविणोदाः । सुपर्णोऽसि गरुत्माꣳस्त्रिवृत्ते शिरो गायत्रञ्चक्षुस्स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छञ्छन्दाꣳस्यङ्गानि धिष्णियाश्शफा यजूꣳषि नाम । सुपर्णोऽसि गरुत्मान्दिवङ्गच्छ सुवः पत ॥ ४२ ॥ नाभा वने ये नयामि क्षामा रुक्मोऽष्टात्रिꣳशच्च ॥ १० ॥

अग्ने यँय्यज्ञमध्वरँव्विश्वतः परिभूरसि । स इद्देवेषु गच्छति । सोम यास्ते मयोभुव ऊतयस्सन्ति दाशुषे । ताभिर्नोऽविता भव । अग्निर्मूर्द्धा भुवः । त्वन्नस्सोम या ते धामानि । तथ्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता । ॥ ४३ ॥ देवेषु च सवितर्मानुषेषु च त्वन्नो अत्र सुवतादनागसः । चोदयित्री सूनृतानाञ्चेतन्ती सुमतीनाम् । यज्ञन्दधे सरस्वती । पावीरवी कन्या चित्रायुस्सरस्वती वीरपत्नी धियन्धात् । ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षङ्गृणते शर्म यꣳसत् । पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः । शुक्रन्ते अन्यद्यजतन्ते अन्य-॥ ४४ ॥ द्विषुरूपे अहनी द्यौरिवाऽसि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु । तेऽवर्द्धन्त स्वतवसो महित्वनाऽऽ

नार्कन्तस्थुरुरु चंक्रिरे सदः । विष्णुर्यद्धाऽऽवद्वृषणं मदच्युतँव्वयो न सींदन्नधिं बर्हिषिं प्रिये । प्र चित्रमर्कङ्गृणते तुराय मारुताय स्वतंवसे भरद्ध्वम् । ये सहाꣳसि सहसा सहन्ते ॥ ४५ ॥ रेजंते अग्ने पृथिवी मखेभ्यः । विश्वे देवा विश्वे देवाः । द्यावा नः पृथिवी इमꣳ सिद्ध्रमद्य दिविस्पृशम् । यज्ञन्देवेषु यच्छताम् । प्र पूर्व्वजे पितरा नव्यंसीभिर्गीर्भिः कृणुद्ध्वꣳ सदने ऋतस्यं । आ नों द्यावापृथिवी दैव्येन जनेन यातं महिं वाँव्वरूथम् । अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् । स हव्यवाडमर्त्य उशिग्दूतश्चनोंहितः । अग्निर्द्धिया समृण्वति । शन्नों भवन्तु वाजेवाजे ॥ ४६ ॥ पुरुषत्वतां यजतन्ते अन्यथ्सहन्ते चनोंहितोऽष्टौ च ॥ ११ ॥

युञ्जान इमामंगृभ्णन्देवस्य सन्ते वि पाजसा वसवस्त्वा समास्त्वोद्र्ध्वा अस्याकूतिर्य्यदग्ने यान्यग्ने यय्यँज्ञमेकादश ॥ ११ ॥ युञ्जानो वर्म च स्थ आदित्यास्त्वा भारती स्वाꣳ अहꣳ षट्चत्वारिꣳशत् ॥ ४६ ॥ युञ्जानो वाजेवाजे ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-ब्राह्मणे

## ॥ चतुर्थकाण्डे द्वितीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

विष्णोः क्रमोंऽस्यभिमातिहा गायत्रञ्छन्द आ रोंह पृथिवीमनु वि क्रंमस्व निर्भंक्तस्स यन्द्विष्मो विष्णोः क्रमोंऽस्यभिशस्तिहा त्रैष्टुभञ्छन्द आ रोंहाऽन्तरिक्षमनु वि क्रंमस्व निर्भंक्तस्स यन्द्विष्मो विष्णोः क्रमोंऽस्यरातीयतो हन्ता जागतञ्छन्द आ रोंह दिवमनु वि क्रंमस्व निर्भंक्तस्स यन्द्विष्मो विष्णोः ॥ १ ॥ क्रमोंऽसि शत्रूयतो हन्ताऽऽनुष्टुभञ्छन्द आ रोंह दिशोऽनु वि क्रंमस्व निर्भंक्तस्स यन्द्विष्मः । अक्रन्ददग्निस्स्तनयंन्निव द्यौः क्षामा रेरिंहद्वीरुधस्समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदंसी भानुना भात्यन्तः । अग्नेऽभ्यावर्तिन्नभि न आ वंर्तस्वाऽऽयुंषा वर्चसा सन्या मेधया प्रजया धनेन । अग्ने ॥ २ ॥ अङ्गिरश्शतन्ते सन्त्वावृतस्सहस्रन्त उपावृतः । तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि । पुनरूर्जा नि वंर्तस्व पुनरग्न इषाऽऽयुंषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वंर्तस्वाऽग्ने पिन्वंस्व धारंया । विश्वप्स्निया विश्वतस्परि । उदु-

त्तमँव्वरुण पाशमस्मदवाऽधम- ॥ ३ ॥ व्वि मद्ध्यमँ श्रथाय । अथा वयमादित्य व्रते तवाऽना-
गसो अदितये स्याम । आ त्वाऽहार्षमन्तरभूर्द्ध्रुवस्तिष्ठाऽविचाचलिः । विशस्त्वा सर्वा वाञ्छन्त्व-
स्मिन्राष्ट्रमधि श्रय । अग्ने बृहन्नुषसामूर्द्ध्वो अस्थान्निर्जग्मिवान्तमसो ज्योतिषाऽऽगात् । अग्निर्भा-
नुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः । सीद त्वं मातुरस्या ॥ ४ ॥ उपस्थे विश्वान्यग्ने
वयुनानि विद्वान् । मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याँ शुक्रज्योतिर्वि भाहि । अन्तरग्ने
रुचा त्वमुखायै सदने स्वे । तस्यास्त्वँ हरसा तपञ्जातवेदश्शिवो भव । शिवो भूत्वा मह्यमग्नेऽथो
सीद शिवस्त्वम् । शिवाः कृत्वा दिशस्सर्वास्स्वाँय्योनिमिहाऽऽसदः । हँसश्शुचिषद्वसुरन्तरिख्ष-
सद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्
॥ ५ ॥ दिवमनु वि क्रमस्व निर्भक्तस्स यन्द्विष्मो विष्णोर्द्धनेनाग्नेऽधममस्याश्शुचिषथ्षोडश च ॥ १ ॥

दिवस्परि प्रथमञ्जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान
एनञ्जरते स्वाधीः । विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा । विद्मा ते नाम परमङ्गुहा
यद्विद्मा तमुथ्सँय्यतं आजगन्थ । समुद्रे त्वा नृमणा अफ्स्वन्तर्नृचख्षा ईधे दिवो अग्न ऊधन्न् । तृतीये
त्वा ॥ ६ ॥ रजसि तस्थिवाँसमृतस्य योनौ महिषा अहिन्वन्न् । अक्रन्ददग्निस्स्तनयन्निव द्यौः
ख्षामा रेरिहद्वीरुधस्समञ्जन्न् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः । उशि-
क्पावको अरतिस्सुमेधा मर्तेष्वग्निरमृतो नि धायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्या-
मिनख्षत् । विश्वस्य केतुर्भुवनस्य गर्भ आ ॥ ७ ॥ रोदसी अपृणाज्जायमानः । वीडुञ्चिदद्रिमभिन-
त्परायञ्जना यदग्निमयजन्त पञ्च । श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणस्सोमगोपाः ।
वसोस्सूनुस्सहसो अफ्सु राजा वि भात्यग्र उषसामिधानः । यस्ते अद्य कृणवद्भद्रशोचेऽपूपन्देव घृत-
वन्तमग्ने । प्र तन्नय प्रतराँव्वस्यो अच्छाऽभि द्युम्नन्देवभक्तँय्यविष्ठ । आ ॥ ८ ॥ तं भज सौश्रवसेष्वग्न
उक्थउक्थ आ भज शस्यमाने । प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः । त्वामग्ने
यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजङ्गोमन्तमुशिजो
वि वव्रुः । दृशानो रुक्म उर्व्या व्यद्यौदुर्मर्षमायुश्श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेन-
न्द्यौरजनयथ्सुरेताः ॥ ९ ॥ तृतीये त्वा गर्भ आ यविष्ठाऽऽ यच्चत्वारि च ॥ २ ॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतु-
ष्पदे । उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमस्सुप्रतीको विभावसुः । प्रेदग्ने
ज्योतिष्मान् याहि शिवेभिरर्चिभिस्त्वम् । बृहद्भिर्भानुभिर्भासन्मा हिँसीस्तनुवा प्रजाः । समिधा-
ऽग्निन्दुवस्यत घृतैर्बोधयताऽतिथिम् । आ- ॥ १० ॥ ऽस्मिन् हव्या जुहोतन । प्रप्राऽयमग्निर्भरतस्य
शृण्वे वि यथ्सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिश्शिवो नः ।

आपो देवीः प्रति गृह्णीत भस्मैतथ्स्योने कृणुदध्वꣳ सुरभावु लोके । तस्मै नमन्ताञ्जनयस्सुपत्नी-
मातेव पुत्रं बिभृता स्वेनम् । अफ्स्वग्ने सधिष्टव ॥ ११ ॥ सौषधीरनु रुद्ध्यसे । गर्भे सञ्जायसे पुनः ।
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याऽग्ने गर्भो अपामसि । प्रसद्य भस्मना
योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिस्त्वञ्ज्योतिष्मान्पुनराऽसदः । पुनरासद्य सदनमपश्च
पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः । पुनरूर्जा ॥ १२ ॥ नि वर्तस्व पुनरग्न
इषाऽऽयुषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वर्तस्वाऽग्ने पिन्वस्व धारया । विश्वफ्स्निया
विश्वतस्परि । पुनस्त्वाऽऽदित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वन्तनुवो
वर्द्धयस्व सत्यास्सन्तु यजमानस्य कामाः । बोधा नो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य
स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवँव्वन्दे अग्ने । स बोधि सूरिर्मघवा वसुदावा
वसुपतिः । युयोद्ध्यस्मद्द्वेषाꣳसि ॥ १३ ॥ आ तवोर्जाऽनु षोडश च ॥ ३ ॥

अपेत वीत वि च सर्पताऽतो येऽत्र स्थ पुराणा ये च नूतनाः । अदाद्दिदँय्यमोऽवसानं
पृथिव्या अक्रन्निमं पितरो लोकमस्मै । अग्नेर्भस्माँऽस्यग्नेः पुरीषमसि संज्ञानमसि कामधरणं मयि ते
कामधरणं भूयात् । सँय्या वः प्रियास्तनुवस्सं प्रिया हृदयानि वः । आत्मा वो अस्तु ॥ १४ ॥
संप्रियस्संप्रियास्तनुवो मम । अयꣳ सो अग्निर्यस्मिन्थ्सोममिन्द्रस्सुतन्दधे जठरे वावशानः ।
सहस्रियँव्वाजमत्यन्न सप्तिꣳ ससवान्थ्सन्थ्स्तूयसे जातवेदः । अग्ने दिवो अर्णमच्छा जिगास्यच्छा
देवाꣳ ऊचिषे धिष्णिया ये । याः परस्ताद्रोचने सूर्यस्य याश्चाऽवस्तादुपतिष्ठन्त आपः । अग्ने यत्ते
दिवि वर्चः पृथिव्याँय्यदोषधी- ॥ १५ ॥ ष्वफ्सु वा यजत्र । येनाऽन्तरिखमुर्वाततन्थ त्वेषस्स
भानुरर्णवो नृचखाः । पुरीष्यासो अग्नयः प्रावणेभिस्सजोषसः । जुषन्ताꣳ हव्यमाहुतमनमीवा इषो
महीः । इडामग्ने पुरुदꣳसꣳ सनिङ्गोश्शश्वत्तमꣳ हवमानाय साध । स्यान्नस्सूनुस्तनयो विजावाऽग्ने
सा ते सुमतिर्भूत्वस्मे । अयन्ते योनिरृत्वियो यतो जातो अरोचथाः । तञ्जान-॥ १६ ॥ न्नग्न आ
रोहाऽथा नो वर्द्धया रयिम् । चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद परिचिदसि तया देवतया-
ऽङ्गिरस्वद्ध्रुवा सीद लोकं पृण छिद्रं पृणाऽथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्
योनावसीषदन्न् । ता अस्य सूददोहसस्सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानाँव्विशस्त्रिष्वा रोचने
दिवः ॥ १७ ॥ अस्त्वोषधीषु जानन्नष्टाचत्वारिꣳशच्च ॥ ४ ॥

समितꣳ सङ्कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि सँव्वसानौ सँव्वां मना-
ꣳसि सँव्व्रता समु चित्तान्याऽकरम् । अग्ने पुरीष्याऽधिपा भवा त्वन्नः । इषमूर्जँय्यजमानाय धेहि ।
पुरीष्यस्त्वमग्ने रयिमान्पुष्टिमाꣳ असि । शिवाः कृत्वा दिशस्सर्वास्स्वाँय्योनिमिहाऽऽसदः ।
भवतन्नस्समनसौ समोकसा- ॥ १८ ॥ वरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिञ्जातवेदसौ शिवौ
भवतमद्य नः । मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा । तावँविश्वैर्देवैरृतुभि-

स्सवँ॒विदा॒नः प्र॒जाप॑तिर्वि॒श्वक॑र्मा॒ वि मु॑ञ्चतु । यद॒स्य पा॒रे रज॑सश्शु॒क्रञ्ज्योति॒रजा॑यत । तन्नः॑ पर्॒षद॒ति द्विषोऽग्ने॑ वैश्वानर॒ स्वाहा॑ । नम॒स्सु ते॑ निर्ऋते विश्वरूपे- ॥ १९ ॥ ऽयस्मय॒वँ॒वि चृ॑ता ब॒न्धमे॒तम् । य॒मेन॒ त्वय्यँ॒म्या॑ सवँ॒विदा॒नोत्त॒मन्नाक॒मधिं रोहये॒मम् । यत्ते॑ दे॒वी निर्ऋ॑तिराबब॒न्ध दाम॑ ग्री॒वास्व॑विच॒र्त्यम् । इ॒दन्ते॒ तद्वि ष्याम्यायु॑षो॒ न मद्ध्या॒दथा॑ जी॒वः पि॒तुम॑द्धि॒ प्रमु॑क्तः । यस्या॑स्ते अ॒स्याः क्रू॒र आ॒सञ्जु॒होम्ये॒षां ब॒न्धाना॑मव॒सर्ज॑नाय । भूमि॒रिति॑ त्वा॒ जना॑ वि॒दुर्निर्ऋ॑ति॒- ॥ २० ॥ रिति॑ त्वा॒ऽहं परि॑ वेद वि॒श्वतः॑ । असु॑न्वन्त॒मय॑जमानमिच्छ स्ते॒नस्ये॒त्यान्तस्क॑रस्या॒ऽन्वे॑षि । अ॒न्यम॒-स्मदि॑च्छ॒ सा त॑ इ॒त्या नमो॑ देवि निर्ऋते॒ तुभ्य॑मस्तु । दे॒वीम॒हन्निर्ऋ॑ति॒व्वँन्द॑मानः पि॒तेव॑ पु॒त्रन्द॑सये॒ वचो॑भिः । विश्व॑स्य॒ या जाय॑मानस्य॒ वेद॒ शिर॑श्शिरः॒ प्रति॑ सू॒री वि च॑ष्टे । नि॒वेश॑नस्स॒ङ्गम॑नो॒ वसू॑ना॒वँ॒विश्वा॑ रू॒पाऽभि च॑ष्टे॒ ॥ २१ ॥ शची॑भिः । दे॒व इ॑व सवि॒ता स॒त्यध॒र्मेन्द्रो॒ न त॑स्थौ सम॒रे प॑थी॒नाम् । सव्वँ॒रत्रा द॑धातन॒ निरा॑हा॒वान्कृ॑णोतन । सि॒ञ्चाम॑हा अव॒टमु॒द्रिण॒व्वँयवँ॒विश्वा॒ऽहाऽद॑-स्त॒मक्षि॑तम् । निष्कृ॑ताहाव॒मव॒टꣳ सु॑वर॒त्रꣳ सु॑षेच॒नम् । उ॒द्रिण॑ꣳ सिञ्चे॒ अक्षि॑तम् । सीरा॑ युञ्जन्ति क॒वयो॑ यु॒गा वि त॑न्वते॒ पृथ॑क् । धीरा॑ दे॒वेषु॑ सुम्न॒या । यु॒नक्त॒ सीरा॒ वि यु॒गा त॑नोत कृ॒ते योनौ॑ वपते॒ह ॥ २२ ॥ बीज॑म् । गि॒रा च॑ श्रु॒ष्टिस्सभ॑रा॒ अस॑न्नो॒ नेदी॑य॒ इथ्सृ॒ण्या॑ प॒क्वमाऽय॑त् । लाङ्ग॑लं॒ पवी॑रवꣳ सु॒शेव॑ꣳ सुम॒तिथ्स॑रु । उदित्कृ॑षति॒ गामविं॑ प्रफ॒र्व्यं॑ञ्च॒ पीव॑रीम् । प्र॒स्थाव॑द्रथ॒वाह॑नम् । शु॒नन्नः॒ फाला॒ वि तु॑दन्तु॒ भूमि॑ꣳ शु॒नङ्की॒नाशा॑ अ॒भि य॑न्तु वा॒हान् । शु॒नं प॒र्जन्यो॒ मधु॑ना॒ पयो॑भिश्शु॒ना॑सीरा शु॒नम॒स्मासु॑ धत्तम् । काम॑ङ्कामदुघे धुख्व मि॒त्राय॒ वरु॑णाय च । इन्द्रा॑या॒ऽग्नये॑ पू॒ष्ण ओष॑धीभ्यः प्र॒जाभ्यः॑ । घृ॒तेन॒ सीता॒ मधु॑ना॒ सम॑क्ता॒ विश्वै॑र्दे॒वैरनु॑मता म॒रुद्भिः॑ । ऊर्ज॑स्वती॒ पय॑सा॒ पिन्व॑माना॒ऽ-स्मान्थ्सी॑ते॒ पय॑सा॒ऽभ्याव॑वृथ्स्व ॥ २३ ॥ समो॑कसौ विश्वरूपे वि॒दुर्निर्ऋ॑तिर॒भि च॑ष्ट इ॒ह मि॒त्राय॒ द्वावि॑ꣳशतिश्च ॥ ५ ॥

या जा॒ता ओष॑धयो दे॒वेभ्य॑स्त्रियु॒गं पु॒रा । मन्दा॑मि ब॒भ्रूणा॑म॒हꣳ श॒तन्धामा॑नि स॒प्त च॑ । श॒तव्वो॑ अम्ब॒ धामा॑नि स॒हस्र॑मु॒त वो॒ रुहः॑ । अथा॑ शतक्रत्वो यू॒यमि॒मं मे॑ अग॒दङ्कृ॑त । पुष्पा॑वतीः प्र॒सू-व॑तीः फ॒लिनी॑रफ॒ला उ॒त । अश्वा॑ इव स॒जित्व॑रीर्वी॒रुधः॑ पारयि॒ष्णवः॑ । ओष॑धी॒रिति॑ मातर॒स्तद्वो॑ देवी॒रुप॑ ब्रुवे । रपा॑ꣳसि विघ्न॒तीरि॑त॒ रप॑- ॥ २४ ॥ श्चा॒तय॑मानाः । अ॒श्वत्थे वो॑ नि॒षद॑नं प॒र्णे वो॑ व॒स॒तिः कृ॒ता । गो॒भाज॒ इत्किला॑ऽसथ॒ यथ्स॒नव॑थ॒ पूरु॑षम् । यद॒हव्वाँ॒जय॑न्नि॒मा ओष॑धी॒रु॒हस्त॑ आ॒दधे । आ॒त्मा यख्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा । यदोष॑धय॒स्स॒ङ्गच्छ॑न्ते॒ राजा॑न॒स्समि॑ताविव । विप्र॒स्स उ॑च्यते भि॒षग्र॑ख्षो॒हा॒ऽमीव॒चात॑नः । निष्कृ॑ति॒र्नाम॑ वो मा॒ताऽथा॑ यू॒यꣴ स्थ॒ सङ्कृ॑तीः । स॒राः प॑त॒त्रिणी॑- ॥ २५ ॥ स्स्थन॒ यदा॒मय॑ति॒ निष्कृ॑त । अ॒न्या वो॑ अ॒न्याम॑वत्व॒न्याऽन्यस्या॒ उपा॑ऽवत । तास्सर्वा॒ ओष॑धयस्सवँ॒विदा॒ना इ॒दं मे॒ प्राऽव॑ता॒ वचः॑ । उच्छुष्मा॒ ओष॑धीना॒ङ्गावो॑ गो॒ष्ठादि॑वेरते । धन॑ꣳ सनि॒ष्यन्ती॑नामा॒त्मान॒न्तव॑ पूरुष । अति॒ विश्वाः॑ परि॒ष्ठास्स्ते॒न इ॑व व्र॒जम॑क्रमुः । ओष॑धय॒

प्राऽचुच्यवुर्यत्किञ्च तनुवाऽ रपः । या- ॥ २६ ॥ स्तं आतस्थुरात्मानय्या आविविशुः परुःपरुः । तास्ते यक्ष्मव्विँ बाधन्तामुग्रो मध्यमशीरिव । साकय्यक्ष्म प्र पत श्येनेन किकिदीविना । साकव्वातस्य ध्राज्या साकन्नश्य निहाकया । अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम् । आ विथ्सि सर्वा ओषधीरस्मा अरिष्टतातये । याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः । या ॥ २७ ॥ ओषधयस्सोमराज्ञीः प्रविष्टाः पृथिवीमनु । तासान्त्वमस्युत्तमा प्र णो जीवातवे सुव । अवपतन्तीरवदन्दिव ओषधयः परि । यञ्जीवमश्नवामहै न स रिष्याति पूरुषः । याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । इह सङ्गत्य तास्सर्वा अस्मै सन्दत्त भेषजम् । मा वो रिषत्खनिता यस्मै चाऽहङ्खनामि वः । द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम् । ओषधयस्सव्वँदन्ते सोमेन सह राज्ञा । यस्मै करोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ २८ ॥ रपः पतत्रिणीर्या अꣳहसो याः खनामि वोऽष्टादश च ॥ ६ ॥

मा नो हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा जजान । यश्चाऽपश्चन्द्रा बृहती-र्जजान कस्मै देवाय हविषा विधेम । अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपान्ते अग्निरिषि-तोऽव सर्पतु । अग्ने यत्ते शुक्रय्यँच्चन्द्रय्यँत्पूतय्यँद्यज्ञियम् । तद्देवेभ्यो भरामसि । इषमूर्जमहमित आ ॥ २९ ॥ दद ऋतस्य धाम्नो अमृतस्य योनेः । आ नो गोषु विशत्वौषधीषु जहामि सेदिमनिरा-ममीवाम् । अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यन्द-धासि दाशुषे कवे । इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य । स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिꣳ रयिम् । ऊर्जो नपाज्जातवेदस्सुशस्तिभिर्मन्दस्व ॥ ३० ॥ धीतिभिर्हितः । त्वे इषस्सन्दधुर्भूरिरितसश्चित्रोतयो वामजाताः । पावकवर्चाश्शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रः पितरा विचरन्नुपाऽवस्युभे पृणक्षि रोदसी । ऋतावानं महिषव्विँश्वचर्षणिमग्निꣳ सुम्नाय दधिरे पुरो जनाः । श्रुत्कर्णꣳ सप्रथस्तमन्त्वा गिरा दैव्यं मानुषा युगा । निष्कर्तारमध्वरस्य प्रचेतसङ्क्षयन्तꣳ राधसे महे । रातिं भृगूणामुशिजङ्कविक्रतुं पृणक्षि सानसिꣳ ॥ ३१ ॥ रयिम् । चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वन्तया देवतयाऽङ्गिरस्वद्ध्रुवास्सीदत । आ प्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे । सन्ते पयाꣳसि समु यन्तु वाजास्सव्वृँष्णियान्य-भिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ॥ ३२ ॥ आ मन्दस्व सानसिमेकान्न चत्वारिꣳशच्च ॥ ७ ॥

अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह । बृहस्पतिस्सविता तन्म आह पूषा माऽधाथ्सुकृतस्य लोके । यदक्रन्दः प्रथमञ्जायमान उद्यन्थ्समुद्रादुत वा पुरीषात् । श्येनस्य प-क्षा हरिणस्य बाहू उपस्तुतञ्जनिम तत्ते अर्वन् । अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् । वर्धमानं मह ॥ ३३ ॥ आ च पुष्करन्दिवो मात्रया वरिणा प्रथस्व । ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि

सीमतस्सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः । हिरण्य-गर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम । द्रप्सश्चस्कन्द पृथिवीमनु ॥ ३४ ॥ द्यामिमञ्च योनिमनु यश्च पूर्वः । तृतीयय्ँयोनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु सप्त होत्राः । नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिख्षे ये दिवि तेभ्यस्सर्पेभ्यो नमः । येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदः कृतन्तेभ्य-स्सर्पेभ्यो नमः । या इषवो यातुधानानाय्ँये वा वनस्पतीꣳरनु । ये वाऽवटेषु शेरते तेभ्यस्सर्पेभ्यो नमः ॥ ३५ ॥ महोऽनु यातुधानानामेकादश च ॥ ८ ॥

ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा सुकृता । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीन्दृꣳह । प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीय्ँयच्छ पृथिवीन्दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायाऽपानाय व्यानायोदानाय प्रतिष्ठायै ॥ ३६ ॥ चरित्रायाऽग्निस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषः परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च । या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम् । अषाढाऽसि सहमाना सहस्वाऽरातीस्सहस्वाऽरातीयत-स्सहस्व पृतनास्सहस्व पृतन्यतः । सहस्रवीर्या- ॥ ३७ ॥ ऽसि सा मा जिन्व । मधु वाता ऋतायते मधु ख्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । मही द्यौः पृथिवी च न इमय्ँयज्ञं मिमिख्षताम् । पिपृतान्नो भरीमभिः । तद्विष्णोः परमं ॥ ३८ ॥ पदꣳ सदा पश्यन्ति सूरयः । दिवीव चख्षुराततम् । ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः । स्यूता देवेभिरमृतेनाऽऽगाः । यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिस्सर्वाभी रुचे जनाय नस्कृधि । या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिस्सर्वाभी रुचन्नो धत्त बृहस्पते । विराड् ॥ ३९ ॥ ज्योतिरधारयथ्सम्राड्ज्योतिरधारयथ्स्वराड्ज्योतिरधारयत् । अग्ने युख्वा हि ये तवाऽश्वासो देव साधवः । अरव्ँवहन्त्याशवः । युख्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यस्सदः । द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः । तृतीयय्ँयोनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु सप्त ॥ ४० ॥ होत्राः । अभूदिदव्ँविश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च । अग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान् । ऋचे त्वा रुचे त्वा समिथ्स्रवन्ति सरितो न धेनाः । अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभि चाकशीमि । हिरण्ययो वेतसो मद्ध्य आसाम् । तस्मिन्थ्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः । तस्याऽऽसते हरयस्सप्त तीरे स्वधान्दुहाना अमृतस्य धाराम् ॥ ४१ ॥ प्रतिष्ठायै सहस्रवीर्या परमव्ँविराट्थ्सप्त तीरे चत्वारि च ॥ ९ ॥

आदित्यङ्गर्भं पयसा समञ्जन्थ्सहस्रस्य प्रतिमाव्ँविश्वरूपम् । परि वृङ्ग्धि हरसा माऽभि मृक्षश्शतायुषङ्कृणुहि चीयमानः । इमं मा हिꣳसीर्द्विपादं पशूनाꣳ सहस्राक्ष मेध आ चीयमानः । मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद । वातस्य ध्राजिव्ँवरुणस्य नाभिमश्वञ्ज-ज्ञानꣳ सरिरस्य मद्ध्ये । शिशुन्नदीनाꣳ हरिमद्रिबुद्ध्नमग्ने मा हिꣳसीः ॥ ४२ ॥ परमे व्योमन्न् । इमं मा हिꣳसीरेकशफं पशूनाङ्कनिक्रदव्ँवाजिनव्ँवाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद । अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः । स पर्वभिरृतुशः कल्पमानो गां मा हिꣳसीरदितिव्ँविराजम् । इमꣳ समुद्रꣳ शतधारमुथ्सव्ँव्यच्यमानं भुवनस्य मद्ध्ये । घृतन्दुहानामदितिञ्जनायाऽग्ने मा ॥ ४३ ॥ हिꣳसीः परमे व्योमन्न् । गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद । वरूत्रिन्त्वष्टुर्वरुणस्य नाभिमविञ्जज्ञानाꣳ रजसः परस्मात् । महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन्न् । इमामूर्णायुव्ँवरुणस्य मायान्त्वचं पशूनान्द्विपदाञ्चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमञ्जनित्रमग्ने मा हिꣳसीः परमे व्योमन्न् । उष्ट्रमारण्यमनु ॥ ४४ ॥ ते दिशामि तेन चिन्वानस्तनुवो नि षीद । यो अग्निरग्नेस्तपसोऽधि जातश्शोचात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा व्यानट्तमग्ने हेडः परि ते वृणक्तु । अजा ह्यग्नेरजनिष्ट गर्भाथ्सा वा अपश्यज्जनितारमग्रे । तया रोहमायन्नुप मेद्ध्यासस्तया देवा देवतामग्र आयन्न् । शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥ ४५ ॥ अग्ने मा हिꣳसीरग्ने मोष्ट्रमारण्यमनु शरभन्नव च ॥ १० ॥ आदित्यमिमन्द्विपादं मयुव्ँवातस्याऽश्वमिममेकशफङ्गौरम-जस्रङ्गवयव्ँवरूत्रिमविमिमामूर्णायुमुष्ट्रय्ँयो अग्निश्शरभम् ॥

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वाञ्चेति प्र वीर्यम् । श्नथद्वृत्रमुत सनोति वा-जमिन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेस्सहस्तमा सहसा वाजयन्ता । प्र चर्ष-णिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च । प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या । मरुतो यस्य हि ॥ ४६ ॥ क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः । यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतश्शृणुता हवम् । श्रियसे कं भानुभिस्सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिस्सुखादयः । ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः । अव ते हेड उदुत्तमम् । कया नश्चित्र आ भुवदूती सदावृधस्सखा । कया शचिष्ठया वृता । ॥ ४७ ॥ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृथ्स्वसो मयोभून् य एषां भृत्यामृणधथ्स जीवात् । अग्ने नयाऽऽ देवानाꣳ शन्नो भवन्तु वाजेवाजे । अफ्स्वग्ने सधिष्टव सौषधीरनु रुद्ध्यसे । गर्भे सञ्जायसे पुनः । वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे । इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्नो अग्ने ॥ ४८ ॥ हि वृता म एकादश च ॥ ११ ॥

विष्णोः क्रमोऽसि दिवस्पर्यन्नपतेऽपैत समितय्ँया जाता मा नो हिꣳसीदभ्यस्थाद्ध्रुवाऽस्यादित्यङ्गर्भमि-न्द्राग्नी रोचनैकादश ॥ ११ ॥ विष्णोरस्मिन् हव्येति त्वाऽहन्धीतिभिर्होत्रा अष्टाचत्वारिꣳशत् ॥ ४८ ॥ विष्णोः

क्रमोऽसि त्वन्नो अग्ने स त्वन्नो अग्ने ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥

ॐ

ॐ नमः परमात्मने

कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ चतुर्थकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

अपान्त्वेमन्थ्सादयाम्यपान्त्वोद्मन्थ्सादयाम्यपान्त्वा भस्मन्थ्सादयाम्यपान्त्वा ज्योतिषि सादयाम्यपान्त्वाऽयने सादयाम्यर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदाऽपाङ्क्षये सीदाऽपाꣳ सधिषि सीदाऽपान्त्वा सदने सादयाम्यपान्त्वा सधस्थे सादयाम्यपान्त्वा पुरीषे सादयाम्यपान्त्वा योनौ सादयाम्यपान्त्वा पाथसि सादयामि गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दोऽनुष्टुप्छन्दः पङ्क्तिश्छन्दः ॥ १ ॥ योनौ पञ्चदश च ॥ १ ॥

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथन्तरꣳ रथन्तराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणङ्गृह्णामि प्रजाभ्योऽयन्दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणङ्ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो ॥ २ ॥ गृह्णामि प्रजाभ्योऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसँव्वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षममृक्षमाच्छुक्रश्शुक्रात्सप्तदशस्सप्तदशाद्वैरूपवैँरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इदमुत्तरात्सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्छारद्यनुष्टुभस्स्वारꣳ स्वारान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजवैँराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया ॥ ३ ॥ त्वया श्रोत्रङ्गृह्णामि प्रजाभ्य इयमुपरि मतिस्तस्यै वाङ्माती हैमन्तो वाच्यायनः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्याँव्विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचङ्गृह्णामि प्रजाभ्यः ॥ ४ ॥ त्वया मनो जमदग्निर्ऋषिः प्रजापतिगृहीतया त्रिꣳशच्च ॥ २ ॥

प्राची दिशाँव्वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणन्त्रिवृथ्स्तोमस्स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातस्सानग ऋषिर्दक्षिणा दिशाङ्ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्र-

न्द्रविणं पञ्चदशस्स्तोमस्स उं सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेताऽयानान्दक्षिणाद्वातो वातस्सनातन ऋषिः प्रतीचीं दिशाँव्वर्षा ऋतूनाव्विश्वे देवा देवता विड्-॥ ५ ॥ द्रविणꣳ सप्तदशस्स्तोमस्स उं वेकविꣳशवर्तनिस्त्रिवथ्सो वयो द्वापरोऽयानां पश्चाद्वातो वातोऽहभून ऋषिरुदीची दिशाꣳ शरदृतूनां मित्रावरुणौ देवता पुष्टन्द्रविणमेकविꣳशस्स्तोमस्स उं त्रिणववर्तनिस्तुर्यवाड्वयं आस्कन्दोऽयानामुत्तराद्वातो वातः प्रत्न ऋषिरूर्द्ध्वा दिशाꣳ हैमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणन्त्रिणवस्स्तोमस्स उं त्रयस्त्रिꣳशवर्तनिः पष्ठवाद्वयोऽभिभूरयानाव्विष्वग्वातो वातस्सुपर्ण ऋषिः पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यान्देवहूत्याम् ॥ ६ ॥ विट्पष्ठवाद्वयोऽष्टाविꣳशतिश्च ॥ ३ ॥

ध्रुवक्षितिर्द्ध्रुवयोनिर्द्ध्रुवाऽसि ध्रुवाय्योनिमा सीद साद्ध्या । उख्यस्य केतुं प्रथमं पुरस्तादश्विनाऽद्ध्वर्यू सादयतामिह त्वा । स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा । स्वासस्था तनुवा सव्विंशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽद्ध्वर्यू सादयतामिह त्वा । कुलायिनी वसुमती वयोधा रयिन्नो वर्द्ध बहुलꣳ सुवीरम् । ॥ ७ ॥ अपाऽमतिन्दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्द्धेहि यजमानाय पोषमश्विनाऽद्ध्वर्यू सादयतामिह त्वा । अग्नेः पुरीषमसि देवयानी तान्त्वा विश्वे अभि गृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽ यजस्वाऽश्विनाऽद्ध्वर्यू सादयतामिह त्वा । दिवो मूर्द्धाऽसि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानाम् । ॥ ८ ॥ ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽद्ध्वर्यू सादयतामिह त्वा । सजूरृतुभिस्सजूर्विधाभिस्सजूर्वसुभिस्सजू रुद्रैस्सजूरादित्यैस्सजूर्विश्वैर्देवैस्सजूर्देवैस्सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाऽश्विनाऽद्ध्वर्यू सादयतामिह त्वा । प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या वि भाहि श्रोत्रम्मे श्लोकयाऽपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय ॥ ९ ॥ सुवीरं भुवनानामुर्व्या सप्तदश च ॥ ४ ॥

त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्री छन्दस्त्रिवथ्सो वय उष्णिहा छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दः पष्ठवाद्वयो बृहती छन्द उक्षा वयस्सतोबृहती छन्द ऋषभो वयः ककुच्छन्दो धेनुर्वयो जगती छन्दोऽनड्वान् वयः पङ्क्तिश्छन्दो बस्तो वयो विवलञ्छन्दो वृष्णिर्वयो विशालञ्छन्दः पुरुषो वयस्तन्द्रञ्छन्दो व्याघ्रो वयोऽनाधृष्टञ्छन्दस्सिꣳहो वयश्छदिश्छन्दो विष्टम्भो वयोऽधिपतिश्छन्दः क्षत्रव्वयो मयन्दञ्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो मूर्द्धा वयः प्रजापतिश्छन्दः ॥ १० ॥ पुरुषो वयष्षड्विꣳशतिश्च ॥ ५ ॥

इन्द्राग्नी अव्यथमानामिष्टकान्दꣳहतय्युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च वि बाधताम् । विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां

भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षय्यच्छान्तरिक्षन्दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणाया-
ऽपानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा ॥ ११ ॥
शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि
प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगायुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं
मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि मनो मे जिन्व वाचं मे पिन्वाऽऽत्मानं मे पाहि ज्योतिर्मे यच्छ
॥ १२ ॥ छर्दिषा पिन्व षट्च ॥ ६ ॥

मा छन्दः प्रमा छन्दः प्रतिमा छन्दोऽस्रीविश्छन्दः पङ्क्तिश्छन्द उष्णिहा छन्दो बृहती छन्दो-
ऽनुष्टुप्छन्दो विराट्छन्दो गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दः पृथिवी छन्दोऽन्तरिक्षञ्छन्दो द्यौ-
श्छन्दस्समाश्छन्दो नक्षत्राणि छन्दो मनश्छन्दो वाक्छन्दः कृषिश्छन्दो हिरण्यञ्छन्दो गौश्छन्दो-
ऽजा छन्दोऽश्वश्छन्दः । अग्निर्देवता ॥ १३ ॥ वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता
रुद्रा देवताऽऽदित्या देवता विश्वे देवा देवता मरुतो देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता
मूर्द्धाऽसि राड्ध्रुवाऽसि धरुणा यन्त्र्यसि यमित्रीषे त्वोर्जे त्वा कृष्यै त्वा क्षेमाय त्वा यन्त्री रा-
ड्ध्रुवाऽसि धरणी धत्र्यसि धरित्र्यायुषे त्वा वर्चसे त्वौजसे त्वा बलाय त्वा ॥ १४ ॥ देवताऽऽयुषे त्वा
षट्च ॥ ७ ॥

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभिवर्तस्सविꣳशो
धरुणं एकविꣳशो वर्चो द्वाविꣳशस्संभरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्भाः पञ्चविꣳश ओज-
स्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपञ्चतुस्त्रिꣳशो नाकष्षट्त्रिꣳशो विवर्तो-
ऽष्टाचत्वारिꣳशो धर्त्रश्चतुष्टोमः ॥ १५ ॥ आशुस्सप्तत्रिꣳशत् ॥ ८ ॥

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतन्त्रिवृथ्स्तोम इन्द्रस्य भागोऽसि विष्णोरा-
धिपत्यङ्क्षत्रꣳ स्पृतं पञ्चदशस्स्तोमो नृचक्षसां भागोऽसि धातुराधिपत्यञ्जनित्रꣳ स्पृतꣳ सप्तदश-
स्स्तोमो मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्यन्दिवो वृष्टिर्वातास्स्पृता एकविꣳशस्स्तोमोऽदित्यै
भागोऽसि पूष्ण आधिपत्यमोजस्स्पृतन्त्रिणवस्स्तोमो वसूनां भागोऽसि ॥ १६ ॥ रुद्राणामाधिप-
त्यञ्चतुष्पाथ्स्पृतञ्चतुर्विꣳशस्स्तोम आदित्यानां भागोऽसि मरुतामाधिपत्यङ्गर्भास्स्पृताः पञ्चविꣳ-
शस्स्तोमो देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशस्स्पृताश्चतुष्टोमस्स्तोमो यावानां
भागोऽस्ययावानामाधिपत्यं प्रजास्स्पृताश्चतुश्चत्वारिꣳशस्स्तोम ऋभूणां भागोऽसि विश्वेषान्देवा-
नामाधिपत्यं भूतन्निशान्तꣳ स्पृतन्त्रयस्त्रिꣳशस्स्तोमः ॥ १७ ॥ वसूनां भागोऽसि षट्चत्वारिꣳशच्च ॥ ९ ॥

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्माऽसृज्यत ब्रह्मणस्प-
तिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीथ्सप्तभिरस्तुवत सप्तर्षयो-

ऽसृज्यन्त धाताऽधिपतिरासीन्नवभिरस्तुवत पितरोऽसृज्यन्ताऽदितिरधिपत्न्यासीदेकादशभिरस्तुवत-र्तवोऽसृज्यन्ताऽऽर्तवोऽधिपतिरासीत्त्रयोदशभिरस्तुवत मासा असृज्यन्त सँव्वथ्सरोऽधिपति-॥ १८ ॥ रासीत्पञ्चदशभिरस्तुवत क्ष्त्रमसृज्यतेन्द्रोऽधिपतिरासीथ्सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पति-रधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविꣳशत्याऽस्तुवतै-कशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्त्रयोविꣳशत्याऽस्तुवत क्ष्हुद्राः पशवोऽसृज्यन्त पूषाऽ-धिपतिरासीत्पञ्चविꣳशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीथ्सप्तविꣳशत्याऽ-स्तुवत द्यावापृथिवी व्यै- ॥ १९ ॥ ताँव्वसवो रुद्रा आदित्या अनु व्यायन्तेषामाधिपत्यमासीन्न-वविꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यावानाञ्चाऽयावानाञ्चाऽऽधिपत्यमासीत्त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधि-पतिरासीत् ॥ २० ॥ सँव्वथ्सरोऽधिपतिर्वि पञ्चत्रिꣳशच्च ॥ १० ॥

इयमेव सा या प्रथमा व्यौच्छदन्तरस्याञ्चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री त्रय एनां महिमानस्सचन्ते । छन्दस्वती उषसा पेपिशाने समानँय्योनिमनु सञ्चरन्ती । सूर्यपत्नी वि चरतः प्रजानती केतुङ्कृण्वाने अजरे भूरिरेतसा । ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषा-ऽऽगुः । प्रजामेका रक्ष्हत्यूर्जमेका ॥ २१ ॥ व्रतमेका रक्ष्हति देवयूनाम् । चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्ष्हावृषयो भवन्ती । गायत्रीन्त्रिष्टुभञ्जगतीमनुष्टुभं बृहदर्कँय्युञ्जानास्सुवराऽभरन्निदम् । पञ्चभिर्धाता वि दधाविदँय्यत्तासाꣳ स्वसॄरजनयत्पञ्चपञ्च । तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः । त्रिꣳशथ्स्वसार उप यन्ति निष्कृतꣳ समानङ्केतुं प्रतिमुञ्चमानाः । ॥ २२ ॥ ऋतूꣳ-स्तन्वते कवयः प्रजानतीर्मद्ध्येछन्दसः परि यन्ति भास्वतीः । ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे । एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः । अनानुजामनुजां मामकर्त सत्यँव्वदन्त्यन्विच्छ एतत् । भूयास- ॥ २३ ॥ मस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त । अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त । पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्तास्समानमूर्द्ध्नीरभि लोकमेकम् । ॥ २४ ॥ ऋतस्य गर्भः प्रथमा व्यूषु-ष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकान्नि यच्छति । या प्रथमा व्यौच्छथ्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम् । शुक्रर्षभा नभसा ज्योति-षाऽऽगाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः । ऋतूनां पत्नी प्रथमेयमाऽगादह्नान्नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छस्यजीर्णा त्व-ञ्जरयसि सर्वमन्यत् ॥ २५ ॥ ऊर्जमेका प्रतिमुञ्चमाना भूयासमेकं पत्न्येकान्न विꣳशतिश्च ॥ ११ ॥

अग्ने जातान्प्र णुदा नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अस्मे दीदिहि सुमना अहेडन्तव स्याः शर्मन्त्रिवरूथ उद्भित् । सहसा जातान्प्र णुदा नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयः स्याम प्र णुदा नस्सपत्नान् । चतुश्चत्वारिंशस्स्तोमो वर्चो द्रविणः षोडशस्स्तोम ओजो द्रविणं पृथिव्याः पुरीषमस्य-॥ २६ ॥ फ्सो नाम । एवश्छन्दो वरिवश्छ-न्दश्शंभूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दस्सिन्धुश्छन्दस्समुद्रञ्छन्दस्सलि-लञ्छन्दस्संसर्यच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छ-न्दो भ्रजश्छन्दस्सष्टुप्छन्दोऽनुष्टुप्छन्दः ककुच्छन्दस्त्रिककुच्छन्दः काव्यञ्छन्दोऽङ्कुपञ्छन्दः ॥ २७ ॥ पदपङ्क्तिश्छन्दोऽक्षरपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भृज्वाञ्छन्दः प्रच्छच्छन्दः पक्षश्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विशालञ्छन्दो विष्पर्धाश्छन्दश्छदिश्छन्दो दूरोह-णञ्छन्दस्तन्द्रञ्छन्दोऽङ्काङ्कञ्छन्दः ॥ २८ ॥ अस्यङ्कुपञ्छन्दस्त्रयस्त्रिंशच्च ॥ १२ ॥

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धश्शुक्र आहुतः । त्वः सोमाऽसि सत्पति-स्त्वः राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । भद्रा ते अग्ने स्वनीक सन्दृग्घोरस्य सतो विषुणस्य चारुः । न यत्ते शोचिस्तमसा वरन्त न दुध्वस्मानस्तनुवि रेप आ धुः । भद्रन्ते अग्ने सहसिन्ननीक-मुपाक आ रोचते सूर्यस्य । ॥ २९ ॥ रुशद्दृशे ददृशे नक्तया चिदरूँक्षितन्दृश आ रूपे अन्नम् । सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाः आयजिष्ठस्स्वस्ति । अदब्धो गोपा उतः नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि । स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव । यथ्सीमहि दिविजात प्रशस्तन्तदस्मासु द्रविणन्धेहि चित्रम् । यथा होतर्मनुषो ॥ ३० ॥ देवताता यज्ञेभिस्सूनो सहसो यजासि । एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् । अग्निमीडे पुरोहितय्यँज्ञस्य देवमृत्विजम् । होतारः रत्नधातमम् । वृषा सोम द्युमाः असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे । सान्तपना इदः हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिंशादसः । यो नो मर्तो वसवो दुर्हृणायुस्तिरस्सत्यानि मरुतो ॥ ३१ ॥ जिघांसात् । द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तम् । सँव्वथ्सरीणा मरुतस्स्वर्का उरुक्षयास्सगणा मानुषेषु । तेऽस्मत्पाशान्प्र मुञ्च-न्त्वंहसस्सान्तपना मदिरा मादयिष्णवः । पिप्रीहि देवाः उशतो यविष्ठ विद्वाः ऋतूःरृतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वः होतॄणामस्यायजिष्ठः । अग्ने यदद्य विशो अध्वरस्य होतः पावक ॥ ३२ ॥ शोचे वेष्ट्वः हि यज्वा । ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य । अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसव्वीरवत्तमम् । गयस्फानो अमीवहा वसुवि-त्पुष्टिवर्धनः । सुमित्रस्सोम नो भव । गृहमेधास आ गत मरुतो माऽप भूतन । प्रमुञ्चन्तो नो अंहसः । पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । महोभि- ॥ ३३ ॥ श्चर्षणीनाम् । प्र बुध्निया ईरते वो महांसि प्र णामानि प्रयज्यवस्तिरध्वम् । सहस्रियन्दम्यं भागमेतङ्गृहमेधीयं मरुतो

जुषद्ध्वम् । उप यमेति युवतिस्सुदक्षन्दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयुः । इमो अग्ने वीततमानि हव्याऽजस्रो वक्षि देवतातिमच्छ । प्रति न ईꣳ सुरभीणि वियन्तु । क्रीडव्व-श्शर्द्धो मारुतमनर्वाणꣳ रथेशुभम् । ॥ ३४ ॥ कण्वा अभि प्र गायत । अत्यासो न ये मरुतस्स्वञ्चो यक्षदृशो न शुभयन्त मर्याः । ते हर्म्येष्ठाश्शिशवो न शुभ्रा वथ्सासो न प्रक्रीडिनः पयोधाः । प्रैषा-मज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे । ते क्रीडयो धुनयो भ्राजदृष्टयस्स्वयं महित्वं पन-यन्त धूतयः । उपह्वरेषु यदचिद्ध्वय्यँयिव्वय इव मरुतः केन ॥ ३५ ॥ चित्पथा । श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते । अग्निमग्निꣳ हवीमभिस्सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् । तꣳ हि शश्वन्त ईडते स्रुचा देवङ्घृतश्चुता । अग्निꣳ हव्याय वोढवे । इन्द्राग्नी रोचना दिव-श्श्नथद्वृत्रमिन्द्रव्वो विश्वतस्परीन्द्रन्नरो विश्वकर्मन् हविषा वावृधानो विश्वकर्मन् हविषा वर्द्धनेन ॥ ३६ ॥ सूर्यस्य मनुषो मरुतः पावक महोभी रथेशुभङ्केन षट्चत्वारिꣳशच्च ॥ १३ ॥

अपान्त्वेमन्नयं पुरो भुवः प्राची दधुवक्षितिस्त्र्यविरिन्द्राग्नी मा छन्द आशुस्त्रिवृदग्नेर्भागोऽस्येकयेयमेव सा याऽग्ने जातानग्निर्वृत्राणि त्रयोदश ॥ १३ ॥ अपान्त्वेन्द्राग्नी इयमेव देवताता षट्त्रिꣳशत् ॥ ३६ ॥ अपान्त्वेमन् हविषा वर्द्धनेन ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय- तैत्तिरीय-संहितायां चतुर्थकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ चतुर्थकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

रश्मिरसि क्षयाय त्वा क्षयञ्जिन्व प्रेतिरसि धर्माय त्वा धर्मञ्जिन्वाऽन्वितिरसि दिवे त्वा दिवञ्जिन्व सन्धिरस्यन्तरिक्षाय त्वाऽन्तरिक्षञ्जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीञ्जिन्व विष्ट-म्भोऽसि वृष्ट्यै त्वा वृष्टिञ्जिन्व प्रवाऽस्यह्ने त्वाऽहर्जिन्वाऽनुवाऽसि रात्रियै त्वा रात्रिञ्जिन्वोशिगसि ॥ १ ॥ वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सुदीतिरस्यादित्येभ्यस्त्वा-ऽऽदित्याञ्जिन्वौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाऽभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रञ्जिन्वा-

ऽधिपतिरसि प्राणाय ॥ २ ॥ त्वा प्राणञ्जिन्व यन्ताऽस्यपानाय त्वाऽपानञ्जिन्व सꣳसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रञ्जिन्व त्रिवृदसि प्रवृदसि संवृदसि विवृदसि सꣳरोहोऽसि नीरोहोऽसि प्ररोहोऽस्यनुरोहोऽसि वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि ॥ ३ ॥ उशिगसि प्राणाय त्रिचत्वारिꣳशच्च ॥ १ ॥

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथयत्स्तभ्नातु रथन्तरꣳ साम प्रतिष्ठित्यै विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथयत्स्तभ्नातु बृहत्साम प्रतिष्ठित्यै सम्राडसि प्रतीची दि- ॥ ४ ॥ गादित्यास्ते देवा अधिपतयस्सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथयत्स्तभ्नातु वैरूपꣳ साम प्रतिष्ठित्यै स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथयत्स्तभ्नातु वैराजꣳ साम प्रतिष्ठित्या अधिपत्न्यसि बृहती दिङ्मरुतस्ते देवा अधिपतयो ॥ ५ ॥ बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताꣳ शाकररैवते सामनी प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चाऽयमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानञ्च सादयन्तु ॥ ६ ॥
प्रतीची दिङ्मरुतस्ते देवा अधिपतयश्चत्वारिꣳशच्च ॥ २ ॥

अयं पुरो हरिकेशस्सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाऽप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेतिरयन्दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाऽप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिरयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चाऽसमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चा- ॥ ७ ॥ ऽनुम्लोचन्ती चाऽप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिरयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाऽप्सरसावापो हेतिर्वातः प्रहेतिरयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चाऽरिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाऽप्सरसौ विद्युद्धेतिरवस्फूर्जन्प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते य- ॥ ८ ॥ न्द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधाम्यायोस्त्वा सदने सादयाम्यवतश्छायायान्नमस्समुद्राय नमस्समुद्रस्य चक्षसे परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीन्दिवं यच्छ दिवन्दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायाऽपानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । प्रोथदश्वो न यवसे अविष्यन् यदा महस्संव-

रणाद्ध्यस्थात्। आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनङ्कृष्णमस्ति ॥ ९ ॥ प्रम्लोचन्ती च यꣳ स्वस्त्याऽष्टाविꣳशतिश्च ॥ ३ ॥

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति। त्वामग्ने पुष्करादद्ध्यथर्वा निरमन्थत। मूर्द्ध्नो विश्वस्य वाघतः। अयमग्निस्सहस्रिणो वाजस्य शतिनस्पतिः। मूर्द्धा कवी रयीणाम्। भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः। दिवि मूर्द्धानन्दधिषे सुवर्षाञ्जिह्वामग्ने चकृषे हव्यवाहम्। अबोद्ध्यग्निस्समिधा जनानां ॥ १० ॥ प्रति धेनुमिवाऽऽयतीमुषासम्। यह्वा इव प्र वयामुज्जिहानाः प्र भानवस्सिस्रते नाकमच्छ। अवोचाम कवये मेद्ध्याय वचो वन्दारु वृषभाय वृष्णे। गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्। जनस्य गोपा अजनिष्ट जागृविरग्निस्सुदक्षस्सुविताय नव्यसे। घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यश्शुचिः। त्वामग्ने अङ्गिरसो ॥ ११ ॥ गुहा हितमन्वविन्दञ्छिश्रियाणव्वनेवने। स जायसे मत्थ्यमानस्सहो महत्त्वामाहुस्सहसस्पुत्रमङ्गिरः। यज्ञस्य केतुं प्रथमं पुरोहितमग्निन्नरस्त्रिषधस्थे समिन्धते। इन्द्रेण देवैस्सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः। त्वाञ्चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाऽग्ने हव्याय वोढवे। सखायस्सव्वस्सम्यञ्चमिषꣳ ॥ १२ ॥ स्तोमञ्चाऽग्नये। वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते। सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिद्ध्यसे स नो वसून्या भर। एना वो अग्निन्नमसोर्जो नपातमा हुवे। प्रियञ्चेतिष्ठमरतिꣳ स्वद्ध्वरव्विश्वस्य दूतममृतम्। स योजते अरुषो विश्वभोजसा स दुद्रवथ्स्वाहुतः। सुब्रह्मा यज्ञस्सुशमी ॥ १३ ॥ वसूनान्देवꣳ राधो जनानाम्। उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः। उद्धूमासो अरुषासो दिविस्पृशस्समग्निमिन्धते नरः। अग्ने वाजस्य गोमत ईशानस्सहसो यहो। अस्मे धेहि जातवेदो महि श्रवः। स इधानो वसुष्कविरग्निरीडेन्यो गिरा। रेवदस्मभ्यं पुर्वणीक दीदिहि। क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः। स तिग्मजंभ ॥ १४ ॥ रक्षसो दह प्रति। आ ते अग्न इधीमहि द्युमन्तन्देवाऽजरम्। यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर। आ ते अग्न ऋचा हविश्शुक्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर। उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या ॥ १५ ॥ उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर। अग्ने तमद्याऽश्वन्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम्। ऋद्ध्यामा त ओहैः। अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीरृतस्य बृहतो बभूथ। आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः। एभिर्नो अर्कैर्भवा नो अर्वाङ् ॥ १६ ॥ सुवर्न ज्योतिः। अग्ने विश्वेभिस्सुमना अनीकैः। अग्निꣳ होतारं मन्ये दास्वन्तव्वसोस्सूनुꣳ सहसो जातवेदसम्। विप्रन्न जातवेदसम्। य ऊर्द्ध्वया स्वद्ध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः। अग्ने त्वन्नो अन्तमः। उत त्राता शिवो भव वरूथ्यः। तन्त्वा

शोचिष्ठ दीदिवः । सुम्नायं नूनमीमहे सखिभ्यः । वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिन्दाः ॥ १७ ॥ जनानामङ्गिरस इषꣳ सुशर्मी तिग्मजंभ पुपूर्या अर्वाङ् वसुश्रवाः पञ्च च ॥ ४ ॥

इन्द्राग्निभ्यान्त्वा सयुजा युजा युनज्म्याघाराभ्यान्तेजसा वर्चसोक्थेभिस्स्तोमेभिश्छन्दोभी रय्यै पोषाय सजातानाँ मद्ध्यमस्थेयाय मया त्वा सयुजा युजा युनज्म्यंबा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती चुपुणीका नामाऽसि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यान्तामहं प्र पद्ये सा ॥ १८ ॥ मे शर्मं च वर्मं चाऽस्त्वधि द्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यान्तामहं प्र पद्ये सा मे शर्मं च वर्मं चाऽस्तु द्यौरपराजिताऽमृतेन विष्टाऽऽदित्यास्ते गोप्तारस्सूर्यो वियत्तोऽस्यान्तामहं प्र पद्ये सा मे शर्मं च वर्मं चाऽस्तु ॥ १९ ॥ साऽष्टाचत्वारिꣳशच्च ॥ ५ ॥

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीँव्विश्वस्मै प्राणायाऽपानाय विश्वञ्ज्योतिर्यच्छाऽग्निस्तेऽधिपतिर्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीँव्विश्वस्मै प्राणायाऽपानाय विश्वञ्ज्योतिर्यच्छ वायुस्तेऽधिपतिः प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीँव्विश्वस्मै प्राणायाऽपानाय विश्वञ्ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिः पुरोवातसनिरस्यभ्रसनिरसि विद्युथ्सनि- ॥ २० ॥ रसि स्तनयित्नुसनिरसि वृष्टिसनिरस्यग्नेर्यान्यसि देवानामग्नेयान्यसि वायोर्यान्यसि देवानाँव्वायोयान्यस्यन्तरिक्षस्य यान्यसि देवानामन्तरिक्षयान्यस्यन्तरिक्षमस्यन्तरिक्षाय त्वा सलिलाय त्वा सर्णीकाय त्वा सतीकाय त्वा केताय त्वा प्रचेतसे त्वा विवस्वते त्वा दिवस्त्वा ज्योतिष आदित्येभ्यस्त्वर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा यशोदान्त्वा यशसि तेजोदान्त्वा तेजसि पयोदान्त्वा पयसि वर्चोदान्त्वा वर्चसि द्रविणोदान्त्वा द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ २१ ॥ विद्युथ्सनिर्द्युते त्वैकान्न त्रिꣳशच्च ॥ ६ ॥

भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्द्ध्वाऽस्यन्तरिक्षसदस्यन्तरिक्षे सीदाऽप्सुषदसि श्येनसदसि गृद्ध्रसदसि सुपर्णसदसि नाकसदसि पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशान्त्वा द्रविणे सादयामि द्रविणोदान्त्वा द्रविणे सादयामि प्राणं मे पाह्यपानं मे पाहि व्यानं मे ॥ २२ ॥ पाह्यायुर्मे पाहि विश्वायुर्मे पाहि सर्वायुर्मे पाह्यग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳ रभावहै पाञ्चजन्येष्वप्येद्ध्यग्ने यावा अयावा एवा ऊमास्सब्दस्सगरस्सुमेकः ॥ २३ ॥ व्यानं मे द्वात्रिꣳशच्च ॥ ७ ॥

अग्निना विश्वाषाट्थ्सूर्येण स्वराट्क्रत्वा शचीपतिरृषभेण त्वष्टा यज्ञेन मघवान्दक्षिणया सुवर्गो मन्युना वृत्रहा सौहार्देन तनूधा अन्नेन गयः पृथिव्याऽसनोहृग्भिरन्नादो वषट्कारेणर्द्धस्साम्ना

तनूपा विराजा ज्योतिष्मान्ब्रह्मणा सोमपा गोभिर्यज्ञन्दाधारं ख्षत्रेण मनुष्यानश्वेन च रथेन च व-
ज्र्यृतुभिः प्रभुस्सँव्वत्सरेण परिभूस्तपसाऽनाधृष्टस्सूर्यस्सन्तनूभिः ॥ २४ ॥ अग्निनैकान्न पञ्चाशत् ॥८॥

प्रजापतिर्मनसाऽन्धोऽच्छेतो धाता दीख्षायाꣳ सविता भृत्यां पूषा सोमक्रयण्याँव्वरुण
उपनद्धोऽसुरः क्रीयमाणो मित्रः क्रीतश्शिपिविष्ट आसादितो नरन्धिषः प्रोह्यमाणोऽधिपतिरागतः
प्रजापतिः प्रणीयमानोऽग्निराग्नीध्रे बृहस्पतिराग्नीध्रात्प्रणीयमान इन्द्रो हविर्धानेऽदितिरासादितो
विष्णुरुपावह्रियमाणोऽथर्वोपोत्तो यमोऽभिषुतोऽपूतपा आधूयमानो वायुः पूयमानो मित्रः ख्षी-
रश्रीर्मन्थी सक्तुश्रीर्वैश्वदेव उन्नीतो रुद्र आहुतो वायुरावृत्तो नृचख्षाः प्रतिख्यातो भख्ष आगतः
पितृणान्नाराशꣳसोऽसुरात्तस्सिन्धुरवभृथमवप्रयन्थ्समुद्रोऽवगतस्सलिलः प्रप्लुतस्सुवरुदृचङ्गतः ॥ २५॥
रुद्र एकविꣳशतिश्च ॥ ९ ॥

कृत्तिका नख्षत्रमग्निर्देवताऽग्ने रुचस्स्थ प्रजापतेर्धातुस्सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे
त्वा ज्योतिषे त्वा रोहिणी नख्षत्रं प्रजापतिर्देवता मृगशीर्षन्नख्षत्रꣳ सोमो देवताऽऽर्द्रा नख्षत्रꣳ
रुद्रो देवता पुनर्वसू नख्षत्रमदितिर्देवता तिष्यो नख्षत्रं बृहस्पतिर्देवताऽऽश्रेषा नख्षत्रꣳ सर्पा देवता
मघा नख्षत्रम्पितरो देवता फल्गुनी नख्षत्र-॥ २६ ॥ मर्यमा देवता फल्गुनी नख्षत्रं भगो देवता
हस्तो नख्षत्रꣳ सविता देवता चित्रा नख्षत्रमिन्द्रो देवता स्वाती नख्षत्रँव्वायुर्देवता विशाखे
नख्षत्रमिन्द्राग्नी देवताऽनूराधा नख्षत्रं मित्रो देवता रोहिणी नख्षत्रमिन्द्रो देवता विचृतौ नख्षत्रं
पितरो देवताऽषाढा नख्षत्रमापो देवताऽषाढा नख्षत्रँव्विश्वे देवा देवता श्रोणा नख्षत्रँव्विष्णुर्देवता
श्रविष्ठा नख्षत्रँव्वसवो ॥ २७ ॥ देवता शतभिषङ्नख्षत्रमिन्द्रो देवता प्रोष्ठपदा नख्षत्रमज एक-
पाद्देवता प्रोष्ठपदा नख्षत्रमहिर्बुध्नियो देवता रेवती नख्षत्रं पूषा देवताऽश्वयुजौ नख्षत्रमश्विनौ
देवताऽपभरणीर्नख्षत्रँय्यमो देवता पूर्णा पश्चाद्यत्ते देवा अदधुः ॥ २८ ॥ फल्गुनी नख्षत्रँव्वसवस्त्रय-
स्त्रिꣳशच्च ॥ १० ॥

मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू नभश्च नभस्यश्च वार्षिकावृतू
इषश्चोर्जश्च शारदावृतू सहश्च सहस्यश्च हैमन्तिकावृतू तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तश्श्लेषोऽसि
कल्पेतान्द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता ॥ २९ ॥
येऽग्नयस्समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभि कल्पमाना इन्द्रमिव देवा अभि सँव्विशन्तु
सँय्यच्च प्रचेताश्चाऽग्नेस्सोमस्य सूर्यस्योग्रा च भीमा च पितृणाँय्यमस्येन्द्रस्य ध्रुवा च पृथिवी च
देवस्य सवितुर्मरुताँव्वरुणस्य धर्त्री च धरित्री च मित्रावरुणयोर्मित्रस्य धातुः प्राची च प्रतीची च
वसूनाꣳ रुद्राणा-॥ ३० ॥ मादित्यानान्ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यन्द्विष्मो यश्च
नो द्वेष्टि तँव्वो जम्भे दधामि सहस्रस्य प्रमा असि सहस्रस्य प्रतिमा असि सहस्रस्य विमा असि
सहस्रस्योन्मा असि साहस्रोऽसि सहस्राय त्वेमा मे अग्न इष्टका धेनवस्सन्त्वेका च शतञ्च

सहस्रञ्चाऽयुतञ्च ॥ ३१ ॥ नियुतञ्च प्रयुतञ्चाऽर्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चाऽन्तश्च परार्द्ध-श्चेमा मे अग्न इष्टका धेनवस्सन्तु षष्टिस्सहस्रमयुतमख्षीयमाणा ऋतस्थास्स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीस्स्वधाविनीस्ता मे अग्न इष्टका धेनवस्सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिँल्लोके ॥ ३२ ॥ सव्रता रुद्राणामयुतञ्च पञ्चचत्वारिꣳशच्च ॥ ११ ॥

समिद्दिशामाशया नस्सुवर्विन्मधोरतो माधवः पात्वस्मान् । अग्निर्देवो दुष्टरीतुरदाभ्य इदङ्ख्षत्रꣳ रख्षतु पात्वस्मान् । रथन्तरꣳ सामभिः पात्वस्मान्गायत्री छन्दसाव्ँविश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात इदमोजः पिपर्तु । उग्रा दिशामभिभूतिर्वयोधाश्शुचिश्शुक्रे अहन्योजसीना । इन्द्राऽधिपतिः पिपृतादतो नो महि ॥ ३३ ॥ ख्षत्रव्ँविश्वतो धारयेदम् । बृहथ्साम ख्षत्रभृद्वृद्धवृष्णियन्त्रिष्टुभौजश्शुभितमुग्रवीरम् । इन्द्र स्तोमेन पञ्चदशेन मध्यमिदव्ँवातेन सगरेण रख्ष । प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाः प्रावृषाऽह्नाꣳ सुवर्वती । इदङ्ख्षत्रन्दुष्टरमस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत् । वैरूपे सामन्निह तच्छकेम जगत्यैनव्ँविख्ष्वा वेशयामः । विश्वे देवास्सप्तदशेन ॥ ३४ ॥ वर्च इदङ्ख्षत्रꣳ सलिलवातमुग्रम् । धर्त्री दिशाङ्ख्षत्रमिदन्दाधारोपस्थाऽऽशानां मित्रवदस्त्वोजः । मित्रावरुणा शरदाऽह्नाञ्चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम् । वैराजे सामन्नधि मे मनीषाऽनुष्टुभा संभृतव्ँवीर्यꣳ सहः । इदङ्ख्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रख्षतमाधिपत्यैः । सम्राड्दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु । अवस्युवाता ॥ ३५ ॥ बृहतीर्नु शक्वरीरिमय्ँयज्ञमवन्तु नो घृताचीः । सुवर्वती सुदुघा नः पयस्वती दिशान्देव्यवतु नो घृताची । त्वङ्गोपाः पुरएतोत पश्चाद्बृहस्पते याम्याय्ँयुङ्ग्धि वाचम् । ऊर्द्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ सव्ँवथ्सरेण सविता नो अह्नाम् । रेवथ्सामाऽतिच्छन्दा उ छन्दोऽजातशत्रुस्स्योना नो अस्तु । स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नो ॥ ३६ ॥ गृणाहि । घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु । ध्रुवा दिशाव्ँविष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता । बृहस्पतिर्मातरिश्वोत वायुस्सन्धुवाना वाता अभि नो गृणन्तु । विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी । विश्वव्यचा इषयन्ती सुभूतिश्शिवा नो अस्त्वदितिरुपस्थे । वैश्वानरो न ऊत्या पृष्टो दिव्यनु नोऽद्याऽनुमतिरन्विदनुमते त्वङ्कया नश्चित्र आ भुवत्को अद्य युङ्क्ते ॥ ३७ ॥ महि सप्तदशेनाऽवस्युवाता अभि नोऽनु नश्चतुर्दश च ॥ १२ ॥

रश्मिरसि राज्ञ्यस्ययं पुरो हरिकेशोऽग्निर्मूर्द्धेन्द्राग्निभ्यां बृहस्पतिर्भूयस्कृदस्यग्निना विश्वाषाट्प्रजापतिर्मनसा कृत्तिका मधुश्च समिद्दिशान्द्वादश ॥ १२ ॥ रश्मिरसि प्रति धेनुरसि स्तनयित्नुसनिरस्यादित्यानाꣳ सप्तत्रिꣳशत् ॥ ३७ ॥ रश्मिरसि को अद्य युङ्क्ते ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥

ॐ

ॐ नमः परमात्मने

कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ चतुर्थकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः । या त इषुश्शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय । या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताऽभि चाकशीहि । यामिषुङ्गिरिशन्त हस्ते ॥ १ ॥ बिभर्ष्यस्तवे । शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् । शिवेन वचसा त्वा गिरिशाऽच्छा वदामसि । यथा नस्सर्वमिज्जगदयख्ष्मꣳ सुमना असत् । अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीꣴश्च सर्वाञ्जंभयन्थ्सर्वाश्च यातुधान्यः । असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः । ये चेमाꣳ रुद्रा अभितो दिख्षु ॥ २ ॥ श्रितास्सहस्रशोऽवैषाꣳ हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनङ्गोपा अदृशन्नदृशन्नुदहार्यः । उतैनवूँविश्वा भूतानि स दृष्टो मृडयाति नः । नमो अस्तु नीलग्रीवाय सहस्राख्षाय मीढुषे । अथो ये अस्य सत्वानोऽहन्तेभ्योऽकरन्नमः । प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः ॥ ३ ॥ परा ता भगवो वप । अवतत्य धनुस्त्वꣳ सहस्राख्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नस्सुमना भव । विज्यन्धनुः कपर्दिनो विशल्यो बाणवाꣳ उत । अनेशन्नस्येषव आभुरस्य निषङ्गथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान् विश्वतस्त्वमयख्ष्मया परि ब्भुज । नमस्ते अस्त्वायुधायाऽनातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने । परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवाऽऽरे अस्मन्नि धेहि तम् ॥ ४ ॥ हस्ते दिख्ष्विषव उभाभ्यान्द्वाविꣳशतिश्च ॥ १ ॥

नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृख्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमस्सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्राया-ऽऽतताविने ख्षेत्राणां पतये नमो नमस्सूतायाऽहन्त्याय वनानां पतये नमो नमो ॥ ५ ॥ रोहिताय स्थपतये वृख्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कख्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ॥ ६ ॥ वनानां पतये नमो नम एकान्न त्रिꣳशच्च ॥ २ ॥

नमस्सहमानाय निव्याधिने आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायाऽरण्यानां पतये नमो नमस्सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नमः ॥ ७ ॥ इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विद्ध्यद्भ्यश्च वो नमो नम आसीनेभ्यश्शयानेभ्यश्च वो नमो नमस्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमस्सभाभ्यस्सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥ ८ ॥ कुलुञ्चानां पतये नमो नमोऽश्वपतिभ्यस्त्रीणि च ॥ ३ ॥

नम आव्याधिनीभ्यो विविद्ध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो ॥ ९ ॥ रथपतिभ्यश्च वो नमो नमस्सेनाभ्यस्सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यस्सङ्ग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यश्श्वनिभ्यश्च वो नमो नमश्श्वभ्यश्श्वपतिभ्यश्च वो नमः ॥ १० ॥ रथेभ्यश्श्वपतिभ्यश्च द्वे च ॥ ४ ॥

नमो भवाय च रुद्राय च नमश्शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमस्सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सँवृद्ध्वने च ॥ ११ ॥ नमो अग्रियाय च प्रथमाय च नम आशवे चाऽजिराय च नमश्शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चाऽवस्वन्याय च नमस्स्रोतस्याय च द्वीप्याय च ॥ १२ ॥ सँवृद्ध्वने च पञ्चविंशतिश्च ॥ ५ ॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चाऽपरजाय च नमो मद्ध्यमाय चाऽपगल्भाय च नमो जघन्याय च बुद्धियाय च नमस्सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमश्श्लोक्याय चाऽवसान्याय च नमो वन्याय च कक्ष्याय च नमश्श्रवाय च प्रतिश्रवाय च ॥ १३ ॥ नम आशुषेणाय चाऽऽशुरथाय च नमश्शूराय चाऽवभिन्दते

च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमश्श्रुताय च श्रुतसेनाय च ॥ १४ ॥
प्रतिश्रवाय च पञ्चविꣳशतिश्च ॥ ६ ॥

नमो दुन्दुभ्याय चाऽऽहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चाऽऽयुधिने च नमस्स्वायुधाय च सुधन्वने च नमस्स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमस्सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च ॥ १५ ॥ नमः कूप्याय चाऽवट्याय च नमो वर्ष्याय चाऽवर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ १६ ॥ वैशन्ताय च त्रिꣳशच्च ॥ ७ ॥

नमस्सोमाय च रुद्राय च नमस्ताम्राय चाऽरुणाय च नमश्शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमश्शंभवे च मयोभवे च नमश्शङ्कराय च मयस्कराय च नमश्शिवाय च शिवतराय च ॥ १७ ॥ नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चाऽवार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चाऽऽलाद्याय च नमश्शष्प्याय च फेन्याय च नमस्सिकत्याय च प्रवाह्याय च ॥ १८ ॥ शिवतराय च त्रिꣳशच्च ॥ ८ ॥

नम इरिण्याय च प्रपथ्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमश्शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च ॥ १९ ॥ नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाऽभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥ २० ॥
उलप्याय च त्रयस्त्रिꣳशच्च ॥ ९ ॥

द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषाङ्किञ्चनाऽऽममत् । या ते रुद्र शिवा तनूश्शिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे । इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिम् । यथा नश्शमसद्द्विपदे चतुष्पदे विश्वं पुष्टङ्ग्रामे अस्मि- ॥ २१ ॥ न्ननातुरम् । मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छञ्च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ । मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो ॥ २२ ॥ रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय

सुम्नम॒स्मे तें अस्तु । रक्षा॑ च नो॒ अधिं च देव ब्रूह्यधा॑ च न॒श्शर्मं यच्छ द्वि॒बर्‌हाः॑ । स्तुहि ॥ २३ ॥ श्रुतङ्गर्त॒सदं॒य्युवा॑नं मृगन्न भी॒ममु॑पह॒त्नुमु॒ग्रम् । मृडा ज॑रि॒त्रे रुं॒द्र स्तवा॑नो अ॒न्यन्तें अ॒स्मन्नि वपन्तु सेना॑ः । परिं णो रु॒द्रस्यं हे॒तिर्वृ॑णक्तु परिं त्वे॒षस्यं दुर्म॒तिरं॑घा॒योः । अवं स्थि॒रा म॒घवं॑द्भ्यस्तनुष्व मीढ्वं॑स्तो॒काय॒ तनं॑याय मृडय । मीढुं॑ष्टम॒ शिवंतम शि॒वो नं॑स्सु॒मना॑ भव । प॒रमे वृ॒क्ष आयुं॑धन्नि॒धाय॒ कृत्तिं॒व्वसा॑न॒ आ चं॑र॒ पिना॑कं ॥ २४ ॥ बिभ्र॒दा गं॑हि । विकिं॑रिद॒ विलों॑हित॒ नमं॑स्ते अस्तु भगवः । यास्तें स॒हस्रं॒ हे॒तयो॒ऽन्यम॒स्मन्नि वपन्तु ताः । स॒हस्रा॑णि सहस्र॒धा बा॑हु॒वोस्तवं हे॒तयः॑ । तासा॒मीशा॑नो भगवः परा॒चीना॒ मुखा॑ कृधि ॥ २५ ॥ अ॒स्मिं॒स्त॒नुवं॒स्स्तु॒हि पिना॑क॒मेका॑न्न त्रि॒ꣳशच्च ॥ १० ॥

स॒हस्रा॑णि सहस्र॒शो ये रु॒द्रा अधि॒ भूम्या॑म् । तेषा॑ꣳ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि । अ॒स्मिन्म॑ह॒त्य॑र्ण॒वें॑ऽन्तरिं॑क्षे भ॒वा अधिं । नील॑ग्रीवाश्शिति॒कण्ठा॑श्श॒र्वा अ॒धः क्ष॑माच॒राः । नील॑ग्रीवाश्शिति॒कण्ठा॒ दिव॑ꣳ रु॒द्रा उप॑श्रिताः । ये वृ॒क्षेषुं स॒स्पिञ्ज॑रा॒ नील॑ग्रीवा॒ विलों॑हिताः । ये भूताना॒मधिं॑पतयो विशि॒खासः॑ कप॒र्दिनः॑ । ये अन्ने॑षु वि॒विद्ध्यं॑न्ति॒ पात्रे॑षु॒ पिबं॑तो॒ जनान्॒ । ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा य॒व्युधः॑ । ये ती॒र्थानि॑ ॥ २६ ॥ प्र॒चरं॑न्ति सृ॒काव॑न्तो निष॒ङ्गिणः॑ । य ए॒ताव॑न्तश्च॒ भूया॑ꣳसश्च॒ दिशों रु॒द्रा वि॑तस्थि॒रे । तेषा॑ꣳ सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि । नमों रु॒द्रेभ्यो॒ ये पृ॑थि॒व्यां॑य्यें॑ऽन्तरिं॑क्षे॒ ये दि॒वि येषा॒मन्नं॒व्वातों व॒र्‌षमिषं॑व॒स्तेभ्यो॒ दश॒ प्राची॒र्दशं॑ दक्षि॒णा दशं॑ प्र॒तीची॒र्दशोदी॑ची॒र्दशो॒र्द्ध्वास्तेभ्यो॒ नम॒स्ते नों मृडयन्तु॒ ते यन्द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तं॒व्वो॒ जम्भें दधामि ॥ २७ ॥ ती॒र्थानि॒ यश्च॒ षट्च॑ ॥ ११ ॥

नमं॑स्ते रुद्र॒ नमो॒ हिरं॑ण्यबाहवे॒ नम॒स्सहं॑मानाय॒ नमं आव्याधिनी॑भ्यो॒ नमों भ॒वाय॒ नमों ज्ये॒ष्ठाय॒ नमां दुन्दु॒भ्याय॒ नम॒स्सोमा॑य॒ नमं इरि॒ण्या॑य॒ द्रापें स॒हस्रा॒ण्येका॑दश ॥ ११ ॥ नमं॑स्ते रुद्र॒ नमों भ॒वाय॒ द्रापें स॒प्तविं॑ꣳशतिः ॥ २७ ॥ नमं॑स्ते रुद्र॒ तं॒व्वो॒ जम्भें दधामि ॥

॥ हरिः॑ ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ चतुर्थकाण्डे षष्ठप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

अश्मन्नूर्जं पर्वते शिश्रियाणाँव्वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृतान्तान्न इषमूर्जन्धत्त मरुतस्सꣳरराणाः । अश्मꣳस्ते क्षुदमुन्ते शुगृच्छतु यन्द्विष्मः । समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव । हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव । उप ॥ १ ॥ ज्मन्नुप वेतसेऽवत्तरन्नदीष्वा । अग्ने पित्तमपामसि । मण्डूकि ताभिरा गहि सेमन्नो यज्ञम् । पावकवर्णꣳ शिवङ्कृधि । पावक आ चितयन्त्या कृपा । क्षामन्रुरुच उषसो न भानुना । तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः । अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् ॥ २ ॥ वक्षि यक्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ वह । उप यज्ञꣳ हविश्च नः । अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव । नृषदे वड-॥ ३ ॥ फ्सुषदे वड्वनसदे वड्बर्हिषदे वट्थ्सुवर्विदे वट् । ये देवा देवानाँय्यज्ञिया यज्ञियानाꣳ सँव्वथ्सरीणमुप भागमासते । अहुतादो हविषो यज्ञे अस्मिन्थ्स्वयञ्जुहुदध्वं मधुनो घृतस्य । ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य । येभ्यो नर्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु । प्राणदा ॥ ४ ॥ अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव । अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वन्न्यत्रिणम् । अग्निर्नो वꣳसते रयिम् । सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठस्स्वस्ति । अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥ ५ ॥ उप देवान् वट्प्राणदाश्चतुश्चत्वारिꣳशच्च ॥ १ ॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः । स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेश । विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक् । तेषामिष्टानि समिषा मदन्ति यत्र सप्तऋषीन्पर एकमाहुः । यो नः पिता जनिता यो विधाता यो नस्सतो अभ्या सज्जजान । ॥ ६ ॥ यो देवानान्नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या । त आऽयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि । न तँव्विदाथ य इदञ्जजानाऽन्यद्युष्माकमन्तरं भवाति । नीहारेण प्रावृता जल्प्या चाऽसुतृप उक्थशासश्चरन्ति । परो दिवा पर एना ॥ ७ ॥ पृथिव्या परो देवेभिरसुरैर्गुहा यत् । कꣳ

स्विद्गर्भं प्रथमन्दध्र आपो यत्र देवास्समगच्छन्त विश्वे । तमिद्गर्भं प्रथमन्दध्र आपो यत्र देवास्समगच्छन्त विश्वे । अजस्य नाभावध्येकमर्पितय्यँस्मिन्निदव्विँश्वं भुवनमधि श्रितम् । विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीना- ॥ ८ ॥ मपाङ्गर्भव्व्यँदधात्पुरुत्रा । चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने । यदेदन्ता अददृꣳहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सं बाहुभ्यान्नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः । किꣳ स्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्किमासीत् । यदी भूमिञ्जनय- ॥ ९ ॥ न्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः । किꣳ स्विद्वनङ्क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्न् । या ते धामानि परमाणि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावस्स्वयय्यँजस्व तनुवञ्जुषाणः । वाचस्पतिव्विँश्वकर्माणमूतये ॥ १० ॥ मनोयुजव्वाँजे अद्या हुवेम । स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा । विश्वकर्मन् हविषा वावृधानस्स्वयय्यँजस्व तनुवञ्जुषाणः । मुह्यन्त्वन्ये अभितस्सपत्ना इहाऽस्माकं मघवा सूरिरस्तु । विश्वकर्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम् । तस्मै विशस्समनमन्त पूर्वीरयमुग्रो विहव्यो यथाऽसत् । समुद्राय वयुनाय सिन्धूनां पतये नमः । नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ हविः ॥ ११ ॥ जजानैनौषधीनां भूमिञ्जनयन्नूतये नमो नव च ॥ २ ॥

उदेनमुत्तरान्नयाऽग्ने घृतेनाऽऽहुत । रायस्पोषेण सꣳ सृज प्रजया च धनेन च । इन्द्रेमं प्रतराङ्कृधि सजातानामसद्वशी । समेनव्वँर्चसा सृज देवेभ्यो भागधा असत् । यस्य कुर्मो हविर्गृहे तमग्ने वर्द्धया त्वम् । तस्मै देवा अधि ब्रवन्नयञ्च ब्रह्मणस्पतिः । उदु त्वा विश्वे देवा ॥ १२ ॥ अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमस्सुप्रतीको विभावसुः । पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपाऽमतिन्दुर्मतिं बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्तीः । रायस्पोषे अधि यज्ञो अस्थात्समिद्धे अग्नावधि मामहानः । उक्थपत्र ईड्यो गृभीतस्तप्तङ्घर्मं परिगृह्याऽयजन्त । ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे । देवश्रीश्श्रीमणाश्शतपयाः ॥ १३ ॥ परिगृह्य देवा यज्ञमायन्न् । सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाꣳ अजस्रम् । तस्य पूषा प्रसवय्याँति देवस्सम्पश्यन्विश्वा भुवनानि गोपाः । देवा देवेभ्यो अद्ध्वर्यन्तो अस्थुर्वीतꣳ शमित्रे शमिता यजद्ध्यै । तुरीयो यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम् । विमान एष दिवो मद्ध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् । स विश्वाचीरभि ॥ १४ ॥ चष्टे घृताचीरन्तरा पूर्वमपरञ्च केतुम् । उक्षा समुद्रो अरुणस्सुपर्णः पूर्वस्य योनिं पितुरा विवेश । मद्ध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ । इन्द्रव्विँश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतमꣳ रथीनाव्वाँजानाꣳ सत्पतिं पतिम् । सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत् । वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् ।

अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाऽधराꣳ अकः । उद्ग्राभश्च निग्राभश्च ब्रह्म देवा अवीवृधन्न् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥ १५ ॥ देवाश्शतपया अभि वाजस्य षड्विꣳशतिश्च ॥ ३ ॥

आशुश्शिशानो वृषभो न युद्ध्मो घनाघनः ख्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरश्शतꣳ सेना अजयथ्साकमिन्द्रः । सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तथ्सहद्ध्वँय्युधो नर इषुहस्तेन वृष्णा । स इषुहस्तैस्स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन । सꣳसृष्टजिथ्सोमपा बाहुशर्द्ध्यूर्द्ध्वधन्वा प्रतिहिताभिरस्ता । बृहस्पते परि दीया ॥ १६ ॥ रथेन रख्षोहाऽमित्राꣳ अपबाधमानः । प्रभञ्जन्थ्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् । गोत्रभिदङ्गोविदँव्वज्रबाहुञ्जयन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजाता अनु वीरयद्ध्वमिन्द्रꣳ सखायोऽनु सꣳ रभद्ध्वम् । बलविज्ञायस्स्थविरः प्रवीरस्सहस्वान् वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् । अभि गोत्राणि सहसा गाहमानोऽदायो ॥ १७ ॥ वीरश्शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुद्ध्योऽस्माकꣳ सेना अवतु प्र युथ्सु । इन्द्र आसान्नेता बृहस्पतिर्दख्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रे । इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्द्ध उग्रम् । महामनसां भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् । अस्माकमिन्द्रस्समृतेषु द्ध्वजेष्वस्माकँय्या इषवस्ता जयन्तु । ॥ १८ ॥ अस्माकँव्वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु । उद्धर्षय मघवन्नायुधान्युथ्सत्वनां मामकानां महाꣳसि । उद्वृत्रहन्वाजिनाँव्वाजिनान्युद्रथानाञ्जयतामेतु घोषः । उप प्रेत जयता नरस्स्थिरा वस्सन्तु बाहवः । इन्द्रो वश्शर्म यच्छत्वनाधृष्या यथाऽसथ । अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता । गच्छाऽमित्रान्प्र ॥ १९ ॥ विश मैषाङ्कञ्चनोच्छिषः । मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाऽभि वस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तन्त्वामनु मदन्तु देवाः । यत्र बाणास्संपतन्ति कुमारा विशिखा इव । इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु ॥ २० ॥ दीयाऽदायो जयन्त्वमित्रान्प्र चत्वारिꣳशच्च ॥ ४ ॥

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह । विश्वा आशा दीद्यानो वि भाह्यूर्जन्नो धेहि द्विपदे चतुष्पदे । क्रमद्ध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः । दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराद्ध्वम् । पृथिव्या अहमुदन्तरिख्षमाऽरुहमन्तरिख्षाद्दिवमाऽरुहम् । दिवो नाकस्य पृष्ठाथ्सुवर्ज्योतिरगा-॥ २१ ॥ महम् । सुवर्यन्तो नाऽपेख्षन्त आ द्याꣳ रोहन्ति रोदसी । यज्ञँय्ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे । अग्ने प्रेहि प्रथमो देवयताञ्चख्षुर्देवानामुत मर्त्यानाम् । इयख्षमाणा भृगुभिस्सजोषास्सुवर्यन्तु यजमानास्स्वस्ति । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा ख्षामा रुक्मो अन्तर्वि भाति देवा अग्निन्धारयन्द्रविणोदाः । अग्ने सहस्राख्ष ॥ २२ ॥ शतमूर्द्धञ्छतन्ते प्राणास्सहस्रमपानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते

विधेम वाजाय स्वाहा । सुपर्णोऽसि गरुत्मान्पृथिव्याꣳ सीद पृष्ठे पृथिव्यास्सीद भासाऽन्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृꣳह । आजुह्वानस्सुप्रतीकः पुरस्तादग्ने स्वाँय्योनिमा सीद साध्या । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा ॥ २३ ॥ यजमानश्च सीदत । प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाꣳ शश्वन्त उप यन्ति वाजाः । विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे । ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहँव्वृणे सुमतिँव्विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां ॥ २४ ॥ पयसा महीङ्गाम् । सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि । सप्त होत्रास्सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन । ईदृङ्चाऽन्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चाऽत्यꣳहाः । ॥ २५ ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चाऽन्त्यमित्रश्च दूरेअमित्रश्च गणः । ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः । ईदृक्षास एतादृक्षास ऊ षु णस्सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च संमितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमँय्यजमानन्दैवीश्च विशो मानुषीश्चाऽनुवर्त्मानो भवन्तु ॥ २६ ॥ अगाꣳ सहस्राक्ष देवास्सहस्रधारामत्यꣳहा अनुवर्त्मानिष्षोडश च ॥ ५ ॥

जीमूतस्येव भवति प्रतीकँय्यद्वर्मी याति समदामुपस्थे । अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु । धन्वना गा धन्वनाऽऽजिञ्जयेम धन्वना तीव्रास्समदो जयेम । धनुश्शत्रोरपकामङ्कृणोति धन्वना सर्वाः प्रदिशो जयेम । वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताऽधि धन्व- ॥ २७ ॥ ञ्ज्या इयꣳ समने पारयन्ती । ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून् विध्यताꣳ सँव्विदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् । बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य । इषुधिस्सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः । रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं ॥ २८ ॥ पनायत मनः पश्चादनु यच्छन्ति रश्मयः । तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिस्सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूꣳरनपव्ययन्तः । रथवाहनꣳ हविरस्य नाम यत्राऽऽयुधन्निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः । स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितश्शक्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्रास्सतोवीरा उरवो व्रातसाहाः । ब्राह्मणासः ॥ २९ ॥ पितरस्सोम्यासश्शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत । सुपर्णँव्वस्ते मृगो अस्या दन्तो गोभिस्सन्नद्धा पतति प्रसूता । यत्रा नरस्सञ्च वि च द्रवन्ति तत्रा-

ऽस्मभ्यमिषवश्शर्म यꣳसन् । ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु नस्तनूः । सोमो अधि ब्रवीतु नोऽदिति- ॥ ३० ॥ श्शर्म यच्छतु । आ जङ्घन्ति सान्वेषाञ्जघनाꣳ उप जिघ्नते । अश्वाजनि प्रचेत-सोऽश्वान्त्समत्सु चोदय । अहिरिव भोगैः पर्येति बाहुञ्ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसं परि पातु विश्वतः । वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरण-स्सुवीरः । गोभिस्सन्नद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि । दिवः पृथिव्याः पर्यो- ॥ ३१ ॥ ज उद्धृतँव्वनस्पतिभ्यः पर्याभृतꣳ सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथँय्यज । इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः । सेमान्नो हव्यदाति-ञ्जुषाणो देव रथ प्रति हव्या गृभाय । उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुताँव्विष्ठितञ्जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूरा- ॥ ३२ ॥ द्दवीयो अप सेध शत्रून् । आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः । अप प्रोथ दुन्दुभे दुच्छुनाꣳ इत इन्द्रस्य मुष्टिरसि वीडयस्व । आऽमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३३ ॥ धन्वन्महिमानं ब्राह्मणासोऽदितिः पृथिव्याः परि दूरादेकचत्वारिꣳशच्च ॥ ६ ॥

यदक्रन्दः प्रथमञ्जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उप-स्तुत्यं महि जातन्ते अर्वन् । यमेन दत्तन्त्रित एनमायुनगिन्द्र एणं प्रथमो अद्ध्यतिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वँव्वसवो निरतष्ट । असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्त ॥ ३४ ॥ आहुस्ते त्रीणि दिवि बन्धनानि । त्रीणि त आहु-र्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तस्समुद्रे । उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमञ्जनि-त्रम् । इमा ते वाजिन्नवमार्जनानीमा शफानाꣳ सनितुर्निधाना । अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः । आत्मानन्ते मनसाऽऽरादजानामवो दिवा ॥ ३५ ॥ पतयन्तं पतङ्गम् । शिरो अपश्यं पथिभिस्सुगेभिररेणुभिर्जेहमानं पतत्रि । अत्रा ते रूपमुत्तममपश्यञ्जिगीषमाणमिष आ पदे गोः । यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः । अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ॥ ३६ ॥ ते । हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् । देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अद्ध्यतिष्ठत् । ईर्मान्तासस्सिलिकमद्ध्यमासस्सꣳ शूरणासो दिव्यासो अत्याः । हꣳसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः । तव शरीरं पतयिष्ण्वर्वन्तव चित्तँव्वात इव ध्रजी-मान् । तव शृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति । उप ॥ ३७ ॥ प्राऽगाच्छसनँव्वा-ज्यर्वा देवद्रीचा मनसा दीद्ध्यानः । अजः पुरो नीयते नाभिरस्याऽनु पश्चात्कवयो यन्ति रेभाः । उप प्राऽगात्परमँय्यत्सधस्थमर्वाꣳ अच्छा पितरं मातरञ्च । अद्या देवाञ्जुष्टतमो हि गम्या अथाऽऽ शास्ते दाशुषे वार्याणि ॥ ३८ ॥ विपृक्तो दिवा वीर्यमुपैकान्न चत्वारिꣳशच्च ॥ ७ ॥

मा नो मित्रो वरुणो अर्यमाऽऽयुरिन्द्र ऋभुक्षा मरुतः परि ख्यन्न् । यद्वाजिनो देवजातस्य सप्तेः प्रवख्ष्यामो विदथे वीर्याणि । यन्निर्णिजा रेक्णसा प्रावृतस्य रातिङ्गृभीतां मुखतो नयन्ति । सुप्राङ्जो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः । एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः । अभिप्रियँय्यत्पुरोडाशमर्वता त्वष्टे- ॥ ३९ ॥ देनꣳ सौश्रवसाय जिन्वति । यद्धविष्यमृतुशो देवयानन्त्रिर्मानुषाः पर्यश्वन्नयन्ति । अत्रा पूष्णः प्रथमो भाग एति यज्ञन्देवेभ्यः प्रतिवेदयन्नजः । होताऽद्ध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः । तेन यज्ञेन स्व-रङ्कृतेन स्विष्टेन वख्षणा आ पृणद्ध्वम् । यूपव्रस्का उत ये यूपवाहाश्चषालँय्ये अश्वयूपाय तख्षति । ये चाऽर्वते पचनꣳ संभरन्त्युतो ॥ ४० ॥ तेषामभिगूर्तिर्न इन्वतु । उप प्राऽगाथ्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनँव्विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् । यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घाऽस्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु । यदश्वस्य क्रविषो ॥ ४१ ॥ मख्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । यद्धस्तयोश्शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु । यदूवद्ध्यमुदरस्याऽपवाति य आमस्य क्रविषो गन्धो अस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु । यत्ते गात्रादग्निना पच्यमानादभि शूलन्निहतस्याऽवधावति । मा तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ४२ ॥ इदुतो क्रविषश्श्रिषथ्सप्त च ॥ ८ ॥

ये वाजिनं परिपश्यन्ति पक्वँय्य ईमाहुस्सुरभिर्निर्हरेति । ये चाऽर्वतो माꣳसभिख्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु । यन्नीख्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्याऽपिधाना चरूणामङ्कास्सूनाः परि भूषन्त्यश्वम् । निक्रमणन्निषदनँव्विवर्तनँय्यच्च पड्बीश-मर्वतः । यच्च पपौ यच्च घासि- ॥ ४३ ॥ जघास सर्वा ता ते अपि देवेष्वस्तु । मा त्वाऽग्निर्द्ध्वनयि-द्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः । इष्टँव्वीतमभिगूर्तँव्वषट्कृतन्तन्देवासः प्रति गृभ्णन्त्य-श्वम् । यदश्वाय वास उपस्तृणन्त्यधीवासँय्या हिरण्यान्यस्मै । सन्दानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति । यत्ते सादे महसा शूकृतस्य पार्ष्णिया वा कशया ॥ ४४ ॥ वा तुतोद । स्रुचेव ता हविषो अद्ध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि । चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्स-मेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त । एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथर्तुः । या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ । मा त्वा तपत् ॥ ४५ ॥ प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत्ते । मा ते गृद्ध्नुरविशस्ताऽतिहाय छिद्रा गात्राण्यसिना मिथू कः ।न वा उ वेतन्म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभिस्सुगेभिः । हरी ते युञ्जा पृषती अभूतामुपाऽस्थाद्वाजी धुरि रासभस्य । सुगव्यन्नो वाजी स्वश्व्यं पुꣳसः पुत्राꣳ उत

विश्वापुषꣳ रयिम् । अनागास्त्वन्नो अदितिः कृणोतु क्षत्रन्नो अश्वो वनताꣳ हविष्मान् ॥ ४६ ॥
घासिङ्क्रंशया तपद्रयिन्नर्व च ॥ ९ ॥

अश्मन्नु य इमोदेनमाशुः प्राचीञ्जीमूतस्य यदक्रन्दो मा नो मित्रो ये वाजिनन्नर्व ॥ ९ ॥ अश्मन्मनोयुजं प्राचीमनु शर्म यच्छतु तेषामभिगूर्तिःषट्चत्वारिꣳशत् ॥ ४६ ॥ अश्मन् हविष्मान् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे षष्ठः प्रश्नस्समाप्तः॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ चतुर्थकाण्डे सप्तमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

अग्नाविष्णू सजोषसेमा वर्द्धन्तु वाङ्गिरः । द्युम्नैर्वाजेभिरा गतम् । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपान- ॥ १ ॥ श्च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥ २ ॥ अपानस्तनूश्च मेऽष्टादश च ॥ १ ॥

ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धञ्च मे वृद्धिश्च मे सत्यञ्च मे श्रद्धा च मे जगच्च ॥ ३ ॥ मे धनञ्च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपथञ्च म ऋद्धञ्च म ऋद्धिश्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥ ४ ॥ जगच्चर्द्धिश्चतुर्दश च ॥ २ ॥

शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रञ्च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणञ्च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च ॥ ५ ॥ मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च म ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च

मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेऽनमित्रञ्च मेऽभयञ्च मे सुगञ्च मे शयनञ्च मे सूषा च मे सुदिनञ्च मे ॥ ६ ॥ विश्वञ्च शयनमष्टौ च ॥ ३ ॥

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिद्यञ्च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च ॥ ७ ॥ मे प्रभु च मे बहु च मे भूयश्च मे पूर्णञ्च मे पूर्णतरञ्च मेऽख्षितिश्च मे कूयवाश्च मेऽन्नञ्च मेऽख्षुच्च मे व्रीहयश्च मे यवांश्च मे माषांश्च मे तिलांश्च मे मुद्गाश्च मे खल्वांश्च मे गोधूमांश्च मे मसुरांश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकांश्च मे नीवारांश्च मे ॥ ८ ॥ विभु च मसुराश्चतुर्दश च ॥ ४ ॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे सीसञ्च मे त्रपुश्च मे श्यामञ्च मे लोहञ्च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यञ्च ॥ ९ ॥ मेऽकृष्टपच्यञ्च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तावूँवित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥ १० ॥ कृष्टपच्यञ्चाऽष्टाचत्वारिꣳशच्च ॥ ५ ॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च ॥ ११ ॥ म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिख्षञ्च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ ११ ॥ त्वष्टा च द्यौश्च म एकविꣳशतिश्च ॥ ६ ॥

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च ॥ १३ ॥ मेऽतिग्राह्यांश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयांश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ १४ ॥ ऋतुग्रहाश्च चतुस्त्रिꣳशच्च ॥ ७ ॥

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रञ्च मे हविर्धानञ्च मे गृहाश्च मे सदश्च मे पुरोडाशांश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ १५ ॥ गृहाश्च षोडश च ॥ ८ ॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्करीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतञ्च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥ १६ ॥ दीक्षाऽष्टादश च ॥ ९ ॥

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट्च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट्च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च ॥ १७ ॥ मे वेहच्च मेऽनड्वाश्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पताँव्यानो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पतां मनो यज्ञेन कल्पताँव्वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पताँय्यज्ञो यज्ञेन कल्पताम् ॥ १८ ॥ ऋषभश्च चत्वारिꣳशच्च ॥ १० ॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च ॥ १९ ॥ मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चाऽपिजश्च क्रतुश्च सुवश्च मूर्द्धा च व्यश्नियश्चाऽऽन्त्यायनश्चाऽन्त्यश्च भौवनश्च भुवनश्चाऽधिपतिश्च ॥ २० ॥ त्रयस्त्रिꣳशच्च व्यश्निय एकादश च ॥ ११ ॥

वाजो नस्सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्द्धनसाताविहाऽवतु । विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयस्समिद्धाः । विश्वे नो देवा अवसाऽऽ गमन्तु विश्वमस्तु द्रविणँव्वाजो अस्मे । वाजस्य प्रसवन्देवा रथैर्याता हिरण्ययैः । अग्निरिन्द्रो बृहस्पतिर्मरुतस्सोमपीतये । वाजेवाजेऽवत वाजिनो नो धनेषु ॥ २१ ॥ विप्रा अमृता ऋतज्ञाः । अस्य मद्ध्वः पिबत मादयद्ध्वन्तृप्ता यात पथिभिर्देवयानैः । वाजः पुरस्तादुत मद्ध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति । वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपतिर्भवेयम् । पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम् । पयस्वतीः प्रदिशस्सन्तु मह्यम् । सं मा सृजामि पयसा घृतेन सं मा सृजाम्यप ॥ २२ ॥ ओषधीभिः । सोऽहँव्वाजꣳ सनेयमग्ने । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निन्धारयन्द्रविणोदाः । समुद्रोऽसि नभस्वानार्द्रदानुश्शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि मरुताङ्गणश्शंभूर्मयोभूरभि मा वाहि स्वाहाऽवस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा ॥ २३ ॥ धनेष्वपो दुवस्वाञ्छंभूर्मयोभूरभि मा द्वे च ॥ १२ ॥

अग्निय्युंनज्मि शवसा घृतेन दिव्यꣳ सुपर्णव्वयसा बृहन्तम् । तेन वयं पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे । इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने । ताभ्यां पतेम सुकृतामु लोकय्यत्रर्षयः प्रथमजा ये पुराणाः । चिदसि समुद्रयोनिरिन्दुर्दक्षश्श्येन ऋतावा । हिरण्यपक्षश्शकुनो भुरण्युर्महान्थ्सधस्थे ध्रुव ॥ २४ ॥ आ निषत्तः । नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्द्धन्नधि तिष्ठसि श्रितः । समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते । उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याऽवत । दिवो मूर्द्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुश्शर्म सप्रथा नमस्पथे । येनर्षयस्तपसा सत्र- ॥ २५ ॥ मासतेन्धाना अग्निꣳ सुवराभरन्तः । तस्मिन्नहन्नि दधे नाके अग्निमेतय्यमाहुर्मनवस्स्तीर्णबर्हिषम् । तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकङ्गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः । आ वाचो मद्ध्यमरुहद्भुरण्युरयमग्निस्सत्पतिश्चेकितानः । पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदङ्कृणुते ॥ २६ ॥ ये पृतन्यवः । अयमग्निर्वीरतमो वयोधास्सहस्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानस्सरिरस्य मद्ध्य उप प्र यात दिव्यानि धाम । सं प्र च्यवद्ध्वमनु सं प्र याताऽग्ने पथो देवयानान्कृणुद्ध्वम् । अस्मिन्थ्सधस्थे अद्ध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत । येना सहस्रव्वहसि येनाऽग्ने सर्ववेदसम् । तेनेमय्यज्ञन्नो वह देवयानो य ॥ २७ ॥ उत्तमः । उद्बुद्ध्यस्वाऽग्ने प्रति जागृह्येनमिष्टापूर्ते सꣳ सृजेथामयञ्च । पुनः कृण्वꣳस्त्वा पितरय्युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम् । अयन्ते योनिरृत्वियो यतो जातो अरोचथाः । तञ्जानन्नग्न आ रोहाऽथा नो वर्द्धया रयिम् ॥ २८ ॥ ध्रुवस्सत्रङ्कृणुते यस्सप्तत्रिꣳशच्च ॥ १३ ॥

ममाऽग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तनुवं पुषेम । मह्यन्नमन्तां प्रदिशश्चतस्रस्त्वयाऽद्ध्यक्षेण पृतना जयेम । मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः । ममाऽन्तरिक्षमुरु गोपमस्तु मह्यव्वातः पवताङ्कामे अस्मिन् । मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः । दैव्या होतारा वनिषन्त ॥ २९ ॥ पूर्वेऽरिष्टास्स्याम तनुवा सुवीराः । मह्यय्यजन्तु मम यानि हव्याऽऽकूतिस्सत्या मनसो मे अस्तु । एनो मा नि गाङ्कतमच्चनाऽहव्विश्वे देवासो अधि वोचता मे । देवीष्षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयद्ध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् । अग्निर्मन्युम्प्रतिनुदन्पुरस्ता- ॥ ३० ॥ ददब्धो गोपाः परि पाहि नस्त्वम् । प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषाञ्चित्तं प्रबुधा वि नेशत् । धाता धातृणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहम् । इमय्यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानन्न्यर्थात् । उरुव्यचा नो महिषश्शर्म यꣳसदस्मिन् हवे पुरुहूतः पुरुक्षु । स नः प्रजायै हर्यश्व मृडयेन्द्र मा ॥ ३१ ॥ नो रीरिषो मा परा दाः । ये नस्सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रञ्चेत्तारमधिराजमक्रन् । अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिद-

श्वजिद्यः । इमन्नो यज्ञवृँविहवे जुषस्वाऽस्य कुर्मो हरिवो मेदिनन्त्वा ॥ ३२ ॥ वनिषन्त पुरस्तान्मा त्रिचत्वारिꣳशच्च ॥ १४ ॥

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवस्समिन्धते । विश्वस्यावृँविशि प्रविविशिवाꣳसमीमहे स नो मुञ्चत्वꣳहसः । यस्येदम्प्राणन्निमिषद्यदेजति यस्य जातञ्जनमानञ्च केवलम् । स्तौम्यग्निन्नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः । इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नस्तोमा उप मामुपागुः । यो दाशुषस्सुकृतो हवमुप गन्ता ॥ ३३ ॥ स नो मुञ्चत्वꣳहसः । यस्सङ्ग्रामन्नयति सँवशी युधे यः पुष्टानि सꣳसृजति त्रयाणि । स्तौमीन्द्रन्नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः । मन्वे वाँ मित्रावरुणा तस्य वित्तꣳ सत्यौजसा दृꣳहणा यन्नुदेथे । या राजानꣳ सरथँय्याथ उग्रा ता नो मुञ्चतमागसः । यो वाꣳ रथ ऋजुरश्मिस्सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन् । स्तौमि ॥ ३४ ॥ मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः । वायोस्सवितुर्विदथानि मन्महे यावाँत्मन्वद्बिभृतो यौ च रक्षतः । यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः । उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् । स्तौमि वायुꣳ सवितारन्नाथितो जोहवीमि तौ नो मुञ्चतमागसः । रथीतमौ रथीनामह्व ऊतये शुभङ्गमिष्ठौ सुयमेभिरश्वैः । ययो- ॥ ३५ ॥ र्वान्देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः । यदयातँवहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ । स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः । मरुताँ मन्वे अधि नो ब्रुवन्तु प्रेमाँवाचवृँविश्वामवन्तु विश्वे । आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः । तिग्ममायुधँवीडितꣳ सहस्वद्दिव्यꣳ शर्द्धः ॥ ३६ ॥ पृतनासु जिष्णु । स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः । देवानाँ मन्वे अधि नो ब्रुवन्तु प्रेमाँवाचवृँविश्वामवन्तु विश्वे । आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः । यदिदं माऽभिशोचति पौरुषेयेण दैव्येन । स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः । अनु नोऽद्याऽनुमतिर- ॥ ३७ ॥ न्विदनुमते त्वँवैश्वानरो न ऊत्या पृष्टो दिवि । ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतावँसूनाम् । स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः । उर्वी रोदसी वरिवः कृणोतङ्क्षेत्रस्य पत्नी अधि नो ब्रूयातम् । स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः । यत्ते वयं पुरुषत्रा यविष्ठाऽविद्वाꣳसश्चकृमा कच्चना- ॥ ३८ ॥ ऽऽगः । कृधी स्वस्माꣳ अदितेरनागा व्येनाꣳसि शिश्रथो विष्वगग्ने । यथा ह तद्वसवो गौर्यञ्चित्पदि षितामगुञ्चता यजत्राः । एवा त्वमस्मत्प्र मुञ्चा व्यꣳहः प्राऽतार्यग्ने प्रतरान्न आयुः ॥ ३९ ॥ गन्ता दूषयन्थ्स्तौमि ययोश्शर्द्धोऽनुमतिरनु चन चतुस्त्रिꣳशच्च ॥१५॥

अग्नेर्मन्वे यस्येदमिन्द्रस्य यस्सङ्ग्राममिन्द्रꣳ स नो मुञ्चत्वꣳहसः । मन्वे वान्ता नो मुञ्चतमागसः । यो वाँवृँवायोरुप रथीतमौ यदयातमश्विनौ तौ नो मुञ्चतमागसः । मरुतान्तिग्मं मरुतो देवानाय्यँदिदवृँविश्वान्ते नो मुञ्चन्त्वेनसः । अनु न उर्वी द्यावापृथिवी ते नो मुञ्चतमꣳहसो यत्ते ॥ चतुरꣳहसष्षडागसश्चतुरेनसो द्विरꣳहसः ॥

अ॒ग्नाविष्णू ज्यैष्ठ्यच॑ꣳ श॒श्चोक्र्वाऽश्मा चा॒ऽग्निश्चा॒ऽꣳशुश्चे॒द्ध्मश्चा॒ऽग्निश्चं घ॒र्मो गर्भा॒श्चैको च॒ वाजो नो अ॒ग्निर्युनज्मि॒ ममा॑ऽग्ने अ॒ग्नेर्मन्वे॒ पञ्च॑दश ॥ १५ ॥ अ॒ग्नाविष्णू अ॒ग्निश्च॒ वाजो नो॒ अद॑ब्धो गो॒पा नव॑त्रिꣳशत् ॥ ३९ ॥ अ॒ग्नाविष्णू प्र॒त॒रान्न॒ आयुः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां चतुर्थकाण्डे सप्तमः प्रश्नस्समाप्तः ॥

॥ इति चतुर्थं काण्डम् ॥



## ॥ चतुर्थकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ४६ | २२९३ |
| २ | ११ | ४८ | २४९८ |
| ३ | १३ | ३६ | १८४४ |
| ४ | १२ | ३७ | १८८७ |
| ५ | ११ | २७ | १२३४ |
| ६ | ९ | ४६ | २३३१ |
| ७ | १५ | ३९ | २००८ |

## ॥ संहतसङ्ख्या ॥

| | | | |
|---|---|---|---|
| ७ | ८२ | २७९ | १४०९५ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ पञ्चमं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्री॒गु॒रु॒भ्यो॒ न॒मः॒ हरिः ओ(४)म् ॥

सा॒वि॒त्राणि॑ जुहोति॒ प्रसू॑त्यै चतुर्गृही॒तेन॑ जुहोति॒ चतु॑ष्पादः प॒शव॑ः प॒शूने॒वाऽव॑ रुन्धे॒ चत॑स्रो॒ दिशो॑ दि॒क्ष्वे॑व प्रति॑ तिष्ठति॒ छन्दा॑ꣳसि दे॒वेभ्योऽपा॑ऽक्राम॒न्न वो॑ऽभा॒गानि॑ ह॒व्यँव्व॑क्ष्याम॒ इति॒ तेभ्य॑ ए॒तच्च॑तुर्गृही॒तम॑धारयन्पुरोनुवा॒क्या॑यै या॒ज्या॑यै दे॒वता॑यै वषट्का॒राय॒ यच्च॑तुर्गृही॒तञ्जु॑होति॒ छन्दा॑ꣳ-स्ये॒व तत्प्री॑णाति॒ तान्य॑स्य प्री॒तानि॑ दे॒वेभ्यो॑ ह॒व्यँव्व॑हन्ति॒ यङ्का॒मये॑त ॥ १ ॥ पापी॑यान्थ्स्या॒दित्ये॑कैं-क॒न्तस्य॑ जुहुया॒दाहु॑तीभि॒रे॒वैन॒मप॑ गृह्णाति॒ पापी॑यान्भवति॒ यङ्का॒मये॑त॒ वसी॑यान्थ्स्या॒दिति॒ सर्वा॑णि॒ तस्या॑ऽनु॒द्रुत्य॑ जुहुया॒दाहु॑त्यै॒वैन॑म॒भि क्र॑मयति॒ वसी॑यान्भव॒त्यथो॑ य॒ज्ञस्यै॒वैषाऽभिक्रा॑न्ति॒रेति॒ वा ए॒ष य॑ज्ञमु॒खादृद्ध्या॒ यो॑ऽग्ने॒र्दे॒वता॑या॒ एत्य॒ष्टाव॒ेतानि॑ सावि॒त्राणि॑ भवन्त्य॒ष्टाक्ष॑रा गाय॒त्री गा॑य॒त्रो॑- ॥ २ ॥ ऽग्निस्तेनै॒व य॑ज्ञमु॒खादृद्ध्या॑ अ॒ग्नेर्दे॒वता॑यै॒ नैत्य॒ष्टौ सा॑वि॒त्राणि॑ भव॒न्त्याहु॑तिर्न॒वमी त्रि॒वृत॑मे॒व य॑ज्ञमु॒खे वि या॑तयति॒ यदि॑ का॒मये॑त॒ छन्दा॑ꣳसि यज्ञयश॒सेना॑ऽर्पयेय॒मित्यृच॑मन्त॒माङ्कु॑र्या॒च्छन्दा॑ꣳस्ये॒व य॑ज्ञयश॒-सेना॑ऽर्पयति॒ यदि॑ का॒मये॑त॒ यज॑मानय्ँयज्ञयश॒सेना॑ऽर्पयेय॒मिति॒ यजु॑रन्त॒मङ्कु॑र्या॒द्यज॑मानमे॒व य॑ज्ञयश॒से-ना॑ऽर्पयत्यृ॒चा स्तोम॒ꣳ॒ सम॑र्द्ध॒येत्या॑- ॥ ३ ॥ ह॒ समृ॑द्ध्यै च॒तुर्भि॒रभ्रि॒मा द॑त्ते च॒त्वारि॒ छन्दा॑ꣳसि॒ छन्दो॑भि॒रे॒व दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒व इत्या॑ह॒ प्रसू॑त्या अ॒ग्निर्दे॒वेभ्यो॒ निला॑यत॒ स वेणु॒ं प्राऽवि॑श॒थ्स ए॒तामू॒तिमनु॒ सम॑चर॒द्यद्वेणो॑स्सुषि॒रꣳ सु॑षि॒राऽभ्रि॑र्भवति सयोनि॒त्वाय॒ स यत्र॑य॒त्राऽव॑स॒त्तत्कृ॒ष्णम॑भ-वत्कल्मा॒षी भ॑वति रू॒पस॑मृद्ध्या उभयतः॒क्ष्णूर्भ॑वती॒तश्चा॒ऽमुत॑श्चा॒ऽर्कस्याऽव॑रुद्ध्यै व्याममा॒त्री भ॑व-त्ये॒ताव॒द्वै पुरु॑षे वी॒र्यं॑-व्वी॒र्य॑सम्मि॒ताऽप॑रिमिता भव॒त्यप॑रिमित॒स्याऽव॑रुद्ध्यै॒ यो वन॒स्पती॑नां फल॒ग्र-हि॒स्स ए॑षाँव्वी॒र्या॑वान्फल॒ग्रहि॒र्वेणु॑र्वैण॒वी भ॑वति वी॒र्य॑स्याऽव॑रुद्ध्यै ॥ ४ ॥ का॒मये॑त गाय॒त्रों॑ऽर्द्ध॒येति॑ च स॒प्तवि॑ꣳशतिश्च ॥ १ ॥

व्यृ॑द्ध॒ँव्वा ए॒तद्य॒ज्ञस्य॒ यद॑य॒जुष्कै॑ण क्रि॒यत॑ इ॒माम॑गृभ्णन्र॒श॒नामृ॒तस्येत्य॑श्वाभि॒धानी॒मा द॑त्ते॒ यजु॑ष्कृत्यै य॒ज्ञस्य॒ समृ॑द्ध्यै॒ प्रतू॑र्तँव्वाजि॒न्ना द्र॒वेत्यश्व॑म॒भि द॑धाति रू॒पमे॒वाऽस्यै॒तन्म॑हि॒मान॒ँव्व्याच॑ष्टे यु॒ञ्जाथा॒ꣳ॒ रास॑भय्ँयु॒वमिति॑ गर्द॒भस॑त्ये॒व ग॑र्द॒भं प्रति॑ ष्ठापयति॒ तस्मा॒दश्वा॑द्गर्द॒भोऽस॑त्तरो॒ योगे॑योगे त॒व-स्त॑र॒मित्या॑ह ॥ ५ ॥ योगे॑योग ए॒वैनय्ँ॑युङ्क्ते॒ वाजे॑वाजे हवामह॒ इत्या॒हाऽन्न॒ँव्वै वाजोऽन्न॑मे॒वाऽव॑ रुन्धे॒

सखाय इन्द्रमूतय इत्याहेन्द्रियमेवाऽव रुन्धेऽग्निर्देवेभ्यो निलायत तं प्रजापतिरन्वविन्दत्प्राजापत्यो-ऽश्वोऽश्वेन सं भरत्यनुवित्त्यै पापवस्यसँव्वा एतत्क्रियते यच्छ्रेयसा च पापीयसा च समानङ्कर्म कुर्व-न्ति पापीयान् ॥ ६ ॥ ह्यश्वाद्गर्दभोऽश्वं पूर्वन्नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयाꣳसं पापीया-न्पश्चादन्वेति बहुर्वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निञ्चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्राम-न्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव ॥ ७ ॥ पशून्निर्याच्याऽऽत्मने कर्म कुरुते पूष्णा सयुजा सहेत्याह पूषा वा अद्ध्वनाꣳ सन्नेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन्पृथि-व्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनन्देवताभिस्सं भरत्यग्निं पुरीष्यमङ्गिर-स्वदच्छेम इत्याह येन ॥ ८ ॥ सङ्गच्छते वाजमेवाऽस्य वृङ्क्ते प्रजापतये प्रतिप्रोच्याऽग्निस्सम्भृत्य इत्याहुरियँव्वै प्रजापतिस्तस्या एतच्छ्रोत्रँय्यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकव-पामुप तिष्ठते साख्षादेव प्रजापतये प्रतिप्रोच्याऽग्निꣳ सं भरत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन सङ्गच्छते वाजमेवाऽस्य वृङ्क्तेऽन्वग्निरुषसामग्र- ॥ ९ ॥ मख्यदित्याहाऽनुख्यात्या आगत्य वाज्य-द्ध्वन आक्रम्य वाजिन्पृथिवीमित्याहेच्छत्येवैनं पूर्वया विन्दत्युत्तरया द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरूपाभ्यान्तस्मादनुरूपाः पशवः प्र जायन्ते द्यौस्ते पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा एतँल्लो-केभ्यः प्रजापतिस्समैरयद्रूपमेवाऽस्यैतन्महिमानँव्व्याचष्टे वज्री वा एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयाँल्लोमभिरुभयादद्भ्यो यन्द्विष्यात्तमधस्पदन्ध्यायेद्वज्रेणैवैनꣳ स्तृणुते ॥ १० ॥ आह पापीयान्रुद्रादेव येनाऽग्रँव्वज्री वै सप्तदश च ॥ २ ॥

उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यान्तस्मादनुरूपाः पशवः प्रजायन्तेऽप उप सृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति पशून् यज्ञो यज्ञँय्यजमानो यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै यदद्ध्वर्युरनग्नावाहुतिञ्जुहुयादन्धोऽद्ध्वर्यु- ॥ ११ ॥ स्स्याद्रख्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽद्ध्वर्युर्भवति न यज्ञꣳ रख्षाꣳसि घ्नन्ति जिघर्म्यग्निं मनसा घृते-नेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति प्रतिख्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्ख्येति पृथुन्तिरश्चा वयसा बृहन्तमित्याहाऽल्पो ह्येष जातो महा- ॥ १२ ॥ न्भवति व्यचिष्ठमन्नꣳ रभसँव्विदानमित्याहाऽन्नमेवाऽस्मै स्वदयति सर्वमस्मै स्वदते य एवँव्वेदाऽऽ त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत्पुरुषो मनसाऽभिगच्छति तद्वाचा वदत्यरख्षसेत्याह रख्षसामपहत्यै मर्यश्रीस्स्पृहयद्वर्णो अग्निरित्याहाऽपचितिमेवाऽस्मिन्दधात्यपचितिमान्भवति य एव- ॥ १३ ॥ ँव्वेद मनसा त्वै तामाप्तुमर्हति यामद्ध्वर्युरनग्नावाहुतिञ्जुहोति मनस्वतीभ्याञ्जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठित्यै यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रख्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा

एतद्यज्ञमुखय्यँर्ह्येनदाहुतिरश्नुते परि लिखति रक्षसामपहत्यै तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाऽग्निस्तस्माद्रक्षाꣳस्यप हन्ति ॥ १४ ॥ गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति त्रिष्टुभा परि लिखतीन्द्रियव्वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णात्यनुष्टुभा परि लिखत्यनुष्टुप्सर्वाणि छन्दाꣳसि परिभूः पर्याप्त्यै मद्ध्यतोऽनुष्टुभा वाग्वा अनुष्टुप्तस्मान्मद्ध्यतो वाचा वदामो गायत्रिया प्रथमया परि लिखत्यथाऽनुष्टुभाऽथ त्रिष्टुभा तेजो वै गायत्री यज्ञोऽनुष्टुगिन्द्रियन्त्रिष्टुप्तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति ॥ १५ ॥ अन्धोऽद्ध्वर्युर्महान्भवति य एवꣳ हन्ति त्रिष्टुभा तेजो वै गायत्री त्रयोदश च ॥ ३ ॥

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तन्त्वाऽग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति सोऽग्निर्जातः प्रजाश्शुचाऽर्पयत्तन्देवा अर्द्धर्चेनाऽशमयञ्छिवं प्रजाभ्योऽहिꣳसन्तमित्याह प्रजाभ्य एवैनꣳ शमयति द्वाभ्याङ्खनति प्रतिष्ठित्या अपां पृष्ठमसीति पुष्करपर्णमा ॥ १६ ॥ हरत्यपाव्वा एतत्पृष्ठय्यत्पुष्करपर्णꣳ रूपेणैवैनदा हरति पुष्करपर्णेन सं भरति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाऽग्निꣳ सं भरति कृष्णाजिनेन सं भरति यज्ञो वै कृष्णाजिनय्यज्ञेनैव यज्ञꣳ सं भरति यद्ग्राम्याणां पशूनाञ्चर्मणा सम्भरेद्ग्राम्यान्पशूञ्छुचाऽर्पयेत्कृष्णाजिनेन सं भरत्यारण्यानेव पशू- ॥ १७ ॥ ञ्छुचाऽर्पयति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसश्शुचा ह्यृता लोमतस्सं भरत्यतो ह्यस्य मेद्ध्यङ्कृष्णाजिनञ्च पुष्करपर्णञ्च सꣳस्तृणातीयव्वै कृष्णाजिनमसौ पुष्करपर्णमाभ्यामेवैनमुभयतः परि गृह्णात्यग्निर्देवेभ्यो निलायत तमथर्वाऽन्ववपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्या- ॥ १८ ॥ ह य एवैनमन्ववपश्यत्तेनैवैनꣳ सं भरति त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्तमु त्वा दद्ध्यङ्ङृषिरित्याह दद्ध्यङ् वा आथर्वणस्तेजस्व्यासीत्तेज एवाऽस्मिन्दधाति तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाऽभि गृणाति ॥ १९ ॥ चतसृभिस्सं भरति चत्वारि छन्दाꣳसि छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यो यङ्कामयेत वसीयान्थ्स्यादित्युभयीभिस्तस्य सं भरेत्तेजश्चैवाऽस्मा इन्द्रियञ्च समीची दधात्यष्टाभिस्सं भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाऽग्निस्तꣳ सं भरति सीद होतरित्याह देवता एवाऽस्मै सꣳ सादयति नि होतेति मनुष्यान्थ्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवाऽस्मै सꣳसन्नान्प्र जनयति ॥ २० ॥ ऐव पशूनिति गृणाति होतरिति सप्तविꣳशतिश्च ॥ ४ ॥

क्रूरमिव वा अस्या एतत्करोति यत्खनत्यप उप सृजत्यापो वै शान्ताश्शान्ताभिरेवाऽस्यै शुचꣳ शमयति सन्ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवाऽस्यै प्राणꣳ सन्दधाति सन्ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते तस्मै च देवि वषडस्तु ॥ २१ ॥ तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिन्दधाति तस्मात्सर्वानृतून्वर्षति यद्वषट्कुर्याद्यातयामाऽस्य वषट्का-

रस्स्याद्यन्न वषट्कुर्याद्रख्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोख्षमेव वषट्करोति नाऽस्य यातयामा वषट्कारो भवति न यज्ञꣳ रख्षाꣳसि घ्नन्ति सुजातो ज्योतिषा सहेत्यनुष्टुभोप नह्यत्यनुष्टु- ॥ २२ ॥ प्सर्वाणि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनन्तनुवा परि दधाति वेदुको वासो भवति य एवँव्वेद वारुणो वा अग्निरुपनद्ध उदु तिष्ठ स्वद्ध्वरोर्द्ध्व ऊ षु ण ऊतय इति सावित्रीभ्यामुत्तिष्ठति सवितृप्रसूत एवाऽस्योर्द्ध्वाँव्वरुणमेनिमुथ्सृजति द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि ॥ २३ ॥ रोदस्योरित्याहेमे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाहाऽग्ने चारुर्विभृत ओषधीष्वित्याह यदा ह्येतँविभरन्त्यथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो वा अस्य मातरस्ताभ्य एवैनं प्र च्यावयति स्थिरो भव वीड्वङ्ग इति गर्दभ आ सादयति ॥ २४ ॥ सन्नह्यत्येवैनमेतया स्थेम्ने गर्दभेन सं भरति तस्माद्गर्दभः पशूनां भारभारितमो गर्दभेन सं भरति तस्माद्गर्दभोऽप्यनालेशेऽत्यन्यान्पशून्मेद्यत्यन्नꣳ ह्येनेनाऽर्कꣳ संभरन्ति गर्दभेन सं भरति तस्माद्गर्दभो द्विरेतास्सन्कनिष्ठं पशूनां प्र जायतेऽग्निर्ह्यस्य योनिन्निर्दहति प्रजासु वा एष एतर्ह्यारूढ- ॥ २५ ॥ स्स ईश्वरः प्रजाश्शुचा प्रदहश्शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशुचो माऽन्तरिख्षं मा वनस्पतीनित्याहैभ्य एवैनँल्लोकेभ्यश्शमयति प्रैतु वाजी कनिक्रददित्याह वाजी ह्येष नानदद्रासभः पत्वेत्या- ॥ २६ ॥ ह रासभ इति ह्येतमृषयोऽवदन्भरन्नग्निं पुरीष्यमित्याहाऽग्निꣳ ह्येष भरति मा पाद्यायुषः पुरेत्याहाऽऽयुरेवाऽस्मिन्दधाति तस्माद्गर्दभस्सर्वमायुरेति तस्माद्गर्दभे पुराऽऽयुषः प्रमीते बिभ्यति वृषाऽग्निँव्वृषणं भरन्नित्याह वृषा ह्येष वृषाऽग्निरपाङ्गर्भꣳ ॥ २७ ॥ समुद्रियमित्याहाऽपाꣳ ह्येष गर्भो यदग्निरग्न आ याहि वीतय इति वा इमौ लोकौ व्यैतामग्न आ याहि वीतय इति यदाहाऽनयोर्लोकयोर्वीत्यै प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाꣳ स एतर्ह्यद्ध्वर्युञ्च यजमानञ्च ध्यायत्यृतꣳ सत्यमित्याहेयँव्वा ऋतमसौ ॥ २८ ॥ सत्यमनयोरेवैनं प्रति ष्ठापयति नाऽऽर्तिमा- र्च्छत्यद्ध्वर्युर्न यजमानो वरुणो वा एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताऽग्नि- मेतमित्याह शान्त्यै व्यस्यन्विश्वा अमतीररातीरित्याह रख्षसामपहत्यै निषीदन्नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्या ओषधयः प्रति मोदद्ध्व- ॥ २९ ॥ मेनमित्याहौषधयो वा अग्नेर्भागधेय- न्ताभिरेवैनꣳ समर्द्धयति पुष्पावतीस्सुपिप्पला इत्याह तस्मादोषधयः फलङ्गृह्णन्त्ययँव्वो गर्भ ऋत्वि- यः प्रत्नꣳ सधस्थमाऽसददित्याह याभ्य एवैनं प्रच्यावयति तास्वेवैनं प्रति ष्ठापयति द्वाभ्यामुपाव- हरति प्रतिष्ठित्यै ॥ ३० ॥ अस्त्वनुष्टुबसि सादयत्यारूढः पत्वेति गर्भमसौ मोदद्ध्वन्द्विचत्वारिꣳशच्च ॥ ५ ॥

वारुणो वा अग्निरुपनद्धो वि पाजसेति वि स्रꣳसयति सवितृप्रसूत एवाऽस्य विषूचीँव्वरुण- मेनिँव्वि सृजत्यप उप सृजत्यापो वै शान्ताश्शान्ताभिरेवाऽस्य शुचꣳ शमयति तिसृभिरुप सृजति त्रिवृद्वा अग्निर्यावानेवाऽग्निस्तस्य शुचꣳ शमयति मित्रस्सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो

देवानान्तेनैवै-॥ ३१ ॥ नꣳ सꣳ सृजति शान्त्यै यद्ग्राम्याणां पात्राणाङ्कपालैस्सꣳसृजेद्ग्राम्याणि पात्राणि शुचाऽर्पयेदर्मकपालैस्सꣳ सृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचाऽर्पयति शर्कराभिस्सꣳ सृजति धृत्या अथो शन्त्वायाऽजलोमैस्सꣳ सृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनन्तनुवा सꣳ सृजत्यथो तेजसा कृष्णाजिनस्य लोमभिस्सꣳ ॥ ३२ ॥ सृजति यज्ञो वै कृष्णाजिनय्यँज्ञेनैव यज्ञꣳ सꣳ सृजति रुद्रास्सम्भृत्य पृथिवीमित्याहैता वा एतन्देवता अग्रे सम्भरन्ताभिरेवैनꣳ सं भरति मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मादेव-माह यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते ॥ ३३ ॥ पदे अथो प्रतिष्ठित्यै प्राऽन्याभिर्यच्छत्य-न्वन्यैर्मन्त्रयते मिथुनत्वाय त्र्युद्धिङ्करोति त्रय इमे लोका एषाल्लोकानामाप्त्यै छन्दोभिः करोति वीर्यं-व्वै छन्दाꣳसि वीर्येणैवैनाङ्करोति यजुषा बिलङ्करोति व्यावृत्त्या इयतीङ्करोति प्रजापतिना यज्ञमुखेन संमितान्द्विस्तनाङ्करोति द्यावापृथिव्योर्दोहाय चतुस्स्तनाङ्करोति पशूनान्दोहायाऽष्टास्तना-ङ्करोति छन्दसान्दोहाय नवाश्रिमभिचरतः कुर्यात्त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै कृत्वाय सा महीमुखामिति नि दधाति देवतास्वेवैनां प्रति ष्ठापयति ॥ ३४ ॥ तेनैव लोमभिस्समेते अभिचरत एकविꣳशतिश्च ॥ ६ ॥

सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाश्शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणा-न्दधाति तस्मात्सप्त शीर्षन्प्राणा अश्वशकेन धूपयति प्राजापत्यो वा अश्वस्सयोनित्वायाऽदिति-स्त्वेत्याहेयँव्वा अदितिरदित्यैवाऽदित्याङ्खनत्यस्या अक्रूरङ्काराय न हि स्वस्स्वꣳ हिनस्ति देवानान्त्वा पत्नीरित्याह देवाना- ॥ ३५ ॥ व्वा एतां पत्नयोऽग्रेऽकुर्वन्ताभिरेवैनान्दधाति धिषणा-स्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानाव्वै पत्नी-॥ ३६ ॥ र्जनयस्ताभिरेवैनां पचति षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति द्विः पचन्त्वि-त्याह तस्माद्द्विस्संव्वत्सरस्य सस्यं पच्यते वारुण्युखाऽभीद्धा मैत्रियोपैति शान्त्यै देवस्त्वा सवि-तोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपत्यपद्यमाना पृथिव्याशा दिश आ पृणे-॥ ३७ ॥ त्याह तस्मादग्निस्सर्वा दिशोऽनु वि भात्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्या असुर्यं पात्रमनाच्छृण्णमा च्छृणत्ति देवत्राऽकरजक्षीरेणाऽऽ च्छृणत्ति परमव्वा एतत्पयो यदजक्षीरं परमेणैवैनां पयसाऽऽ च्छृणत्ति यजुषा व्यावृत्त्यै छन्दोभिरा च्छृणत्ति छन्दोभिर्वा एषा क्रियते छन्दोभिरेव छन्दाꣳस्या च्छृणत्ति ॥ ३८ ॥ आह देवानाव्वै पत्नीः पृणैषा षट्च ॥ ७ ॥

एकविꣳशत्या माषैः पुरुषशीर्षमच्छैत्यमेद्ध्या वै माषा अमेद्ध्यं पुरुषशीर्षममेद्ध्यैरेवा-ऽस्याऽमेद्ध्यन्निरवदाय मेद्ध्यङ्कृत्वाऽऽ हरत्येकविꣳशतिर्भवन्त्येकविꣳशो वै पुरुषः पुरुषस्याऽऽप्त्यै व्यृद्धँव्वा एतत्प्राणैरमेद्ध्यय्यँत्पुरुषशीर्षꣳ सप्तधा वितृण्णाव्वल्मीकवपां प्रति नि दधाति सप्त वै

शीर्षण्याः प्राणाः प्राणैरेवैनत्समर्द्धयति मेद्धत्वाय यावन्तो ॥ ३९ ॥ वै मृत्युबन्धवस्तेषाँय्यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनंवृङ्क्ते तिसृभिः परि गायति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते तस्माद्गायते न देयङ्गाथा हि तद्वृङ्क्तेऽग्निभ्यः पशूना लभते कामा वा अग्नयः कामानेवाऽव रुन्धे यत्पशूलाऽऽलभेताऽनवरुद्धा अस्य ॥ ४० ॥ पशवस्स्युर्यत्पर्यग्निकृता-नुत्सृजेद्यज्ञवेशसङ्कुर्याद्यत्स्ँस्थापयेद्यातयामानि शीर्षाणि स्युर्यत्पशूनालभते तेनैव पशूनव रुन्धे यत्पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वाय प्राजापत्येन सँ स्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रति ष्ठापयति प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत्ताभिर्वै स मुखत ॥ ४१ ॥ आत्मानमाऽप्रीणीत यदेता आप्रियो भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आ प्रीणात्यपरिमितछन्दसो भवन्त्यपरिमितः प्रजापतिः प्रजापतेराप्त्यै ऊनातिरिक्ता मिथुनाः प्रजात्यै लोमशँवै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवाऽव रुन्धे सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्यै क्रियन्ते तस्मादेता अग्नेश्चित्यस्य ॥ ४२ ॥ भवन्त्येकविँशतिँ सामिधेनीरन्वाह रुग्वा एकविँशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविँशश्चतु-र्विँशतिमन्वाह चतुर्विँशतिरर्द्धमासास्सँव्वत्सरस्सँव्वत्सरोऽग्निर्वैश्वानरस्साक्षादेव वैश्वानरमव रुन्धे पराचीरन्वाह पराङिव हि सुवर्गो लोकस्समास्त्वाऽग्न ऋतवो वर्द्धयन्त्वित्याह समाभि-रेवाऽग्निँव्वर्द्धय- ॥ ४३ ॥ त्यृतुभिस्सँव्वत्सरँव्विश्वा आ भाहि प्रदिशः पृथिव्या इत्याह तस्मादग्नि-स्सर्वा दिशोऽनु वि भाति प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवाऽस्मादप नुदत्युद्वयन्तमस-स्परीत्याह पाप्मा वै तमः पाप्मानमेवाऽस्मादप हन्त्यगन्म ज्योतिरुत्तममित्याहाऽसौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यङ्गच्छति न सँव्वत्सरस्तिष्ठति नाऽस्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरेवाऽस्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्याऽनुख्यात्यै ॥ ४४ ॥
यावन्तोऽस्य मुखतश्चित्यस्य वर्द्धयत्यादित्योऽष्टाविँशतिश्च ॥ ८ ॥

षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनन्दीक्षयति सप्तभिर्दीक्षयति सप्त छन्दाँसि छन्दोभिरेवैनन्दीक्षयति विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति वाग्वा अनुष्टुप्तस्मात्प्राणा-नाँव्वागुत्तमैकस्मादक्षरादनाप्तं प्रथमं पदन्तस्माद्यद्वाचोऽनाप्तन्तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः ॥ ४५ ॥ प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाँ सृष्ट्यै यदर्चिषि प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाऽव रुन्धे भविष्यद्धि भूयो भूताद्द्वाभ्यां प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा सा यद्भिद्येताऽऽर्तिमार्च्छे- ॥ ४६ ॥ द्यजमानो हन्येताऽस्य यज्ञो मित्रैतामुखान्तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रति ष्ठापयति नाऽऽर्तिमार्च्छति यजमानो नाऽस्य यज्ञो हन्यते यदि भिद्येत तैरेव कपालैस्सँ सृजेत्सैव ततः प्रायश्चित्तिर्यो गतश्रीस्स्यान्मथित्वा

तस्याऽवं दद्ध्याद्भूतो वा एष स स्वा- ॥ ४७ ॥ न्देवतामुपैति यो भूतिकामस्स्याद्य उखायै सम्भवेथ्स एव तस्य स्यादतो ह्येष सम्भवत्येष वै स्वयम्भूर्नाम भवत्येव यङ्कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याऽऽहृत्याऽवं दद्ध्याथ्साख्षादेवाऽस्मै भ्रातृव्यञ्जनयत्यम्बरीषादन्नकामस्या- ऽवं दद्ध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवाऽन्न- ॥ ४८ ॥ मवं रुन्धे मुञ्जानवं दधात्यूर्ग्वै मुञ्जा ऊर्जमेवाऽस्मा अपि दधात्यग्निर्देवेभ्यो निलायत स क्रुमुकं प्राऽविशत्क्रुमुकमवं दधाति यदेवाऽस्य तत्र न्यक्तन्तदेवाऽवं रुन्ध आज्येन सँय्यौत्येतद्वा अग्नेः प्रियन्धाम यदाज्यं प्रियेणैवैनन्धाम्ना समर्द्धयत्यथो तेजसा ॥ ४९ ॥ वैकङ्कतीमा दधाति भा एवाऽवं रुन्धे शमीमयीमा दधाति शान्त्यै सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुप तिष्ठते त्रयं इमे लोका एष्वेव लोकेष्वाविदङ्गच्छत्यथो प्राणानेवाऽऽत्मन्धत्ते ॥ ५० ॥ प्रजापतिर् ऋच्छेथ्स्वामेवाऽन्नन्तेजसा चतुस्त्रिꣳशच्च ॥ ९ ॥

न हं स्म वै पुराऽग्निरपरशुवृक्णन्दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवाऽस्मै स्वदयति सर्वमस्मै स्वदते य एवव्वेदौदुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊर्जमेवाऽस्मा अपि दधाति प्रजापतिरग्निमसृजत तꣳ सृष्टꣳ रख्षाꣳस्य- ॥ ५१ ॥ जिघाꣳ- सन्थ्स एतद्राख्षोघ्नमपश्यत्तेन वै स रख्षाꣳस्यपाऽहत यद्राख्षोघ्नं भवत्यग्रेरेव तेन जाताद्रख्षाꣳस्यप हन्त्याश्वत्थीमा दधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो विजित्यै वैकङ्कतीमा दधाति भा एवा- ऽवं रुन्धे शमीमयीमा दधाति शान्त्यै सꣳशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुम्बरी ॥ ५२ ॥ वाचयति ब्रह्मणैव ख्षत्रꣳ सꣳ श्यति ख्षत्रेण ब्रह्म तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणन्तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यं मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्द्धत्त एकविꣳशतिनिर्बाधो भवत्येकविꣳशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रयं इमे लोका असावादित्य ॥ ५३ ॥ एकविꣳश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति निर्बाधैर्वै देवा असुरान्निर्बाधेऽकुर्वत तन्निर्बाधानान्निर्बाधत्वन्निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते सावित्रिया प्रति मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तरयाऽहोरा- त्राभ्यामेवैनमुद्यच्छते देवा अग्निन्धारयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोरात्रा- भ्यामेवैनमुद्यत्य ॥ ५४ ॥ प्राणैर्दाधाराऽऽसीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते कृष्णा- जिनमुत्तरन्तेजो वै हिरण्यं ब्रह्म कृष्णाजिनन्तेजसा चैवैनं ब्रह्मणा चोभयतः परि गृह्णाति षडुद्या- मꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते यद्द्वादशोद्यामꣳ सँव्वथ्सरेणैव मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ समर्द्धयति सुपर्णोऽसि गरुत्मानित्यवेख्षते रूपमेवाऽस्यैतन्महिमानँव्याचष्टे दिवङ्गच्छ सुवः पतेत्याह सुवर्गमेवैनल्लोकङ्गमयति ॥ ५५ ॥ रख्षाꣳस्यौदुम्बरी आदित्य उद्यत्य सञ्चर्तुर्विꣳशतिश्च ॥ १० ॥

समिद्धो अञ्जन्कृदरं मतीनाङ्घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन्वाजिनञ्जातवेदो देवानांव्वक्षि प्रियमा सधस्थम् । घृतेनाऽञ्जन्थ्सं पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् । अनु त्वा सप्ते प्रदिशस्सचन्ताꣳ स्वधामस्मै यजमानाय धेहि । ईड्यश्चाऽसि वन्द्यश्च वाजिन्नाशुश्चाऽसि मेध्यश्च सप्ते । अग्निष्ट्वा ॥ ५६ ॥ देवैर्वसुभिस्सजोषाः प्रीतंव्वह्निंव्वहतु जातवेदाः । स्तीर्णं बर्हिस्सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिस्सजोषास्स्योनङ्कृण्वाना सुविते दधातु । एता उ वस्सुभगा विश्वरूपा वि पक्षोभिश्श्रयमाणा उदातैः । ऋष्वास्सतीः कवषश्शुम्भमाना द्वारो देवीस्सुप्रायणा भवन्तु । अन्तरा मित्रावरुणा चरन्ती मुखंय्यज्ञानामभि संव्विदाने । उषासा वाꣳ ॥ ५७ ॥ सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि । प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयञ्चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता । आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत् । इडोपहूता वसुभिस्सजोषा यज्ञन्नो देवीरमृतेषु धत्त । त्वष्टा वीरन्देवकाममञ्जजान त्वष्टुरर्वा जायत आशुरश्वः । ॥ ५८ ॥ त्वष्टेदंव्विश्वं भुवनञ्जजान बहोः कर्तारमिह यक्षि होतः । अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु । वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् । प्रजापतेस्तपसा वावृधानस्सद्यो जातो दधिषे यज्ञमग्ने । स्वाहाकृतेन हविषा पुरोगा याहि साद्ध्या हविरदन्तु देवाः ॥ ५९ ॥
अग्निष्ट्वा वामश्वो द्विचत्वारिꣳशच्च ॥ ११ ॥

सावित्राणि व्यृद्धमुत्क्राम देवस्य खनति क्रूरंव्वारुणस्सप्तभिरेकविꣳशत्या षड्भिर्न ह स्म समिद्धो अञ्जनेकादश ॥ ११ ॥ सावित्राण्युत्क्राम क्रूरंव्वारुणः पशवस्स्युर्न ह स्म नवपञ्चाशत् ॥ ५९ ॥ सावित्राणि हविरदन्तु देवाः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ पञ्चमकाण्डे द्वितीयः प्रश्नः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

विष्णुमुखा वै देवाश्छन्दोभिरिमाल्ँलोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाल्ँलोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह

गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षञ्जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः ॥ १ ॥ पराङैत्तमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियन्धामाऽवारुन्ध यदेतामन्वाहाऽग्नेरेवैतया प्रियन्धामाऽव रुन्ध ईश्वरो वा एष पराङ्प्रदघो यो विष्णुक्रमान्क्रमते चतसृभिरा वर्तते चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रियामेवाऽस्य तनुवमभि ॥ २ ॥ पर्यावर्तते दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्द्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते शुनश्शेपमाजी-गर्तिँव्वरुणोऽगृह्णात्स एताँव्वारुणीमपश्यत्तया वै स आत्मानँव्वरुणपाशादमुञ्चद्वरुणो वा एतङ्गृ-ह्णाति य उखां प्रतिमुञ्चत उदुत्तमँव्वरुण पाशमस्मदित्याहाऽऽत्मानमेवैतया ॥ ३ ॥ वरुणपाशा-न्मुञ्चत्या त्वाऽहार्षमित्याहाऽऽ ह्येनꣳ हरति ध्रुवस्तिष्ठाऽविचाचलिरित्याह प्रतिष्ठित्यै विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्द्धयत्यस्मिन्राष्ट्रमधि श्रयेत्याह राष्ट्रमेवाऽस्मिन्ध्रुवमकर्यङ्कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भव- ॥ ४ ॥ त्यग्ने बृहन्नुषसामूर्द्ध्वो अस्थादित्याहा-ऽग्रमेवैनꣳ समानानाङ्करोति निर्जग्मिवान्तमस इत्याह तम एवाऽस्मादप हन्ति ज्योतिषा-ऽऽगादित्याह ज्योतिरेवाऽस्मिन्दधाति चतसृभिस्सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवाऽतिच्छ-न्दसोत्तमया वर्ष्म वा एषा छन्दसाँय्यदतिच्छन्दा वर्ष्मैवैनꣳ समानानाङ्करोति सद्वती ॥ ५ ॥ भवति सत्त्वमेवैनङ्गमयति वात्सप्रेणोप तिष्ठत एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियन्धामाऽवारुन्धा-ऽग्नेरेवैतेन प्रियन्धामाऽव रुन्ध एकादशं भवत्येकधैव यजमाने वीर्यन्दधाति स्तोमेन वै देवा अस्मिँल्लोक आर्ध्नुवञ्छन्दोभिरमुष्मिन्त्स्तोमस्येव खलु वा एतद्रूपँय्यद्वात्सप्रँय्यद्वात्सप्रेणोपतिष्ठत ॥ ६ ॥ इममेव तेन लोकमभि जयति यद्विष्णुक्रमान्क्रमतेऽमुमेव तैर्लोकमभि जयति पूर्वेद्युः प्र क्रामत्युत्तरेद्युरुप तिष्ठते तस्माद्योगेऽन्यासां प्रजानां मनः क्षेमेऽन्यासान्तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यति मुष्टी करोति वाचँय्यच्छति यज्ञस्य धृत्यै ॥ ७ ॥

सृष्टोऽ(१)भ्येतया भवति सद्वत्युपतिष्ठते द्विचत्वारिꣳशच्च ॥ १ ॥

अन्नपतेऽन्नस्य नो देहीत्याहाऽग्निर्वा अन्नपतिस्स एवाऽस्मा अन्नं प्र यच्छत्यनमीवस्य शु-ष्मिण इत्याहाऽयक्ष्मस्येति वावैतदाह प्र प्रदातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पद इत्याहाऽऽशिषमेवैतामा शास्त उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः ॥ ८ ॥ प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनञ्चित्तायोद्यच्छते तेनैवैनꣳ समर्द्धयति चतसृभिरा सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवाऽतिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसाँय्यदतिच्छन्दा वर्ष्मैवैनꣳ समानानाङ्करोति सद्वती भवति सत्त्वमेवैनङ्गमयति प्रेदग्ने ज्योतिष्मान् ॥ ९ ॥ याहीत्याह ज्योतिरेवाऽस्मिन्दधाति तनुवा वा एष हिनस्ति यꣳ हिनस्ति मा

हिꣳसीस्तनुवा॑ प्र॒जा इत्या॑ह प्र॒जाभ्य॑ ए॒वैनꣳ॑ शमयति॒ रख्षाꣳ॑सि॒ वा ए॒तद्य॒ज्ञꣳ स॑चन्ते॒ यदन॑ उ॒थ्सर्ज॒त्यक्र॑न्ददि॒त्यन्वा॑ह॒ रख्ष॑सा॒मप॑हत्या॒ अन॑सा वह॒न्त्यप॑चितिमे॒वाऽस्मि॒न्दधाति॒ तस्मा॑दन॒स्वी च॑ र॒थी चाऽति॑थीना॒मप॑चिततमा- ॥ १० ॥ वप॑चितिमान्भवति॒ य ए॒वंवे॑द स॒मिधा॒ऽग्निन्दु॑वस्य॒तेति॑ घृतानुषि॒क्ताम॑वसिते स॒मिध॒मा द॑धाति॒ यथाऽति॑थय॒ आग॑ताय स॒र्पिष्व॑दाति॒त्थ्यङ्क्रि॒यते॑ ता॒दृगे॒व तद्गा॑यत्रि॒या ब्रा॑ह्म॒णस्य॑ गाय॒त्रो हि ब्रा॑ह्म॒णस्त्रि॒ष्टुभा॑ राज॒न्य॑स्य त्रैष्टु॑भो॒ हि रा॑ज॒न्यो॑ऽफ्सु भस्म॒ प्र वे॑शयत्य॒फ्सुयो॑निर्वा अ॒ग्निस्स्वामे॒वैनँ॒य्योनि॑ङ्गमयति ति॒सृभिः॒ प्र वे॑शयति त्रि॒वृद्वा ॥ ११ ॥ अ॒ग्निर्या॑वा॒ने॒वाऽग्निस्तं प्र॒तिष्ठाङ्ग॑मयति॒ परा॒ वा ए॒षोऽग्निँ॒व्वप॑ति॒ योऽफ्सु भस्म॑ प्र॒वे॒शय॑ति॒ ज्योति॑-ष्मतीभ्या॒मव॑ दधाति॒ ज्योति॑रि॒वाऽस्मि॒न्दधाति॒ द्वाभ्यां॒ प्रति॑ष्ठित्यै॒ परा॒ वा ए॒ष प्र॒जां प॒शून् व॑पति॒ योऽफ्सु भस्म॑ प्र॒वे॒शय॑ति॒ पुन॑रू॒र्जा स॒ह र॒य्येति॒ पुन॑रु॒दैति॑ प्र॒जामे॒व प॒शूना॒त्मन्ध॑त्ते॒ पुन॑स्त्वाऽऽदि॒त्या ॥ १२ ॥ रु॒द्रा वस॑व॒स्समि॑न्धता॒मित्या॑है॒ता वा ए॒तन्दे॒वता॒ अग्रे॒ समै॑न्धत॒ ताभि॑रे॒वैनꣳ॒ समि॑न्धे॒ बोधा॒ स बो॒धीत्युप॑ तिष्ठते बो॒धय॑त्ये॒वैन॒न्तस्मा॒थ्सु॒प्त्वा प्र॒जाः प्र बु॑द्ध्यन्ते यथास्था॒नमुप॑ तिष्ठते॒ तस्मा॑द्यथास्था॒नं प॒शवः॒ पुन॒रेत्योप॑ तिष्ठन्ते ॥ १३ ॥ वै विश्वे॑ दे॒वा ज्योति॑ष्मा॒नप॑चिततमौ त्रि॒वृद्वा आ॑दि॒त्या द्विच॑त्वारिꣳशच्च ॥ २ ॥

याव॑ती॒ वै पृ॑थि॒वी तस्यै॑ य॒म आधि॑पत्यं॒ परी॑याय॒ यो वै य॒मन्दे॑व॒यज॑नम॒स्या अनि॑र्याच्या॒ऽग्नि-श्चि॑नु॒ते य॒माये॑नꣳ॒ स चि॑नु॒तेऽपे॒तेत्य॑द्ध्यव॒साय॑यति य॒ममे॒व दे॑व॒यज॑नमस्यै नि॒र्याच्या॒ऽऽत्मने॒ऽग्नि-श्चि॑नुत॒ इष्व॒ग्रेण॒ वा अ॒स्या अना॑मृतमि॒च्छन्तो॒ नाऽवि॑न्द॒न्ते दे॒वा ए॒तद्यजु॑रपश्य॒न्नपे॒तेति॒ यदे॒तेना॒ऽ-द्ध्यव॒साय॑यत्य- ॥ १४ ॥ नामृ॑त ए॒वाऽग्निश्चि॑नु॒त उ॒द्धन्ति॒ यदे॒वाऽस्या॑ अमे॒द्ध्य॒न्तदप॑ ह॒न्त्यपो॒ऽवो-॑ख्षति॒ शान्त्यै॒ सिक॑ता॒ नि व॑पत्ये॒तद्वा अ॒ग्नेर्वै॑श्वान॒रस्य॑ रू॒पꣳ रू॒पेणै॒व वै॑श्वान॒रमव॑ रुन्ध ऊ॒षान्नि व॑-पति॒ पुष्टि॒र्वा ए॒षा प्र॒जन॑नँ॒य्यदू॒षाः पुष्ट्या॑मे॒व प्र॒जन॑ने॒ऽग्निश्चि॑नु॒तेऽथो॑ सं॒ज्ञान॑ ए॒व सं॒ज्ञानꣳ॒ ह्ये॑तत् ॥१५॥ प॑शू॒नाँ॒य्यदू॒षा द्यावा॑पृथि॒वी स॒हाऽऽस्ता॒न्ते वि॒यती॑ अब्रूता॒मस्त्वे॒व नौ॑ स॒ह य॒ज्ञिय॒मिति॒ यद॒-मु॒ष्या॑ य॒ज्ञिय॒मासी॒त्तद॒स्याम॑दधा॒त्त ऊषा॑ अभव॒न् यद॒स्या य॒ज्ञिय॒मासी॒त्तद॒मुष्या॒मदधा॒त्तद॒दश्च॒न्द्रम॑सि कृ॒ष्णमू॒षा॑न्नि॒वप॑न्न॒दो द्ध्या॑येद्द्यावा॑पृथि॒व्योरे॒व य॒ज्ञिये॒ऽग्निश्चि॑नु॒तेऽयꣳ सो अ॒ग्निरिति॒ वि॒श्वामि॑त्रस्य ॥ १६ ॥ सू॒क्तं भ॑वत्ये॒तेन॒ वै वि॒श्वामि॑त्रो॒ऽग्नेः प्रि॒यन्धामा॒ऽवा॒ऽरुन्धा॒ऽग्नेरे॒वैतेन॑ प्रि॒यन्धामा॒ऽव॑ रुन्धे॒ छन्दो॑भि॒र्वै दे॒वास्सु॑व॒र्गँल्लो॒कमा॑यश्च॒तस्रः॒ प्राची॒रुप॑ दधाति॒ च॒त्वारि॒ छन्दाꣳ॑सि॒ छन्दो॑भिरे॒व तद्यज॑मा-नस्सुव॒र्गँल्लो॒कमे॑ति॒ तेषाꣳ॑ सुव॒र्गँल्लो॒कँय्य॒तान्दिश॒स्सम॑व्लीयन्त॒ ते द्वे पु॒रस्ता॑थ्स॒मीची॒ उपा॒ऽदधत॒ द्वे ॥ १७ ॥ प॒श्चाथ्स॒मीची॒ ताभि॒र्वै ते दिशो॒ऽदृꣳह॒न् यद्द्वे पु॒रस्ता॑थ्स॒मीची॑ उ॒पद॑धाति॒ द्वे प॒श्चाथ्स॒मीची॑ दि॒शावँ॒विधृ॑त्या॒ अथो॑ प॒शवो॒ वै छन्दाꣳ॑सि प॒शूने॒वाऽस्मै॑ स॒मीचो॑ दधात्य॒ष्टावुप॑ दधात्य॒ष्टाख्ष॑रा गाय॒त्री गा॑य॒त्रोऽग्निर्या॑वा॒ने॒वाऽग्निस्तश्चि॑नु॒तेऽष्टावुप॑ दधात्य॒ष्टाख्ष॑रा गाय॒त्री गा॑य॒त्री सु॑व॒र्गँल्लो॒कम॑-ञ्जसा वेद सुव॒र्गस्य॑ लो॒कस्य॒ ॥ १८ ॥ प्रज्ञा॑त्यै॒ त्रयो॑दश लोकं॒पृणा॒ उप॑ दधात्येक॑विꣳशति॒स्सं प॑द्यन्ते

प्रतिष्ठा वा एकविꣳशः प्रतिष्ठा गार्हपत्य एकविꣳशस्यैव प्रतिष्ठाङ्गार्हपत्यमनु प्रति तिष्ठति प्रत्यग्निञ्चिक्यानस्तिष्ठति य एवँव्वेद पञ्चचितीकञ्चिन्वीत प्रथमञ्चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे त्रिचितीकञ्चिन्वीत द्वितीयञ्चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु ॥ १९ ॥ प्रति तिष्ठत्येकचितीकञ्चिन्वीत तृतीयञ्चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गँल्लोकमेति पुरीषेणाऽभ्यूहति तस्मान्माꣳसेनाऽस्थि छन्नन्न दुश्चर्मा भवति य एवँव्वेद पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सं पद्यन्ते दशाक्षरा विराडन्नँव्विराड्विराज्येवाऽन्नाद्ये प्रति तिष्ठति ॥ २० ॥ अध्यवसाययति ह्येतद्विश्वामित्रस्याऽदधत द्वे लोकस्य लोकेषु सप्तचत्वारिꣳशच्च ॥ ३ ॥

वि वा एतौ द्विषाते यश्च पुराऽग्निर्यश्चोखायाꣳ समितमिति चतसृभिस्सन्नि वपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳ शास्ति समितमित्याह तस्माद्ब्रह्मणा क्षत्रꣳ समेति यत्सन्न्युप्य विहरति तस्माद्ब्रह्मणा क्षत्रँव्व्येत्यृतुभि- ॥ २१ ॥ र्वा एतन्दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याहर्तुभिरेवैनन्दीक्षयित्वर्तुभिर्वि मुञ्चति वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनन्नैरृतीः कृष्णास्तिस्रस्तुषपका भवन्ति निरृत्यै वा एतद्भागधेयँय्यत्तुषा निरृत्यै रूपङ्कृष्णꣳ रूपेणैव निरृतिन्निरवदयत इमान्दिशँय्य- न्त्येषा ॥ २२ ॥ वै निरृत्यै दिक्स्वायामेव दिशि निरृतिन्निरवदयते स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निरृत्या आयतनꣳ स्व एवाऽऽयतने निरृतिन्निरवदयते शिक्यमभ्युप दधाति नैरृतो वै पाशस्साक्षादेवैनन्निरृतिपाशान्मुञ्चति तिस्र उप दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निरृतिमव यजते पराचीरुप ॥ २३ ॥ दधाति पराचीमेवाऽस्मान्निरृतिं प्र णुदतेऽप्रतीक्षमा यन्ति निरृत्या अन्तर्हित्यै मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय गार्हपत्यमुप तिष्ठन्ते निरृतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्त एकयोप तिष्ठन्त एकधैव यजमाने वीर्यन्दधति निवेशनस्सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिस्समर्धयन्ति ॥ २४ ॥ ऋतुभिरेषा पराचीरुपाऽष्टाचत्वारिꣳशच्च ॥ ४ ॥

पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषस्संमितो यज्ञपरुषैवैनवँव्वि मिमीते यावान्पुरुष ऊर्ध्वबाहुस्तावान्भवत्येतावद्वै पुरुषे वीर्यँव्वीर्येणैवैनवँव्वि मिमीते पक्षी भवति न ह्यपक्षः पति- तुमर्हत्यरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात्पक्षप्रवयाꣳसि वयाꣳसि व्याममात्रौ पक्षौ च पुच्छञ्च भवत्येतावद्वै पुरुषे वीर्य- ॥ २५ ॥ व्वीर्यसम्मितो वेणुना वि मिमीत आग्नेयो वै वेणु- स्सयोनित्वाय यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेवैन- ङ्कृषति यद्द्वादशगवेन सँव्वथ्सरेणैवेयँव्वा अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत्कृष्टञ्चाऽकृष्टञ्च ततो वा इमान्नाऽत्यदहद्यत्कृष्टञ्चाऽकृष्टञ्च ॥ २६ ॥ भवत्यस्या अनतिदाहाय द्विगुणन्त्वा अग्निमुद्यन्तुमर- हतीत्याहुर्यत्कृष्टञ्चाऽकृष्टञ्च भवत्यग्नेरुद्यत्या एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान् यत्प्राचे

उथ्सृजेद्रुद्रायाऽपि दद्ध्याद्यद्दक्षिणा पितृभ्यो नि धुवेद्यत्प्रतीचो रक्षाꣳसि हन्युरुदीच उथ्सृजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक् ॥ २७ ॥ तामेवैनाननूथ्सृजत्यथो खल्विमान्दिशमुथ्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूथ्सृजति दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते तस्माद्द-क्षिणोऽर्द्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते तस्मात्पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते तिस्रस्तिस्रस्सीताः ॥ २८ ॥ कृषति त्रिवृतमेव यज्ञमुखे वि यातय-त्योषधीर्वपति ब्रह्मणाऽऽन्नमवरुन्धेऽर्केऽर्कश्चीयते चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयस्सप्ता-ऽऽरण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य वपत्यन्नस्यान्नस्याऽवरुद्ध्यै कृष्टे वपति कृष्टे ह्योषधयः प्रतितिष्ठन्त्यनुसीतँव्वपति प्रजात्यै द्वादशसु सीतासु वपति द्वादश मासास्सँव्वथ्सरस्सँव्व-थ्सरेणैवाऽस्मा अन्नं पचति यदग्निचि- ॥ २९ ॥ दनवरुद्धस्याऽश्ञीयादवरुद्धेन व्यृद्ध्येत ये वन-स्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्याऽवरुद्ध्यै दिग्भ्यो लोष्टान्थ्समस्यति दिशामेव वीर्यमवरुद्ध्य दिशाँव्वीर्येऽग्निश्चिनुते यन्द्विष्यात्तत्र स स्यात्तस्यै दिशो लोष्टमा हरेदिषमूर्जमहमित आ दद इतीषमेवोर्जन्तस्यै दिशोऽव रुन्धे क्षोधुको भवति यस्तस्यान्दिशि भवत्युत्तरवेदिमुप वपत्युत्तरवेद्याꣳ ह्यग्निश्चीयतेऽथो पशवो वा उत्तरवेदिः पशूनेवाऽव रुन्धेऽथो यज्ञपरुषोऽनन्तरित्यै ॥ ३० ॥ च भवत्येतावद्वै पुरुषे वीर्यं-य्यत्कृष्टश्चाऽकृष्टश्च दिक्सीता अग्निचिदव पञ्चविꣳशतिश्च ॥ ५ ॥

अग्ने तव श्रवो वय इति सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानर-मव रुन्धे षड्भिर्नि वपति षड्वा ऋतवस्सँव्वथ्सरस्सँव्वथ्सरोऽग्निर्वैश्वानरस्साक्षादेव वैश्वानरमव रुन्धे समुद्रँव्वै नामैतच्छन्दस्समुद्रमनु प्रजाः प्र जायन्ते यदेतेन सिकता निवपति प्रजानां प्रजन-नायेन्द्रो ॥ ३१ ॥ वृत्राय वज्रं प्राऽहरथ्स त्रेधा व्यभवथ्स्फ्यस्तृतीयꣳ रथस्तृतीयय्यूपस्तृतीयय्येऽन्त-श्शरा अशीर्यन्त ताश्शर्करा अभवन्तच्छर्कराणाꣳ शर्करत्वँव्वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभि-रग्निं परिमिनोति वज्रेणैवाऽस्मै पशून्परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्माथ्स्थेयान-स्थेयसो नोप हरते त्रिसप्ताभिः पशुकामस्य ॥ ३२ ॥ परि मिनुयाथ्सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवाऽस्मै पशूनव रुन्धे त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्या अपरिमिताभिः परि मिनुयादपरिमितस्याऽवरुद्ध्यै यङ्कामयेताऽपशुस्स्यादित्यपरि-मित्य तस्य शर्करास्सिकता व्यूहेदपरिगृहीत एवाऽस्य विषूचीनꣳ रेतः परा सिञ्चत्यपशुरेव भवति ॥ ३३ ॥ यङ्कामयेत पशुमान्थ्स्यादिति परिमित्य तस्य शर्करास्सिकता व्यूहेत्परिगृहीत एवाऽस्मै समीचीनꣳ रेतस्सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यश्शंय्युं बार्हस्पत्यं मेधो नोपाऽनमथ्सोऽग्निं प्राऽविश- ॥ ३४ ॥ थ्सोऽग्नेः कृष्णो रूपङ्कृत्वोदायत सोऽश्वं प्राऽविशथ्सोऽश्वस्याऽवान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राऽविशत्तमेवाऽव रुन्धे

प्रजापतिनाऽग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाऽग्निश्चिनुते पुष्कर-पर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाऽग्निश्चिनुतेऽपां पृष्ठमसीत्युप दधात्यपाँवा एतत्पृष्ठय्यँत्पुष्करपर्णꣳ रूपेणैवैनदुप दधाति ॥ ३५ ॥ इन्द्रः पशुकामस्य भवत्यविशश्सयोनिर्वृविꣳशतिश्च ॥ ६ ॥

ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमानस्सृजते ब्रह्म जज्ञानमित्याह तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवँवेद ब्रह्म-वादिनो वदन्ति न पृथिव्यान्नाऽन्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्याश्चिन्वीत पृथिवीꣳ शुचाऽर्पयेन्नौषधयो न वनस्पतयः ॥ ३६ ॥ प्र जायेरन्यदन्तरिक्षे चिन्वीताऽन्तरिक्षꣳ शुचा-ऽर्पयेन्न वयाꣳसि प्र जायेरन्यद्दिवि चिन्वीत दिवꣳ शुचाऽर्पयेन्न पर्जन्यो वर्षेद्रुक्ममुप दधात्य-मृतँवै हिरण्यममृत एवाऽग्निश्चिनुते प्रजात्यै हिरण्मयं पुरुषमुप दधाति यजमानलोकस्य विधृत्यै यदिष्टकाया आतृण्णमनूपदद्ध्यात्पशूनाञ्च यजमानस्य च प्राणमपि दद्ध्याद्दक्षिणतः ॥ ३७ ॥ प्राञ्चमुप दधाति दाधार यजमानलोकन्न पशूनाञ्च यजमानस्य च प्राणमपि दधात्यथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुथ्सृष्ट्यै द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनं प्रति ष्ठापयति स्रुचावुप दधात्याज्यस्य पूर्णाङ्कार्ष्मर्यमयीन्दद्ध्नः पूर्णामौदुम्बरीमियँवै कार्ष्मर्यमय्यसावौदुंबरीमे एवोप धत्ते ॥ ३८ ॥ तूष्णीमुप दधाति न हीमे यजुषाऽऽप्तुमर्हति दक्षिणाङ्कार्ष्मर्यमयीमुत्तरामौ-दुंबरीन्तस्मादस्या असावुत्तराऽऽज्यस्य पूर्णाङ्कार्ष्मर्यमयीँवज्रो वा आज्यँवज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति दद्ध्नः पूर्णामौदुंबरीं पशवो वै दद्ध्यगुंदुंबरः पशुष्वेवो-र्जन्दधाति पूर्णे उप दधाति पूर्णे एवैनं- ॥ ३९ ॥ ममुष्मिँल्लोक उप तिष्ठेते विराज्यग्निश्चेतव्य इत्याहुस्स्रुग्वै विराड्यथ्स्रुचावुपदधाति विराज्येवाऽग्निश्चिनुते यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मँव्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यप हन्त्यक्ष्णया व्याघारयति तस्मा-दक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै ॥ ४० ॥ वनस्पतयो दक्षिणतो धत्त एनन्तस्मादक्ष्णया पञ्च च ॥ ७ ॥

स्वयमातृण्णामुप दधातीयँवै स्वयमातृण्णेमामेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवाऽस्या-न्दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाऽग्निश्चिनुते प्रथमेष्टकोपधीयमाना पशूनाञ्च यजमान-स्य च प्राणमपि दधाति स्वयमातृण्णा भवति प्राणानामुथ्सृष्ट्या अथो सुवर्गस्य लोकस्याऽनुख्या-त्या अग्नावग्निश्चेतव्य इत्याहुरेष वा ॥ ४१ ॥ अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकाय्यँजुष्कृतां प्र यच्छेत्तां ब्राह्मणश्चोप दद्ध्यातामग्नावेव तदग्निश्चिनुत ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्ट-कामुपदधाति त्रीन् वरान्दद्यात्त्रयो वै प्राणाः प्राणानाꣳ स्पृत्यै द्वावेव देयौ द्वौ हि प्राणावेक एव

देय एको हि प्राणः पशु- ॥ ४२ ॥ र्वा एष यदग्निर्न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति पशूनान्धृत्यै द्वाभ्यां प्रतिष्ठित्यै काण्डात्काण्डात्प्ररोहन्तीत्याह काण्डेनकाण्डेन ह्येषा प्रतितिष्ठत्येवा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै देवलक्ष्मव्वै त्र्यालिखिता तामुत्तरलक्ष्माणन्देवा उपाऽदधताऽधरलक्ष्माणमसुरा य-॥ ४३ ॥ ङ्कामयेत वसीया-न्थ्स्यादित्युत्तरलक्ष्माणन्तस्योप दध्याद्वसीयानेव भवति यङ्कामयेत पापीयान्थ्स्यादित्यधरल-क्ष्माणन्तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान्भवति त्र्यालिखिता भवतीमे वै लोकास्त्र्यालिखितैभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेत्यङ्गिरसस्सुवर्गँल्लोकँय्यतः पुरोडाशः कूर्मो भूत्वाऽनु प्राऽसर्प- ॥ ४४ ॥ द्यत्कूर्ममुपदधाति यथा क्षेत्रविदञ्जसा नयत्येवमेवैनङ्कूर्मस्सुवर्गँल्लोक-मञ्जसा नयति मेधो वा एष पशूनाँय्यत्कूर्मो यत्कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उप तिष्ठन्ते श्मशानव्वा एतत्क्रियते यन्मृतानां पशूनाꣳ शीरुषाण्युपधीयन्ते यज्जीवन्तङ्कूर्ममुपदधाति तेनाऽश्मशानचिद्वास्तव्यो वा एष यत् ॥ ४५ ॥ कूर्मो मधु वाता ऋतायत इति दध्ना मधुमिश्रेणा-ऽभ्यनक्ति स्वदयत्येवैनङ्ग्राम्यव्वा एतदन्नँय्यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाऽभ्यनक्त्युभयस्या-ऽवरुद्ध्यै मही द्यौः पृथिवी च न इत्याहाऽऽभ्यामेवैनमुभयतः परि गृह्णाति प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै पुरस्तात्प्रत्यञ्चमुप दधाति तस्मात् ॥ ४६ ॥ पुरस्तात्प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते यो वा अपनाभिमग्निञ्चिनुते यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिꣳसितोरुलूखलमुप दधात्येषा वा अग्नेर्नाभिस्सनाभिमेवाऽग्निञ्चिनुतेऽहिꣳसाया औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्ज-मेवाऽव रुन्धे मध्यत उप दधाति मध्यत एवाऽस्मा ऊर्जन्दधाति तस्मान्मध्यत ऊर्जा भुञ्जत इयद्भवति प्रजापतिना यज्ञमुखेन संमितमव हन्त्यन्नमेवाऽकर्वैष्णव्यर्चोप दधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतयो यज्ञ एव यज्ञं प्रति ष्ठापयति ॥ ४७ ॥ एष वै पशुर्यमसर्पदेष यत्तस्मात्त-स्माथ्सप्तविꣳशतिश्च ॥ ८ ॥

एषाव्वा एतल्लोकानाञ्ज्योतिस्सम्भृतँय्यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरव रुन्धे मध्यत उप दधाति मध्यत एवाऽस्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपाऽऽस्महे सिक-ताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्धे यङ्कामयेत क्षोधुकस्स्यादित्यू-नान्तस्योप ॥ ४८ ॥ दध्यात्क्षोधुक एव भवति यङ्कामयेताऽनुपदस्यदन्नमद्यादिति पूर्णान्तस्योप दध्यादनुपदस्यदेवाऽन्नमत्ति सहस्रव्वै प्रति पुरुषः पशूनाँय्यच्छति सहस्रमन्ये पशवो मध्ये पुरुष-शीरुषमुप दधाति सवीर्यत्वायोखायामपि दधाति प्रतिष्ठामेवैनद्गमयति व्यृद्धव्वा एतत्प्राणैरमेध्य-य्यत्पुरुषशीरुषममृतङ्खलु वै प्राणा ॥ ४९ ॥ अमृतꣳ हिरण्यं प्राणेषु हिरण्यशल्कान्प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैस्समर्द्धयति दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति शृतातङ्क्येन मेध्यत्वाय ग्राम्यव्वा एतदन्नँय्यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्याऽवरुद्ध्यै पशु-

शीरुषाण्युप दधाति पशवो वै पशुशीरुषाणि पशूनेवाऽव रुन्धे यङ्कामयेताऽपशुस्स्यादिति ॥ ५० ॥ विषूचीनानि तस्योप दद्ध्याद्विषूच एवाऽस्मात्पशून्दधात्यपशुरेव भवति यङ्कामयेत पशुमान्थ्स्यादिति समीचीनानि तस्योप दद्ध्यात्समीच एवाऽस्मै पशून्दधाति पशुमानेव भवति पुरस्तात्प्रतीचीनमश्वस्योप दधाति पश्चात्प्राचीनमृषभस्याऽपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवाऽस्मै समीचो दधात्येतावन्तो वै पशवो ॥ ५१ ॥ द्विपादश्च चतुष्पादश्च तान् वा एतदग्नौ प्र दधाति यत्पशुशीरुषाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान्पशूञ्छुचमनूथ्सृजति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसश्शुचा ह्यृतास्सर्पशीरुषमुप दधाति यैव सर्पे त्विषिस्तामेवाऽव रुन्धे ॥ ५२ ॥ यथ्समीचीनं पशुशीरुषैरुपदद्ध्याद्ग्राम्यान्पशून्दꣳशुकास्स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेदव तान्त्विषिꣳ रुन्धे या सर्पे न ग्राम्यान्पशून् हिनस्ति नाऽऽरण्यानथो खलूपधेयमेव यदुपदधाति तेन तान्त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम् ॥ ५३ ॥ ऊनान्तस्योप प्राणास्स्यादिति वै पशवो रुन्धे चतुश्चत्वारिꣳशच्च ॥ ९ ॥

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवाऽस्मै प्र जनयति पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति पञ्च पश्चात् ॥ ५४ ॥ प्राचीरुप दधाति पश्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादेवाऽस्मै प्राचीनꣳ रेतो दधाति पञ्च पुरस्तात्प्रतीचीरुप दधाति पञ्च पश्चात्प्राचीस्तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते पञ्चोत्तरतश्छन्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्थ्स्वमायतनमभि पर्यूहत इयव्वा अग्नेरतिदाहादबिभेथ्सैता ॥ ५५ ॥ अपस्या अपश्यत्ता उपाऽधत्त ततो वा इमान्नाऽत्यदहद्यदपस्या उपदधात्यस्या अनतिदाहायोवाच हेयमददिथ्स ब्रह्मणाऽन्नय्यस्यैता उपधीयान्तै य उ चैना एवव्वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान्दधाति तस्माद्वदन्प्राणन्पश्यञ्छृण्वन्पशुर्जायतेऽयं पुरो ॥ ५६ ॥ भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधाराऽयन्दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधाराऽयं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तराथ्सुवरित्युत्तरतश्श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दशदशोप दधाति सवीर्यत्वायाऽक्ष्ण्णयो- ॥ ५७ ॥ प दधाति तस्मादक्ष्ण्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिव्वेदर्ध्नोत्येव य आसामेवं बन्धुताव्वेद बन्धुमान्भवति य आसामेवङ्क्लृप्तिव्वेद कल्पते- ॥ ५८ ॥ ऽस्मै य आसामेवमायतनव्वेदाऽऽयतनवान्भवति य आसामेवं प्रतिष्ठाव्वेद प्रत्येव तिष्ठति प्राणभृत उपधाय सय्यत उप दधाति प्राणानेवाऽस्मिन्धित्वा सय्यद्भिस्सय्यच्छति तथ्सय्यताꣳ सय्यत्त्वमथो प्राण एवाऽपानन्दधाति

तस्मात्प्राणापानौ सञ्चरतो विषूचीरूपं दधाति तस्माद्विष्वञ्चौ प्राणापानौ यद्वा अग्नेरसंय्यत- ॥ ५९ ॥ मसुवर्ग्यमस्य तथ्सुवर्ग्योऽग्निर्यथ्संय्यतं उपदधाति समेवैनंय्यच्छति सुवर्ग्यमेवाऽक- स्व्यविर्वयः कृतमयानामित्याह वयोभिरेवाऽयानवं रुन्धेऽयैर्वयाꣳसि सर्वतो वायुमतीर्भवन्ति तस्मादयꣳ सर्वतः पवते ॥ ६० ॥ पश्चादेताः पुरोऽरुण्या कल्पतेऽसंय्यतं पञ्चत्रिꣳशच्च ॥ १० ॥

गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्त्या सह । बृहत्युष्णिहा ककुथ्सूचीभिश्शिम्यन्तु त्वा । द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा । सछन्दा या च विच्छन्दास्सूचीभिश्शिम्यन्तु त्वा । महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः । मेघ्या विद्युतो वाचस्सूचीभिश्शिम्यन्तु त्वा । रजता हरिणी- स्सीसा युजो युज्यन्ते कर्मभिः । अश्वस्य वाजिनस्त्वचि सूचीभिश्शिम्यन्तु त्वा । नारी- ॥ ६१ ॥ स्ते पत्नयो लोम वि चिन्वन्तु मनीषया । देवानां पत्नीर्दिशस्सूचीभिश्शिम्यन्तु त्वा । कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वंव्वियूय । इहेहैषाङ्कृणुत भोजनानि ये बर्हिषो नमोवृक्तिन्न जग्मुः ॥ ६२ ॥ नारीस्त्रिꣳशच्च ॥ ११ ॥

कस्त्वा च्छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति । क उं ते शमिता कविः । ऋतवस्त ऋतुधा परुश्शमितारो वि शासतु । संव्वथ्सरस्य धायसा शिमीभिश्शिम्यन्तु त्वा । दैव्या अद्ध्वर्यवस्त्वा च्छ्यन्तु वि च शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः । अर्द्धमासाः परूꣳषि ते मासाश्छ्यन्तु शिम्यन्तः । अहोरात्राणि मरुतो विलिष्टꣳ ॥ ६३ ॥ सूदयन्तु ते । पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु । द्यौस्ते नक्षत्रैस्सह रूपङ्कृणोतु साधुया । शन्ते परेभ्यो गात्रे- भ्यश्शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यश्शमु ते तनुवे भुवत् ॥ ६४ ॥ विलिष्टन्त्रिꣳशच्च ॥ १२ ॥

विष्णुमुखा अन्नपते यावती वि वै पुरुषमात्रेणाऽग्रे तव श्रवो वयो ब्रह्म जज्ञानꣳ स्वयमातृण्णामेषाव्वै पशुर्गायत्री कस्त्वा द्वादश ॥ १२ ॥ विष्णुमुखा अपचितिमान् वि वा एतावग्रे तव स्वयमातृण्णाव्विषूचीनानि गायत्री चतुष्षष्टिः ॥ ६४ ॥ विष्णुमुखास्तनुवे भुवत् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण -यजुर्वेदीय-तैत्तिरीय -संहितायां पञ्चमकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ पञ्चमकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्री॒गु॒रुभ्यो॒ न॒मः॒ हरिः ओ(४)म् ॥

उ॒थ्स॒न्नय॒ज्ञो वा ए॒ष यद॒ग्निः किँवाऽहै॒तस्य॑ क्रि॒यते॒ किँवा॒ न यद्वै य॒ज्ञस्य॑ क्रि॒यमा॑णस्याऽन्त॒-र्यन्ति॒ पूय॑ति॒ वा अ॑स्य॒ तदा॑श्वि॒नीरुप॑ दधात्य॒श्विनौ॒ वै दे॒वाना॑ं भि॒षजौ॒ ताभ्या॑मे॒वाऽस्मै॑ भेष॒जङ्क॑रोति॒ पञ्चोप॑ दधाति॒ पाङ्क्तो॑ य॒ज्ञो याव॑ाने॒व य॒ज्ञस्तस्मै॑ भेष॒जङ्क॑रोत्यृत॒व्या॑ उप॑ दधात्यृतू॒नाङ्क्लृप्त्यै॑ ॥ १ ॥ पञ्चोप॑ दधाति॒ पञ्च॒ वा ऋ॒तवो॒ याव॑न्त ए॒वर्तव॒स्तान्क॑ल्पयति समा॒नप्र॑भृतयो भवन्ति समा॒नोद॑र्का॒-स्तस्मा॑थ्समा॒ना ऋ॒तव॒ एके॑न प॒देन॒ व्याव॑र्तन्ते॒ तस्मा॑दृ॒तवो॒ व्याव॑र्तन्ते प्राण॒भृत॒ उप॑ दधात्यृ॒तुष्वे॒व प्रा॒णान्द॑धाति॒ तस्मा॑थ्समा॒नास्सन्त॑ ऋ॒तवो॒ न जी॑र्यन्त्यथो॒ प्र ज॑नयत्ये॒वैना॑ने॒ष वै वा॒युर्यत्प्रा॒णो यदृ॑त॒व्या॑ उप॒धाय॑ प्राण॒भृत॑ ॥ २ ॥ उप॒दधा॑ति॒ तस्मा॒थ्सर्वा॑नृ॒तून॒नु॑ वा॒युरा व॑रीवर्ति वृष्टि॒सनी॒रुप॑ दधाति॒ वृष्टि॑मे॒वाऽव॑ रुन्धे॒ यदे॑क॒धोप॑द॒द्ध्याद॑कमृ॒तुँवर्॒षेद॑नुपरि॒हारꣳ॑ सादयति॒ तस्मा॒थ्सर्वा॑नृ॒तून् व॑र्॒षति॒ यत् प्रा॒ण॒भृत॑ उप॒धाय॑ वृष्टि॒सनी॑रुप॒दधा॑ति॒ तस्मा॑द्वा॒युप्र॑च्युता दि॒वो वृष्टि॑रीर्ते प॒शवो॒ वै व॑यस्या॑ नाना॑मनस॒ः खलु॒ वै प॒शवो॒ नाना॑व्रता॒स्तेऽप ए॒वाऽभि सम॑नसो॒ ॥ ३ ॥ यङ्का॒मये॑ताऽप॒शुस्स्या॒दिति॑ वय॒स्या॑स्तस्यौ॒प॒धाया॒ऽप॒स्या॑ उप॑ द॒द्ध्या॒दस॑ञ्ज्ञानमे॒वाऽस्मै॑ प॒शुभि॑ः करोत्यप॒शुरे॒व भ॑वति॒ यङ्का॒मये॑त प॒शु॒मान्थ्स्या॒दित्य॑प॒स्या॑स्तस्यौ॒प॒धाय॑ वय॒स्या॑ उप॑ द॒द्ध्याथ्सं॒ज्ञान॑मे॒वाऽस्मै॑ प॒शुभि॑ः करोति प॒शु॒माने॒व भ॑वति॒ चत॑स्रः पु॒रस्ता॒दुप॑ दधाति॒ तस्मा॑च्च॒त्वारि॒ चक्षु॑षो रू॒पाणि॒ द्वे शु॒क्ले द्वे कृ॒ष्णे ॥ ४ ॥ मू॒र्द्धन्व॒-ती॑र्भवन्ति॒ तस्मा॑त्पु॒रस्ता॑न्मू॒र्द्धा पञ्च॒ दक्षि॑णाया॒ꣳ श्रोण्या॒मुप॑ दधाति॒ पञ्चोत्त॑रस्या॒न्तस्मा॑त्प॒श्चाद्व॒-र्षी॑यान्पु॒रस्ता॑त्प्रव॒णः प॒शुर्ब॒स्तो वय॒ इति॒ दक्षि॒णेऽꣳस॒ उप॑ दधाति वृ॒ष्णिर्वय॒ इत्यु॒त्तरेऽꣳसा॑वे॒व प्रति॑ दधाति व्या॒घ्रो वय॒ इति॒ दक्षि॑णे प॒क्ष उप॑ दधाति सि॒ꣳहो वय॒ इत्यु॒त्तरे॑ प॒क्षयो॑रे॒व वी॒र्य॑न्दधाति॒ पुरु॑षो॒ वय॒ इति॒ मद्ध्ये॒ तस्मा॒त्पुरु॑षः प॒शू॒नामधि॑पतिः ॥ ५ ॥ क्लृ॒प्त्यै॑ उप॒धाय॑ प्रा॒ण॒भृत॒स्सम॑नसः कृ॒ष्णे पुरु॑षो॒ वय॒ इति॒ पञ्च॑ च ॥ १ ॥

इन्द्रा॑ग्नी॒ अव्य॑थमाना॒मिति॑ स्वयमातृ॒ण्णामुप॑ दधातीन्द्रा॒ग्निभ्या॒ँवा इ॒मौ लो॒कौ विधृ॑ताव॒न-यो॑र्लो॒कयो॒र्विधृ॑त्या॒ अधृ॑तेव॒ वा ए॒षा यन्म॑द्ध्य॒मा चिति॑र॒न्तरि॑क्षमिव॒ वा ए॒षेन्द्रा॑ग्नी॒ इत्या॑हेन्द्रा॒ग्नी वै दे॒वाना॑मोजो॒भृता॒वोज॑सै॒वैना॑म॒न्तरि॑क्षे॒ चिनु॒ते॒ धृत्यै॑ स्वयमातृ॒ण्णामुप॑ दधात्य॒न्तरि॑क्ष॒वै स्वयमा-

तृण्णाऽन्तरिक्षमेवोप धत्तेऽश्वमुप ॥ ६ ॥ घ्रापयति प्राणमेवाऽस्यान्दधात्यथो प्राजापत्यो वा अश्वः
प्रजापतिनैवाऽग्निञ्चिनुते स्वयमातृण्णा भवति प्राणानामुथ्सृष्ट्या अथो सुवर्गस्य लोकस्या-
ऽनुख्यात्यै देवानाव्वै सुवर्गल्लोकय्यतान्दिशस्समव्लीयन्त त एता दिश्या अपश्यन्ता उपाऽदधत
ताभिर्वै ते दिशोऽदृꣳहन् यद्दिश्या उपदधाति दिशाव्विधृत्यै दश प्राणभृतः पुरस्तादुप ॥ ७ ॥ दधाति
नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात्पुरस्तात्प्राणा ज्योतिष्मतीमुत्तमामुप
दधाति तस्मात्प्राणानाव्वाग्ज्योतिरुत्तमा दशोप दधाति दशाक्षरा विराड्विराट्छन्दसाञ्ज्योति-
र्ज्योतिरिव पुरस्ताद्धत्ते तस्मात्पुरस्ताज्ज्योतिरुपाऽऽस्महे छन्दाꣳसि पशुष्वाजिमयुस्तान्बृहत्युदजय-
त्तस्माद्बार्हताः ॥ ८ ॥ पशव उच्यन्ते मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृतो
मासाः पृथिवी छन्द इति पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते
तस्मादुत्तरतोभिप्रयायी जयति षट्त्रिꣳशथ्सं पद्यन्ते षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो
बृहत्यैवाऽस्मै पशूनव रुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैता ॥ ९ ॥ उपधीयन्ते गच्छति
स्वाराज्यꣳ सप्त वालखिल्याः पुरस्तादुप दधाति सप्त पश्चाथ्सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ
प्राणानाꣳ सवीर्यत्वाय मूर्द्धाऽसि राडिति पुरस्तादुप दधाति यन्त्री राडिति पश्चात्प्राणानेवाऽस्मै
समीचो दधाति ॥ १० ॥ अश्वमुप पुरस्तादुप बार्हता एताश्चतुस्त्रिꣳशच्च ॥ २ ॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन्ता अन्य-
थाऽनूच्याऽन्यथोपाऽदधत तदसुरा नाऽन्ववायन्ततो देवा अभवन्पराऽसुरा यदक्ष्णयास्तोमीया
अन्यथाऽनूच्याऽन्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति
पुरस्तादुप दधाति यज्ञमुखव्वै त्रिवृ- ॥ ११ ॥ द्यज्ञमुखमेव पुरस्ताद्वि यातयति व्योम सप्तदश इति
दक्षिणतोऽन्नव्वै व्योमाऽन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यते धरुण
एकविꣳश इति पश्चात्प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त
ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्ता-
॥ १२ ॥ दुप दधाति द्वौ त्रिवृतावभिपूर्वय्यँज्ञमुखे वि यातयत्यभिवर्तस्सविꣳश इति दक्षिणतो-
ऽन्नव्वा अभिवर्तोऽन्नꣳ सविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यते वर्चो द्वाविꣳश
इति पश्चाद्यद्विꣳशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाऽभिपूर्वमन्नाद्ये प्रति तिष्ठति तपो
नवदश इत्युत्तरतस्माथ्सव्यो ॥ १३ ॥ हस्तयोस्तपस्वितरो योनिश्चतुर्विꣳश इति पुरस्तादुप दधाति
चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञमुखय्यँज्ञमुखमेव पुरस्ताद्वि यातयति गर्भाः पञ्चविꣳश इति
दक्षिणतोऽन्नव्वै गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यत
ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति संभरणस्त्रयोविꣳश इ-
॥ १४ ॥ त्युत्तरतस्तस्माथ्सव्यो हस्तयोस्सम्भार्यतरः क्रतुरेकत्रिꣳश इति पुरस्तादुप दधाति वाग्वै

क्रतुर्यज्ञमुखव्ँवाग्यज्ञमुखमेव पुरस्ताद्वि यातयति ब्रद्ध्रस्य विष्टपञ्चतुस्त्रिꣳश इति दक्षिणतोऽसौ वा आदित्यो ब्रद्ध्रस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्द्धो ब्रह्मवर्चसितरः प्रतिष्ठा त्रयस्त्रिꣳश इति पश्चात्प्रतिष्ठित्यै नाकष्षट्त्रिꣳश इत्युत्तरतस्सुवर्गो वै लोको नाकस्सुवर्गस्य लोकस्य समष्ट्यै ॥ १५ ॥ वै त्रिवृदिति पुरस्ताँथ्सव्यस्त्रयोविꣳश इति सुवर्गो वै पञ्च च ॥ ३ ॥

आशुर्व्योम धरुणो भान्तः प्रतूर्तिरभिवर्तो वर्चस्तपो योनिर्गर्भा ओजस्संभरणः क्रतुर्ब्रद्ध्रस्य प्रतिष्ठा नाकष्षोडश ॥

अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखव्ँवा अग्निर्यज्ञमुखन्दीक्षा यज्ञमुखं ब्रह्म यज्ञमुखन्त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति नृचक्षसां भागोऽसीति दक्षिणतश्शुश्रुवाꣳसो वै नृचक्षसोऽन्नन्धाता जातायैवाऽस्मा अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ सप्तदशस्तोम इत्याहाऽन्नव्ँवै जनित्र- ॥ १६ ॥ मन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यते मित्रस्य भागोऽसीति पश्चात्प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवाऽस्मिन्दधाति दिवो वृष्टिर्वातास्स्पृता एकविꣳशस्स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्या इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदश ॥ १७ ॥ ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति वसूनां भागोऽसीति पुरस्तादुप दधाति यज्ञमुखव्ँवै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखञ्चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वि यातयत्यादित्यानां भागोऽसीति दक्षिणतोऽन्नव्ँवा आदित्या अन्नं मरुतोऽन्नङ्गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यतेऽदित्यै भागो- ॥ १८ ॥ ऽसीति पश्चात्प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवस्सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्द्धो ब्रह्मवर्चसितरस्सावित्रवती भवति प्रसूत्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखव्ँवै धर्त्रो ॥ १९ ॥ यज्ञमुखञ्चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वि यातयति यावानां भागोऽसीति दक्षिणतो मासा वै यावा अर्द्धमासा अयावास्तस्माद्दक्षिणावृतो मासा अन्नव्ँवै यावा अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यत ऋभूणां भागोऽसीति पश्चात्प्रतिष्ठित्यै विवर्तोऽष्टाचत्वारिꣳश इत्युत्तरतोऽनयोर्लोकयोस्सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ ॥ २० ॥ यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवत्याऽस्य मुख्यो जायते यस्याऽन्नवतीर्दक्षिणतोऽत्त्यन्नमाऽस्याऽन्नादो जायते यस्य प्रतिष्ठावतीः पश्चात्प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरत ओजस्व्येव भवत्याऽस्यौजस्वी जायतेऽर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रय्ँयदेषा विधा ॥ २१ ॥ विधीयतेऽर्क एव तदर्क्यमनु वि धीयतेऽत्त्यन्नमाऽस्याऽन्नादो जायते यस्यैषा विधा विधीयते य उ चैनामेवव्ँवेद सृष्टीरुप दधाति यथासृष्टमेवाऽव रुन्धे न वा इदन्दिवा न नक्तमासीदव्यावृत्तन्ते देवा एता व्युष्टीरपश्यन्ता उपाऽदधत

ततो वा इदवँव्यौँच्छद्यस्यैता उपधीयन्ते व्येंवाऽस्मा उच्छत्यथो तम एवाऽप हते ॥ २२ ॥ वै जनित्रं पञ्चदशोऽदित्यै भागो वै धर्त्रस्समावद्धीर्यौ विधा ततो वा इदञ्चतुर्दश च ॥ ४ ॥

अग्नेर्नृचर्व्वसाज्ञनित्रं मित्रस्येन्द्रस्य वसूनामादित्यानामदित्यै देवस्य सवितुस्सावित्रवती धर्त्रो यावानामृभूणावूँविवर्तश्चतुर्दश ॥

अग्ने जातान्प्र णुदा नस्सपत्नानिति पुरस्तादुप दधाति जातानेव भ्रातृव्यान्प्र णुदते सहसा जातानिति पश्चाज्जनिष्यमाणानेव प्रति नुदते चतुश्चत्वारिꣳशस्स्तोम इति दक्षिणतो ब्रह्मवर्चसँव्वै चतुश्चत्वारिꣳशो ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्द्धौ ब्रह्मवर्चसितरष्षोडशस्स्तोम इत्युत्तरत ओजो वै षोडश ओज एवोत्तरतो धत्ते तस्मा- ॥ २३ ॥ दुत्तरतोभिप्रयायी जयति वज्रो वै चतुश्चत्वारिꣳशो वज्रष्षोडशो यदेते इष्टके उपदधाति जाताꣳश्चैव जनिष्यमाणाꣳश्च भ्रातृव्यान्प्र-णुद्य वज्रमनु प्र हरति स्तृत्यै पुरीषवतीं मद्ध्य उप दधाति पुरीषँव्वै मद्ध्यमात्मनस्सात्मानमेवा-ऽग्निश्चिनुते सात्माऽमुष्मिँल्लोके भवति य एवँव्वेदैता वा असपत्ना नामेष्टका यस्यैता उपधीयन्ते ॥ २४ ॥ नाऽस्य सपत्नो भवति पशुर्वा एष यदग्निर्विराज उत्तमायाञ्चित्यामुप दधाति विराजमेवोत्तमां पशुषु दधाति तस्मात्पशुमानुत्तमाँव्वाचँव्वदति दशदशोप दधाति सवीर्यत्वायाँ-ऽक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि वै छन्दाꣳसि सुवर्ग्याँ-ण्यासन्तैर्देवास्सुवर्गँल्लोकमायन्तेनर्षयो- ॥ २५ ॥ ऽश्राम्यन्ते तपोऽतप्यन्त तानि तपसाऽपश्य-न्तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपाऽदधत ताभिर्वै ते सुवर्गँल्लोकमायन् यदेता इष्टका उपदधाति यान्येव छन्दाꣳसि सुवर्ग्याणि तैरेव यजमानस्सुवर्गँल्लोकमेति यज्ञेन वै प्रजापतिः प्रजा असृजत तास्स्तोमभागैरेवाऽसृजत य- ॥ २६ ॥ थ्स्तोमभागा उपदधाति प्रजा एव तद्यजमानस्सृजते बृहस्पतिर्वा एतद्यज्ञस्य तेजस्समभरद्यथ्स्तोमभागा यथ्स्तोमभागा उपदधाति सतेजसमेवाऽग्निश्चिनुते बृहस्पतिर्वा एताँय्यज्ञस्य प्रतिष्ठामपश्यद्यथ्स्तोमभागा यथ्स्तोमभागा उपदधाति यज्ञस्य प्रतिष्ठित्यै सप्तसप्तोप दधाति सवीर्यत्वाय तिस्रो मद्ध्ये प्रतिष्ठित्यै ॥ २७ ॥ उत्तरतो धत्ते तस्मादुपधीयन्त ऋषयोऽसृजत यत्त्रिचत्वारिꣳशच्च ॥ ५ ॥

रश्मिरित्येवाऽऽदित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवꣳ सन्धिरित्यन्तरिक्षं प्रति-धिरिति पृथिवीँव्विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून्प्रकेत इति रुद्रान्थ्सुदीतिरि-त्यादित्यानोज इति पितॄꣳस्तन्तुरिति प्रजाः पृतनाषाडिति पशून्रेवदित्योषधीरभिजिदसि युक्तग्रावे- ॥ २८ ॥ न्द्राय त्वेन्द्रञ्जिन्वेत्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधाद्यन्तेत्यपानꣳ सꣳसर्प इति चक्षुर्वयोधा इति श्रोत्रन्ताः प्रजाः प्राणतीरपानतीः पश्यन्तीश्शृण्वतीर्न मिथुनी अभवन्तासु त्रिवृदसीत्येव मिथुनमदधात्ताः प्रजा मिथुनी ॥ २९ ॥ भवन्तीर्न प्राऽजायन्त तास्सꣳरोहोऽसि नीरोहोऽसीत्येव प्राऽजनयत्ताः प्रजाः

प्रजाता न प्रत्यतिष्ठन्ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रति ष्ठापयति सात्माऽन्तरिक्षꣳ रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्द्धुकः प्राणापानाभ्यां भवति य एवँव्वेद ॥ ३० ॥
युक्तग्रावा प्रजा मिथुन्यन्तरिक्षन्द्वादश च ॥ ६ ॥

नाकसद्भिर्वै देवास्सुवर्गँल्लोकमायन्तन्नाकसदान्नाकसत्त्वँय्यन्नाकसद उपदधाति नाकसद्भि-रेव तद्यजमानस्सुवर्गँल्लोकमेति सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नाऽस्मा अकं भवति यजमानायतनँव्वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते पृष्ठानाँव्वा एतत्तेज-स्संभृतँय्यन्नाकसदो यन्नाकसद ॥ ३१ ॥ उपदधाति पृष्ठानामेव तेजोऽव रुन्धे पञ्चचोडा उप दधात्य-फ्सरस एवैनमेता भूता अमुष्मिँल्लोक उप शेरेऽथो तनूपानीरेवैता यजमानस्य यन्द्विष्यात्तमुपद-धद्ध्यायेदेताभ्य एवैनन्देवताभ्य आ वृश्चति ताजगार्तिमार्च्छत्युत्तरा नाकसद्भ्य उप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत् ॥ ३२ ॥ पश्चात्प्राचीमुत्तमामुप दधाति तस्मात्पश्चा-त्प्राची पत्न्यन्वास्ते स्वयमातृण्णाञ्च विकर्णीञ्चोत्तमे उप दधाति प्राणो वै स्वयमातृण्णाऽऽयुर्वि-कर्णी प्राणञ्चैवाऽऽयुश्च प्राणानामुत्तमौ धत्ते तस्मात्प्राणश्चाऽऽयुश्च प्राणानामुत्तमौ नाऽन्यामुत्त-रामिष्टकामुप दद्ध्याद्यदन्यामुत्तरामिष्टकामुपदद्ध्यात्पशूना- ॥ ३३ ॥ ञ्च यजमानस्य च प्राणञ्चा-ऽऽयुश्चाऽपि दद्ध्यात्तस्मान्नाऽन्योत्तरेष्टकोपधेया स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णाऽमू-मेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवाऽस्यान्दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाऽग्निञ्चिनुते स्वयमातृण्णा भवति प्राणानामुथ्सृष्ट्या अथो सुवर्गस्य लोकस्याऽनुख्यात्या एषा वै देवानाँव्वि-क्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु वि क्रमत उत्तरत उप दधाति तस्मा-दुत्तरतउपचारोऽग्निर्वायुमती भवति समिद्ध्यै ॥ ३४ ॥ संभृतँय्यन्नाकसदो यन्नाकसदस्तत्पशूनामेषा वै द्वाविꣳशतिश्च ॥ ७ ॥

छन्दाꣳस्युप दधाति पशवो वै छन्दाꣳसि पशूनेवाऽव रुन्धे छन्दाꣳसि वै देवानाँव्वामं पशवो वाममेव पशूनव रुन्ध एताꣳ ह वै यज्ञसेनश्चैत्रियायणश्चितिँव्विदाञ्चकार तया वै स पशूनवाऽरुन्ध यदेतामुपदधाति पशूनेवाऽव रुन्धे गायत्रीः पुरस्तादुप दधाति तेजो वै गायत्री तेज एव ॥ ३५ ॥ मुखतो धत्ते मूर्द्धन्वतीर्भवन्ति मूर्द्धानमेवैनꣳ समानानाङ्करोति त्रिष्टुभ उप दधातीन्द्रियँव्वै त्रिष्टुगिन्द्रियमेव मद्ध्यतो धत्ते जगतीरुप दधाति जागता वै पशवः पशूनेवाऽव रुन्धेऽनुष्टुभ उप दधाति प्राणा वा अनुष्टुप्प्राणानामुथ्सृष्ट्यै बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरुपाणि छन्दाꣳस्युप दधाति विषुरूपा वै पशवः पशव- ॥ ३६ ॥ श्छन्दाꣳसि विषुरूपानेव पशूनव रुन्धे विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैना एवँव्वेदाऽतिच्छन्दसमुप दधात्यतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनञ्छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसाय्य-

दर्तिच्छन्दा यदतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ समानानांङ्करोति द्विपदा उप दधाति द्विपाद्यजमानः प्रतिष्ठित्यै ॥ ३७ ॥ तेज एव पशवः पशवो यजमान एकश्च ॥ ८ ॥

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यथ्सयुजो नोपदध्याद्देवता अस्याऽग्निंवृञ्जीरन् यथ्सयुज उपदधात्यात्मनैवैनꣳ सयुजञ्चिनुते नाऽग्निना व्यृध्यतेऽथो यथा पुरुषस्स्नावभिस्सन्तत एवमेवैताभिरग्निस्सन्ततोऽग्निना वै देवास्सुवर्गँल्लोकमायन्ता अमूः कृत्तिका अभवन् यस्यैता उपधीयन्ते सुवर्गमेव ॥ ३८ ॥ लोकमेति गच्छति प्रकाशश्चित्रमेव भवति मण्डलेष्टका उप दधातीमे वै लोका मण्डलेष्टका इमे खलु वै लोका देवपुरा देवपुरा एव प्र विशति नाऽर्तिमार्च्छत्यग्निञ्चिक्यानो विश्वज्योतिष उप दधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाध्रत्येता वै देवतास्सुवर्ग्यास्ता एवाऽन्वारभ्य सुवर्गँल्लोकमेति ॥ ३९ ॥ सुवर्गमेव ता एव चत्वारि च ॥ ९ ॥

वृष्टिसनीरुप दधाति वृष्टिमेवाऽव रुन्धे यदेकधोपदध्यादेकमृतुँवर्षेदनुपरिहारꣳ सादयति तस्माथ्सर्वानृतून् वर्षति पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे सँय्यानीभिर्वै देवा इमाँल्लोकान्थ्समयुस्तथ्सँय्यानीनाꣳ सँय्यानित्वँय्यथ्सँय्यानीरुपदधाति यथाऽप्सु नावा सँय्यात्येव- ॥ ४० ॥ मेवैताभिर्यजमान इमाँल्लोकान्थ्सँय्याति प्लवो वा एषोऽग्नेर्यथ्सँय्यानीर्यथ्सँय्यानीरुपदधाति प्लवमेवैतमग्नय उप दधात्युत यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यहृत एवाऽस्याऽग्निरादित्येष्टका उप दधात्यादित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन्भूतिन्न प्राप्नोत्यादित्या ॥ ४१ ॥ एवैनं भूतिङ्गमयन्त्यसौ वा एतस्याऽऽदित्यो रुचमा दत्ते योऽग्निञ्चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवाऽस्मिन्नादित्यो रुचन्दधाति यथाऽसौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियन्धाम यद्घृतं प्रियेणैवैनन्धाम्ना समर्द्धय- ॥ ४२ ॥ त्यथो तेजसाऽनुपरिहारꣳ सादयत्यपरिवर्गमेवाऽस्मिन्तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्द्धयत स एता यशोदा अपश्यत्ता उपाऽधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन्धत्ते पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन् यशो दधाति ॥ ४३ ॥ एवं प्राप्नोत्यादित्या अर्द्धयत्येकान्न पञ्चाशच्च ॥ १० ॥

देवासुरास्सँय्यत्ता आसन्कनीयाꣳसो देवा आसन्भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन्ता उपाऽदधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन्वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्प्राच्यसीति प्राचीन्दिशमजयन्नूर्ध्वाऽसीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभव- ॥ ४४ ॥ न्पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाँल्लोकाञ्जयति भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यप्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपꣳ रूपेणैवाऽग्निमव रुन्धे पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान्द्रविणावतः कुरुत आयुष्या उप दधात्यायुरेवा- ॥ ४५ ॥ ऽस्मिन्दधात्यग्ने यत्ते परꣳ हृन्नामेत्याहैतद्वा अग्नेः प्रियन्धाम प्रियमेवाऽस्य

धामोपाऽऽप्नोति तावेहि सꣳ रभावहा इत्याह व्यैवैनेन परि धत्ते पाञ्चजन्येष्वप्यैद्धयग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाहर्तव्या उप दधात्येतद्वा ऋतूनां प्रियन्धाम यदृतव्या ऋतूनामेव प्रियन्धामाऽव रुन्धे सुमेक इत्याह सँव्वथ्सरो वै सुमेकस्सँव्वथ्सरस्यैव प्रियन्धामो-पाऽऽप्नोति ॥ ४६ ॥ अभवन्नायुरवर्तव्या उप षड्विꣳशतिश्च ॥ ११ ॥

प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तदश्वोऽभवद्यदश्वयत्तदश्वस्याऽश्वत्वन्तद्देवा अश्वमेधेनैव प्रत्यद-धुरेष वै प्रजापतिꣳ सर्वङ्करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्ति-स्सर्वस्य भेषजꣳ सर्वव्वा एतेन पाप्मानन्देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन्थ्सर्वं पाप्मानं-॥ ४७ ॥ न्तरति तरति ब्रह्महत्याय्योँऽश्वमेधेन यजते य उ चैनमेवव्वेदोत्तरव्वै तत्प्रजापतेर-क्ष्यश्वयत्तस्मादश्वस्योत्तरतोऽव घ्नन्ति दक्षिणतोऽन्येषां पशूनाव्वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वैतसस्स्व एवैनय्योनौ प्रति ष्ठापयति चतुष्टोमस्स्तोमो भवति सरड्ढ वा अश्वस्य सक्थ्याऽवृहत्तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोमस्स्तोमो भवत्यश्वस्य सर्वत्वाय ॥ ४८ ॥ सर्वं पाप्मानमवृहद्द्वादश च ॥ १२ ॥

उथ्सन्नयज्ञ इन्द्राग्नी देवा वा अक्ष्णयास्तोमीया अग्नेर्भागोऽस्यग्ने जातान्रश्मिरिति नाकसद्भिश्छन्दाꣳसि सर्वाभ्यो वृष्टिसनीर्देवासुराः कनीयाꣳसः प्रजापतेरक्षि द्वादश ॥ ४९ ॥ उथ्सन्नयज्ञो देवा वै यस्य मुख्यवतीर्नाक-सद्भिरेवैताभिरष्टाचत्वारिꣳशत् ॥ ५० ॥ उथ्सन्नयज्ञस्सर्वत्वाय ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ पञ्चमकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

देवासुरास्सय्यँत्ता आसन्ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत्ता उपाऽधत्त ताभिर्वै स तनुवमिन्द्रियव्वीर्यमात्मन्नधत्त ततो देवा अभवन्पराऽसुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियव्वीर्यं-य्यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाऽग्निꣳ सतनुश्चिनुते भवत्यात्मना पराऽस्य भ्रातृव्यो ॥ १ ॥ भवति यज्ञो देवेभ्योऽपाऽक्रामत्तमवरुधन्नाऽशक्नुवन्त एता यज्ञतनूरपश्यन्ता

उपाऽदधत ताभिर्वै ते यज्ञमवाऽरुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽव रुन्धे त्रयस्त्रि-ꣳशतमुप दधाति त्रयस्त्रिꣳशद्वै देवता देवता एवाऽव रुन्धेऽथो सात्मानमेवाऽग्निꣳ सतनुश्चिनुते सात्माऽमुष्मिँल्लोके ॥ २ ॥ भवति य एवव्वेद ज्योतिष्मतीरुप दधाति ज्योतिरेवाऽस्मिन्दधा-त्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाऽव रुन्धे सुकृताँव्वा एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाऽऽप्नोत्यथो अनूकाशमेवैतानि ॥ ३ ॥ ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्याऽनुख्यात्यै यथ्सꣳस्पृष्टा उपदध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यस्स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकङ्करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्त-स्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते ॥ ४ ॥ भ्रातृव्यो लोक एवैतान्येकचत्वारिꣳशच्च ॥ १ ॥

ऋतव्या उप दधात्यृतूनाङ्क्ल्प्त्यै द्वन्द्वमुप दधाति तस्माद्द्वन्द्वमृतवोऽधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषा द्वन्द्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्या अन्तश्श्लेषणव्वा एताश्चितीनाय्यदृतव्या यदृतव्या उपदधाति चितीनाव्विधृत्या अवकामनूप दधात्येषा वा अग्नेर्यो-निस्सयोनि- ॥ ५ ॥ मेवाऽग्निश्चिनुत उवाच ह विश्वामित्रोऽददिथ्स ब्रह्मणाऽन्नय्यस्यैता उपधीयान्तै य उ चैना एवव्वेददिति सव्वथ्सरो वा एतं प्रतिष्ठायै नुदते योऽग्निश्चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीश्चितिंश्चिनुते षड्वा ऋतवस्सव्वथ्सर ऋतुष्वेव सव्वथ्सरे प्रति तिष्ठत्येता वा ॥ ६ ॥ अधिपत्नीर्नामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति यन्द्विष्यात्तमुपद-ध्यायेदेताभ्य एवैनन्देवताभ्य आ वृश्चति ताजगार्तिमार्च्छत्यङ्गिरसस्सुवर्गँल्लोकय्यन्तो या यज्ञस्य निष्कृतिरासीत्तामृषिभ्यः प्रत्यौहन्तद्धिरण्यमभवद्यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषजमेवाऽस्मै करो-॥ ७ ॥ त्यथो रूपेणैवैनꣳ समर्द्धयत्यथो हिरण्यज्योतिषैव सुवर्गँल्लोकमेति साहस्रवता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्या इमा मे अग्न इष्टका धेनवस्सन्त्वित्याह धेनूरे-वैनाः कुरुते ता एनङ्कामदुघा अमुत्राऽमुष्मिँल्लोक उप तिष्ठन्ते ॥ ८ ॥ सयोनिमेता वै करोत्येकान्न चत्वारिꣳशच्च ॥ २ ॥

रुद्रो वा एष यदग्निस्स एतर्हि जातो यर्हि सर्वश्चितस्स यथा वथ्सो जातस्स्तनं प्रेप्सत्ये-वव्वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिन्न जुहुयादध्वर्युञ्च यजमानञ्च ध्यायेच्छतरु-द्रीयञ्जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानो यद्ग्राम्याणां पशूनां ॥ ९ ॥ पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचाऽर्पयेद्यदारण्यानामारण्याञ्जर्तिलयवाग्वा वा जुहुयाद्गवीधुक-यवाग्वा वा न ग्राम्यान्पशून् हिनस्ति नाऽऽरण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुका-श्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाऽऽहुत्यैव जुहोति न ग्राम्यान्पशून् हिनस्ति नाऽऽरण्या-

नङ्गिरसस्सुवर्गल्लोकय्यन्तो- ॥ १० ॥ ऽजायाङ्घर्मं प्राऽसिञ्चन्त्सा शोचन्ती पर्णं पराऽजिहीत सौऽ(१)र्कोऽभवत्तदर्कस्याऽर्कत्वमर्कपर्णेन जुहोति सयोनित्वायोदङ्तिष्ठञ्जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रन्निरवदयते चरमायामिष्टकायाञ्जुहोत्यन्तत एव रुद्रन्निरवदयते त्रेधाविभक्तञ्जुहोति त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्यान्करोतीयत्यग्रे जुहो- ॥ ११ ॥ त्यथेयत्यथेयति त्रय इमे लोका एभ्य एवैनँल्लोकेभ्यश्शमयति तिस्र उत्तरा आहुतीर्जुहोति षट्थ्सं पद्यन्ते षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति यदनुपरिक्रामञ्जुहुयादन्तरवचारिणꣳ रुद्रङ्कुर्यादथो खल्वाहुः कस्याँव्वाऽह दिशि रुद्रः कस्याँव्वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनꣳ शमय- ॥ १२ ॥ त्येता वै देवतास्सुवर्ग्या या उत्तमास्ता यजमानव्वाचयति ताभिरेवैनꣳ सुवर्गँल्लोकङ्गमयति यन्द्विष्यात्तस्य सञ्चरे पशूनान्न्यस्येद्यः प्रथमः पशुरभितिष्ठति स आर्तिमार्च्छति ॥ १३ ॥ पशूनाँय्यन्तोऽग्रे जुहोत्यपरिवर्गमेवैनꣳ शमयति त्रिꣳशच्च ॥ ३ ॥

अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनन्तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उप तिष्ठते तृप्यति प्रजया पशुभिर्य एवव्वेद तान्न इषमूर्जन्धत्त मरुतस्सꣳरराणा इत्याहाऽन्नव्वा ऊर्गन्नम्मरुतोऽन्नमेवाऽव रुन्धेऽश्मꣳस्ते क्षुदमुन्ते शु- ॥ १४ ॥ गृच्छतु यन्द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चाऽर्पयति त्रिः परिषिञ्चन्पर्येति त्रिवृद्वा अग्निर्यावानेवाऽग्निस्तस्य शुचꣳ शमयति त्रिः पुनः पर्येति षट्थ्सं पद्यन्ते षड्वा ऋतव ऋतुभिरेवाऽस्य शुचꣳ शमयत्यपाँव्वा एतत्पुष्पँय्यद्वेतसोऽपाꣳ ॥ १५ ॥ शरोऽवका वेतसशाखया चाऽवकाभिश्च वि कर्षत्यापो वै शान्ताश्शान्ताभिरेवाऽस्य शुचꣳ शमयति यो वा अग्निञ्चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयत्यष्टाभिर्वि कर्ष- ॥ १६ ॥ त्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाऽग्निस्तस्य शुचꣳ शमयति पावकवतीभिरन्नव्वै पावकोऽन्नेनैवाऽस्य शुचꣳ शमयति मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपँय्यत्कृष्णाजिनङ्कार्ष्णी उपानहावुप मुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्तेऽन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यान्नान्त- ॥ १७ ॥ रेव मृत्योर्धत्तेऽवाऽन्नाद्यꣳ रुन्धे नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्त्यन्यन्ते अस्मत्तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचाऽर्पयति पावको अस्मभ्यꣳ शिवो भवेत्याहाऽन्नव्वै पावकोऽन्नमेवाऽव रुन्धे द्वाभ्यामधि क्रामति प्रतिष्ठित्या अपस्यवतीभ्याꣳ शान्त्यै ॥ १८ ॥ शुग्वेतसोऽपामष्टाभिर्वि कर्षति नान्तरेकान्न पञ्चाशच्च ॥४॥

नृषदे वडिति व्याघारयति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभतेऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारस्स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट्करोति नाऽस्य यातयामा वषट्कारो भवति न

यज्ञꣳ रक्षाꣳसि घ्नन्ति हुतादो वा अन्ये देवा ॥ १९ ॥ अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणाऽवोक्षति हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्राम्यँव्वा एतदन्नँय्यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाऽवोक्षत्युभयस्याऽवरुद्ध्यै ग्रुमुष्टिनाऽवोक्षति प्राजापत्यो ॥ २० ॥ वै ग्रुमुष्टि-स्सयोनित्वाय द्वाभ्यां प्रतिष्ठित्या अनुपरिचारमवोक्षत्यपरिवर्गमेवैनान्प्रीणाति वि वा एष प्राणैः प्रजया पशुभिर्ऋद्ध्यते योऽग्निञ्चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवाऽऽत्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्त इन्द्रो वृत्रमहन्तँव्वृत्रो ॥ २१ ॥ हतष्षोडशभिर्भोगैरसिनात्स एतामग्नयेऽनीकवत आहुतिमपश्यत्तामजुहोत्तस्याऽग्निरनीक-वान्त्स्वेन भागधेयेन प्रीतष्षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनीकवत आहुतिञ्जुहोत्यग्निरेवाऽस्याऽनीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते यङ्कामयेत चिरं पाप्मनो ॥ २२ ॥ निर्मुच्येतेत्येकैकन्तस्य जुहुयाच्चिरमेव पाप्मनो निर्मुच्यते यङ्कामयेत ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्याऽनुद्रुत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यतेऽथो खलु नानैव सूक्ताभ्याञ्जुहोति नानैव सूक्तयोर्वीर्यन्दधात्यथो प्रतिष्ठित्यै ॥ २३ ॥ देवाः प्राजापत्यो वृत्रश्चिरं पाप्मनश्चत्वारिꣳशच्च ॥ ५ ॥

उदेनमुत्तरान्नयेति समिध आ दधाति यथा जनँय्यतेऽवसङ्करोति तादृगेव तत्तिस्र आ दधाति त्रिवृद्धा अग्निर्यावानेवाऽग्निस्तस्मै भागधेयङ्करोत्यौदुंबरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवाऽस्मा अपि दधात्युदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणै- ॥ २४ ॥ रेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनञ्चित्तायोद्यच्छते तेनैवैनꣳ समर्द्धयति पञ्च दिशो दैवीर्यज्ञमवन्तु देवी-रित्याह दिशो ह्येषोऽनु प्रच्यवतेऽपाऽमतिन्दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै रायस्पोषे यज्ञ-पतिमाभजन्तीरित्याह पशवो वै रायस्पोषः ॥ २५ ॥ पशूनेवाऽव रुन्धे षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति द्वे परिगृह्यवती भवतो रक्षसामपहत्यै सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै ततः पावका आशिषो नो जुषन्तामित्याहाऽन्नँव्वै पावकोऽन्नमेवाऽव रुन्धे देवासुरास्सँय्यत्ता आसन्ते देवा एतदप्रतिरथमपश्यन्तेन वै तेऽप्रत्य- ॥ २६ ॥ सुरानजयन्तदप्रतिरथस्याऽप्रतिरथ-त्वँय्यदप्रतिरथन्द्वितीयो होताऽन्वाहाऽप्रत्येव तेन यजमानो भ्रातृव्याञ्जयत्यथो अनभिजितमेवाऽभि जयति दशर्चं भवति दशाक्षरा विराड्विराजेमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशा-क्षरा विराडन्नँव्विराड्विराज्येवाऽन्नाद्ये प्रति तिष्ठत्यसदिव वा अन्तरिक्षमन्तरिक्षमिवाऽऽग्नीद्-ध्रमाग्नीद्ध्रे- ॥ २७ ॥ ऽश्मानन्नि दधाति सत्त्वाय द्वाभ्यां प्रतिष्ठित्यै विमान एष दिवो मद्ध्य आस्त इत्याह व्येवैतया मिमीते मद्ध्ये दिवो निहितः पृश्निरश्मेत्याहाऽन्नँव्वै पृश्न्यन्नमेवाऽव रुन्धे चतसृ-भिरा पुच्छादेति चत्वारि छन्दाꣳसि छन्दोभिरेवेन्द्रँव्विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्तते

वाजानाꣳ सत्पतिं पति- ॥ २८ ॥ मित्याहाऽन्नँव्वै वाजोऽन्नमेवाऽव रुन्धे सुम्नहूर्यज्ञो देवाꣳ आ च वक्षदित्याह प्रजा वै पशवस्सुम्नं प्रजामेव पशूनात्मन्धत्ते यक्षद्ग्निर्देवो देवाꣳ आ च वक्षदित्याह स्वगाकृत्यै वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदित्याहाऽसौ वा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्नि-ग्राभो ब्रह्मणैवाऽऽत्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यन्नि गृह्णाति ॥ २९ ॥ प्राणैः पोषौऽप्रत्याग्नींद्धे पतिंमेष दर्श च ॥ ६ ॥

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्तते क्रमध्वमग्निना नाकमित्या-हेमानेवैतया लोकान्क्रमते पृथिव्या अहमुदन्तरिक्षमाऽरुहमित्याहेमानेवैतया लोकान्त्समारोहति सुवर्यन्तो नाऽपेक्षन्त इत्याह सुवर्गमेवैतया लोकमेत्यग्ने प्रेहि ॥ ३० ॥ प्रथमो देवयतामित्याहोभ-येष्वेवैतया देवमनुष्येषु चक्षुर्दधाति पञ्चभिरधि क्रामति पाङ्क्तो यज्ञो यावानेव यज्ञस्तेन सह सुवर्ग-ल्लोकमेति नक्तोषासेति पुरोनुवाक्यामन्वाह प्रत्या अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजा-पतेराप्त्यै तस्मै ते विधेम वाजाय स्वाहेत्याहाऽन्नँव्वै वाजोऽन्नमेवाऽव ॥ ३१ ॥ रुन्धे दध्नः पूर्णा-मौदुंबरीꣳ स्वयमातृण्णायाञ्जुहोत्यूर्ग्वै दध्यूर्गुदुंबरोऽसौ स्वयमातृण्णाऽमुष्यामेवोर्जन्दधाति तस्मादमुतोऽर्वाचीमूर्जमुप जीवामस्त्रिसृभिस्सादयति त्रिवृद्धा अग्निर्यावानेवाऽग्निस्तं प्रतिष्ठाङ्गमयति प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुंबरीमा दधात्येषा वै सूर्मी कर्णकावत्येतया ह स्म ॥ ३२ ॥ वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीँय्यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछंबट्कारवँविधेम ते परमे जन्मन्नग्न इति वैकङ्कतीमा दधाति भा एवाऽव रुन्धे ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शान्त्या अग्निर्वा ह वा अग्निचितन्दुहेऽग्निचिद्वाऽग्नि-न्दुहे ताꣳ ॥ ३३ ॥ सवितुर्वरेण्यस्य चित्रामित्याहैष वा अग्नेर्दोहस्तमस्य कण्व एव श्रायसोऽवेत्तेन ह स्मैनꣳ स दुहे यदेतया समिधमादधात्यग्निचिदेव तदग्निन्दुहे सप्त ते अग्ने समिधस्सप्त जिह्वा इत्याह सप्तैवाऽस्य साप्तानि प्रीणाति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापते- ॥ ३४ ॥ राप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्या अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राऽविशज्जुह्वन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमव रुन्धे दध्ना पुरस्ताज्जुहोत्याज्येनोपरि-ष्टात्तेजश्चैवाऽस्मा इन्द्रियञ्च समीची दधाति द्वादशकपालो वैश्वानरो भवति द्वादश मासास्सँव्वथ्सर-स्सँव्वथ्सरोऽग्निर्वैश्वानरस्साक्षा- ॥ ३५ ॥ देव वैश्वानरमव रुन्धे यत्प्रयाजानूयाजान्कुर्याद्विक-स्तिस्सा यज्ञस्य दर्विहोमङ्करोति यज्ञस्य प्रतिष्ठित्यै राष्ट्रँव्वै वैश्वानरो विण्मरुतो वैश्वानरꣳ हुत्वा मारुताञ्जुहोति राष्ट्र एव विशमनु बध्नात्युच्चैर्वैश्वानरस्याऽऽ श्रावयत्युपाꣳशु मारुताञ्जुहोति तस्मा-द्राष्ट्रँव्विशमति वदति मारुता भवन्ति मरुतो वै देवानाँव्विशो देवविशेनैवाऽस्मै मनुष्यविशमव रुन्धे सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव रुन्धे गणेन गणमनुद्रुत्य जुहोति विश-

मेवाऽस्मा अनुवर्त्मानङ्करोति ॥ ३६ ॥ अग्ने प्रेह्यव स्म दुहे तां प्रजापतेस्साख्यान्मनुष्यविशमेकविꣳशतिश्च ॥ ७ ॥

वसोर्द्धाराञ्जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिं-ल्लोके पिन्वमानोप तिष्ठत आज्येन जुहोति तेजो वा आज्यन्तेजो वसोर्द्धारा तेजसैवाऽस्मै तेजोऽव रुन्धेऽथो कामा वै वसोर्द्धारा कामानेवाऽव रुन्धे यङ्कामयेत प्राणानस्यान्नाद्यवँवि ॥ ३७ ॥ च्छिन्द्यामिति विग्राहन्तस्य जुहुयात्प्राणानेवाऽस्याऽन्नाद्यवँवि च्छिनत्ति यङ्कामयेत प्राणानस्या-ऽन्नाद्यꣳ सन्तनुयामिति सन्ततान्तस्य जुहुयात्प्राणानेवाऽस्याऽन्नाद्यꣳ सन्तनोति द्वादश द्वादशानि जुहोति द्वादश मासास्संवँथ्सरस्संवँथ्सरेणैवाऽस्मा अन्नमव रुन्धेऽन्नञ्च मेऽक्षुच्च म इत्याहैतद्वा ॥ ३८ ॥ अन्नस्य रूपꣳ रूपेणैवाऽन्नमव रुन्धेऽग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनि-स्सयोन्येवाऽन्नमव रुन्धेऽर्द्धेन्द्राणि जुहोति देवता एवाऽव रुन्धे यथ्सर्वेषामर्द्धमिन्द्रः प्रति तस्मादि-न्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवाऽस्मिन्नुपरिष्टाद्दधाति यज्ञायुधानि जुहोति यज्ञो ॥ ३९ ॥ वै यज्ञायुधानि यज्ञमेवाऽव रुन्धेऽथो एतद्वै यज्ञस्य रूपꣳ रूपेणैव यज्ञमव रुन्धेऽवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्या अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमव रुन्ध ऋक्च मे साम च म इत्याहै- ॥ ४० ॥ तद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दा-ꣳस्यव रुन्धे गर्भाश्च मे वथ्साश्च म इत्याहैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे कल्पाञ्जु-होत्यक्लृप्तस्य क्लृप्त्यै युग्मदयुजे जुहोति मिथुनत्वायोत्तरावती भवतोऽभिक्रान्त्या एका च मे तिस्रश्च म इत्याह देवछन्दसँवा एका च तिस्रश्च ॥ ४१ ॥ मनुष्यछन्दसञ्चतस्रश्चाऽष्टौ च देवछन्दसञ्चैव मनुष्यछन्दसञ्चाऽव रुन्ध आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एवाऽव रुन्ध आऽष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवाऽस्मै पशूनव रुन्धे वाजश्च प्रसवश्चेति द्वादशञ्जुहोति द्वादश मासास्संवँथ्सरस्संवँथ्सर एव प्रति तिष्ठति ॥ ४२ ॥

वि वै यज्ञस्साम च म इत्याह च तिस्रश्चैकान्न पञ्चाशच्च ॥ ८ ॥

अग्निर्देवेभ्योऽपाऽक्रामद्भागधेयमिच्छमानस्तन्देवा अब्रुवन्नुप न आ वर्तस्व हव्यन्नो वहेति सोऽब्रवीद्वरवृँणै मह्यमेव वाजप्रसवीयञ्जुहवन्निति तस्मादग्नये वाजप्रसवीयञ्जुह्वति यद्वाजप्रस-वीयञ्जुहोत्यग्निमेव तद्भागधेयेन समर्द्धयत्यथो अभिषेक एवाऽस्य स चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयस्सप्ता- ॥ ४३ ॥ ऽऽरण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्याऽवरुद्ध्या औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवाऽस्मा ऊर्जमन्नमव रुन्धेऽग्निर्वै देवानामभिषिक्तो-ऽग्निचिन्मनुष्याणान्तस्मादग्निचिद्वर्षति न धावेदवरुद्धꣳ ह्यस्याऽन्नमन्नमिव खलु वै वर्षँय्यद्धावे-दन्नाद्याद्धावेदुपावर्तेताऽन्नाद्यमेवाऽभ्यु- ॥ ४४ ॥ पावर्तते नक्तोषासेति कृष्णायै श्वेतवथ्सायै पयसा जुहोत्यह्नैवाऽस्मै रात्रिं प्र दापयति रात्रियाऽहरहोरात्रे एवाऽस्मै प्रत्ते काममन्नाद्यन्दुहाते राष्ट्रभृतो

जुहोति राष्ट्रमेवाऽव रुन्धे षड्भिर्जुहोति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशो- ॥ ४५ ॥ ऽभि जयत्यग्निचितꣳ ह वा अमुष्मिँल्लोके वातोऽभि पवते वातनामानि जुहोत्यभ्यैवैनममुष्मिँल्लोके वातः पवते त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्धे समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धेऽञ्जलिना जुहोति न ह्येतेषामन्यथाऽऽहुतिरवकल्पते ॥ ४६ ॥ ओषधयस्सप्ता-ऽभि दिशोऽन्यथा द्वे च ॥ ९ ॥

सुवर्गाय वै लोकाय देवरथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै देवरथो यदग्निरग्नि-य्युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनय्युक्तस्सुवर्गँल्लोकमभि वहति यथ्सर्वाभिः पञ्चभि-र्युञ्ज्याद्युक्तोऽस्याऽग्निः प्रच्युतस्स्यादप्रतिष्ठिता आहुतयस्स्युरप्रतिष्ठितास्स्तोमा अप्रतिष्ठितान्यु-क्थानि तिसृभिः प्रातस्सवनेऽभि मृशति त्रिवृ- ॥ ४७ ॥ द्वा अग्निर्यावानेवाऽग्निस्तय्युनक्ति यथाऽनसि युक्त आधीयत एवमेव तत्प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि यज्ञायज्ञियस्य स्तोत्रे द्वाभ्याममभि मृशत्येतावानू वै यज्ञो यावानग्निष्टोमो भूमा त्वा अस्याऽत ऊर्ध्वः क्रियते यावानेव यज्ञस्तमन्ततोऽन्वारोहति द्वाभ्यां प्रतिष्ठित्या एकयाऽप्रस्तुतं भवत्यथा- ॥ ४८ ॥ ऽभि मृशत्युपैनमुत्तरो यज्ञो नमत्यथो सन्तत्यै प्र वा एषोऽस्माल्लोकाच्च्यवते योऽग्निञ्चिनुते न वा एतस्याऽनिष्टक आहुतिरव कल्पते याँव्वा एषोऽनिष्टक आहुतिञ्जुहोति स्रवति वै सा ताꣳ स्रव-न्तीय्यँज्ञोऽनु परा भवति यज्ञय्यँजमानो यत्पुनश्चितिञ्चिनुत आहुतीनां प्रतिष्ठित्यै प्रत्याहुतयस्ति-ष्ठन्ति ॥ ४९ ॥ न यज्ञः पराभवति न यजमानोऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवैनञ्छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद्द्वादश जागतेन छन्दोभिरेवैनञ्चिनुते नपात्को वै नामैषोऽग्निर्य-त्पुनश्चितिर्य एवव्वँिद्वान्पुनश्चितिञ्चिनुत आ तृतीयात्पुरुषादन्नमत्ति यथा वै पुनराधेय एवं पुन-श्चितिर्योऽग्न्याधेयेन न- ॥ ५० ॥ र्द्ध्नोति स पुनराधेयमा धत्ते योऽग्निञ्चित्वा नर्द्ध्नोति स पुनश्चितिञ्चिनुते यत्पुनश्चितिञ्चिनुत ऋद्ध्या अथो खल्वाहुर्न चेतव्येति रुद्रो वा एष यदग्निर्यथा व्याघ्रꣳ सुप्तं बोधयति तादृगेव तदथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसं भागधेयेन बोधयति तादृगेव तन्मनुरग्निमचिनुत तेन नाऽऽर्द्ध्नोथ्स एतां पुनश्चितिमपश्यत्तामचिनुत तया वै स आर्द्ध्नोद्यत्पुनश्चितिञ्चिनुत ऋद्ध्यै ॥ ५१ ॥ त्रिवृदथ तिष्ठन्त्यग्न्याधेयेन नाऽचिनुत सप्तदश च ॥ १० ॥

छन्दश्चितञ्चिन्वीत पशुकामः पशवो वै छन्दाꣳसि पशुमानेव भवति श्येनचितञ्चिन्वीत सुवर्गकामश्श्येनो वै वयसां पतिष्ठश्श्येन एव भूत्वा सुवर्गँल्लोकं पतति कङ्कचितञ्चिन्वीत यः काम-येत शीर्षण्वानमुष्मिँल्लोके स्यामिति शीर्षण्वानेवाऽमुष्मिँल्लोके भवत्यलजचितञ्चिन्वीत चतु-स्सीतं प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति प्रउगचितञ्चिन्वीत भ्रातृव्यवान्प्रै- ॥ ५२ ॥ व भ्रातृव्यान्नुदत उभयतःप्रउगञ्चिन्वीत यः कामयेत प्र जातान्भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति

प्रैव जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणान्रथचक्रचितंश्चिन्वीत भ्रातृव्यवान् वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति द्रोणचितंश्चिन्वीताऽन्नकामो द्रोणे वा अन्नं भ्रियते सयोन्येवाऽन्नमव रुन्धे समूह्यंश्चिन्वीत पशुकामः पशुमानेव भवति ॥ ५३ ॥ परिचाय्यंश्चिन्वीत ग्रामकामो ग्राम्येव भवति श्मशानचितंश्चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति पितृलोक एवर्ध्नोति विश्वामित्रजमदग्नी वसिष्ठेनाऽस्पर्धेताꣳ स एता जमदग्निर्विहव्या अपश्यत्ता उपाऽधत्त ताभिर्वै स वसिष्ठस्येन्द्रिय-वीर्यमवृङ्क्त यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्यं-य्यजमानो भ्रातृव्यस्य वृङ्क्ते होतुर्धिष्णिय उप दधाति यजमानायतनव्वै ॥ ५४ ॥ होता स्व एवाऽस्मा आयतन इन्द्रियव्वीर्यमव रुन्धे द्वादशोप दधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवाऽस्मै पशूनव रुन्धेऽष्टावष्टावन्येषु धिष्णियेषूप दधात्यष्टाशफाः पशवः पशूनेवाऽव रुन्धे षण्मार्जालीये षड्वा ऋतव ऋतवः खलु वै देवाः पितर ऋतूनेव देवान्पितॄन्प्रीणाति ॥ ५५ ॥ प्र भवति यजमानायतनव्वा अष्टाचत्वारिꣳशच्च ॥ ११ ॥

पवस्व वाजसातय इत्यनुष्टुक्प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत्तिस्रोऽनुष्टुभ-स्तस्मादश्वस्त्रिभिस्तिष्ठꣳस्तिष्ठति यच्चतस्रो गायत्रियस्तस्मात्सर्वाꣳश्चतुरः पदः प्रतिदधत्पलायते परमा वा एषा छन्दसाय्यदनुष्टुक्परमश्चतुष्टोमस्स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमताङ्गमयत्येकविꣳशमहर्भवति ॥ ५६ ॥ यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्च-र्तवस्त्रय इमे लोका असावादित्य एकविꣳश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येन्ये वा एते पशव आ लभ्यन्त उतेव ग्राम्या उतेवाऽऽरण्या यच्छक्वरयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय पार्थुरश्मं ब्रह्मसामं भवति रश्मिना वा अश्वो॥ ५७ ॥ यत ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावतङ्गन्तोर्यत्पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै सङ्कृत्यच्छावाकसामं भवत्युत्सन्नयज्ञो वा एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा क्रियते न वा सर्व इति यत्सङ्कृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्यांप्त्या अनन्तरायाय सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेव तेनाऽऽप्नोति सर्वञ्जयति ॥ ५८ ॥ अहर्भवति वा अश्वोऽहर्भवति दश च ॥ १२ ॥

देवासुरास्ते नर्तव्या रुद्रोऽश्मन्नृषदे वडुदेनं प्राचीमिति वसोर्धारामग्निर्देवेभ्यस्सुवर्गाय यत्राकूताय छन्दश्चितं पवस्व द्वादश ॥ १२ ॥ देवासुरा अजायाव्वै गुंमुष्टिः प्रथमो देवयतामेतद्वै छन्दसामृद्ध्नोत्यष्टौ पञ्चाशत् ॥ ५८ ॥ देवासुरास्सर्वञ्जयति ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ।। पञ्चमकाण्डे पञ्चमप्रश्नप्रारम्भः।।

।। श्रीगुरुभ्यो नमः हरिः ओ(४)म् ।।

यदेकेन सꣳस्थापयति यज्ञस्य सन्तत्या अविच्छेदायैन्द्राः पशवो ये मुष्करा यदैन्द्रास्सन्तोऽग्निभ्य आलभ्यन्ते देवताभ्यस्समदन्दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाऽऽग्नेया यत्त्रिष्टुभस्तेनैन्द्रास्समृद्ध्यै न देवताभ्यस्समदन्दधाति वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ् वायु- ।। १ ।। र्वाति तद्रियङ्ङग्निर्दहति स्वमेव तत्तेजोऽन्वेति यन्न नियुत्वते स्यादुन्माद्येद्यजमानो नियुत्वते भवति यजमानस्याऽनुन्मादाय वायुमती श्वेतवती याज्यानुवाक्ये भवतस्सतेजस्त्वाय हिरण्यगर्भस्समवर्तताऽग्र इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय सर्वाणि वा एष रूपाणि पशूनां प्रत्यालभ्यते यच्छ्मश्रुणस्तत् ।। २ ।। पुरुषाणाꣳ रूपय्यत्तूपरस्तदश्वानाय्यदन्यतोदन्तद्गवाय्यदव्या इव शफास्तदवीनाय्यदजस्तदजानाव्वायुर्वै पशूनां प्रियन्धाम यद्वायव्यो भवत्येतमेवैनमभि सञ्जानानाः पशव उप तिष्ठन्ते वायव्यः कार्या(३): प्राजापत्या(३)इत्याहुर्यद्वायव्यङ्कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यङ्कुर्याद्वायो-।। ३ ।। रियाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद्द्वादशकपालस्तेन वैश्वानरान्नैत्याग्नावैष्णवमेकादशकपालन्निर्वपति दीक्षिष्यमाणोऽग्निस्सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्चाऽऽरभतेऽग्निरवमो देवतानांव्विष्णुः परमो यदाग्नावैष्णवमेकादशकपालन्निर्वपति देवता ।। ४ ।। एवोभयतः परिगृह्य यजमानोऽव रुन्धे पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवञ्चरुणाऽस्मिन् यः कामयेताऽमुष्मिँल्लोक ऋध्नुयामिति स पुरोडाशङ्कुर्वीताऽमुष्मिन्नेव लोक ऋध्नोति यदष्टाकपालस्तेनाऽऽग्नेयो यत्त्रिकपालस्तेन वैष्णवस्समृद्ध्यै यः कामयेताऽस्मिँल्लोक ऋध्नुयामिति स चरुङ्कुर्वीताऽग्नेर्घृतव्विष्णोस्तण्डुलास्तस्मा-।। ५ ।। च्चरुः कार्योऽस्मिन्नेव लोक ऋध्नोत्यादित्यो भवतीयव्वा अदितिरस्यामेव प्रति तिष्ठत्यथो अस्यामेवाऽधि यज्ञन्तनुते यो वै संव्वथ्सरमुख्यमभृत्वाऽग्निञ्चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरन्द्वादशकपालं पुरस्तान्निर्वपेथ्संव्वथ्सरो वा अग्निर्वैश्वानरो यथा संव्वथ्सरमाप्त्वा ।। ६ ।। काल आगते विजायत एवमेव संव्वथ्सरमाप्त्वा काल आगतेऽग्निञ्चिनुते नाऽर्तिमार्च्छत्येषा वा अग्नेः

प्रिया तनूर्यद्वैश्वानरः प्रियामेवाऽस्य तनुवमव रुन्धे त्रीण्येतानि हवीꣳषि भवन्ति त्रय इमे लोका एषाँल्लोकानाꣳ रोहाय ॥ ७ ॥ यद्रियङ् वायुर्यच्छ्मश्रुणस्तद्वायोर्निर्वपति देवतास्तस्मादास्वाऽष्टात्रिꣳशच्च ॥ १ ॥

प्रजापतिः प्रजास्सृष्ट्वा प्रेणाऽनु प्राऽविशत्ताभ्यः पुनस्संभवितुन्नाऽशक्नोथ्सोऽब्रवीदृद्ध्नव-दिथ्स यो मेतः पुनस्सञ्चिनवदिति तन्देवास्समचिन्वन्ततो वै त आर्ध्नुवन् यथ्समचिन्वन्तच्चित्यस्य चित्यत्वय्ँय एवव्ँविद्वानग्निञ्चिनुत ऋद्ध्नोत्येव कस्मै कमग्निश्चीयत इत्याहुरग्निवा- ॥ ८ ॥ नसा-नीति वा अग्निश्चीयतेऽग्निवानेव भवति कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वा अग्निश्चीयते विदुरेनन्देवाः कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति वा अग्निश्चीयते गृह्येव भवति कस्मै कमग्नि-श्चीयत इत्याहुः पशुमानसानीति वा अग्नि- ॥ ९ ॥ श्चीयते पशुमानेव भवति कस्मै कमग्निश्चीयत इत्याहुस्सप्त मा पुरुषा उप जीवानिति वा अग्निश्चीयते त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनममुष्मिँल्लोक उप जीवन्ति प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीन्न मय्यग्निञ्चे-ष्यसेऽति मा धक्ष्यति सा त्वाऽतिदह्यमाना वि धविष्ये ॥ १० ॥ स पापीयान्भविष्यसीति सोऽब्र-वीत्तथा वा अहङ्करिष्यामि यथा त्वा नाऽतिधक्ष्यतीति स इमामभ्यमृशत्प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेतीमामेवेष्टकाङ्कृत्वोपाऽधत्ताऽनतिदाहाय यत्प्रत्यग्निञ्चिन्वीत तदभि मृशेत्प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदे- ॥ ११ ॥ तीमामेवेष्टकाङ्कृत्वोप धत्तेऽनतिदाहाय प्रजापतिरकामयत प्र जायेयेति स एतमुख्यमपश्यत्तꣳ सव्ँवथ्सरमबिभस्ततो वै स प्राऽजायत तस्माथ्सव्ँवथ्सरं भार्यः प्रैव जायते तव्ँवसवोऽब्रुवन्प्र त्वमजनिष्ठा वयं प्र जायामहा इति तव्ँवसुभ्यः प्राऽयच्छत्तन्त्रीण्यहान्यबिभरुस्तेन ॥ १२ ॥ त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतञ्च तस्मात्र्यहं भार्यः प्रैव जायते तानुद्रा अब्रुवन्प्र यूयमजनिढ्वव्ँवयं प्र जायामहा इति तꣳ रुद्रेभ्यः प्राऽयच्छन्तꣳ षडहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतञ्च तस्माथ्षडहं भार्यः प्रैव जायते तानादित्या अब्रुवन्प्र यूयमजनिढ्वव्ँवयं ॥ १३ ॥ प्र जायामहा इति तमादित्येभ्यः प्राऽयच्छन्तन्द्वादशाऽहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतञ्च तस्माद्द्वादशाहं भार्यः प्रैव जायते तेन वै ते सहस्रमसृजन्तोखाꣳ सहस्रतमीय्ँय एवमुख्यꣳ साहस्रव्ँवेद प्र सहस्रं पशूनाप्नोति ॥ १४ ॥ अग्निवान्पशुमानसानीति वा अग्निर्धविष्ये मृशेत्प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिर-स्वद्ध्रुवा सीद तेन तानादित्या अब्रुवन्प्र यूयमजनिढ्वव्ँवयञ्चत्वारिꣳशच्च ॥ २ ॥

यजुषा वा एषा क्रियते यजुषा पच्यते यजुषा वि मुच्यते यदुखा सा वा एषैतर्हि यातयाम्नी सा न पुनः प्रयुज्येत्याहुरग्ने युख्वा हि ये तव युख्वा हि देवहूतमाꣳ इत्युखायाञ्जुहोति तेनैवैनां पुनः प्र युङ्क्ते तेनाऽयातयाम्नी यो वा अग्नेर्य्योग आगते युनक्ति युङ्क्ते युञ्जानेष्वग्ने ॥ १५ ॥ युख्वा हि ये तव युख्वा हि देवहूतमाꣳ इत्याहैष वा अग्नेर्योगस्तेनैवैनय्ँयुनक्ति युङ्क्ते युञ्जानेषु ब्रह्मवादिनो वदन्ति

न्यङ्ङग्निश्चैतव्या(३) उत्ताना(३) इति वयसाँव्वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चञ्चिनु-यात्पृष्टित एनमाहुतय ऋच्छेयुर्यदुत्तानन्न पतितुꣳ शक्नुयादसुवर्ग्योऽस्य स्यात्प्राचीनमुत्तानं ॥ १६ ॥ पुरुषशीर्षमुप दधाति मुखत एवैनमाहुतय ऋच्छन्ति नोत्तानञ्चिनुते सुवर्ग्योऽस्य भवति सौर्या जुहोति चक्षुरेवाऽस्मिन्प्रति दधाति द्विर्जुहोति द्वे हि चक्षुषी समान्या जुहोति समानꣳ हि चक्षुस्समृद्ध्यै देवासुरास्सय्यँत्ता आसन्ते वामँव्वसु सन्न्यदधत तद्देवा वामभृताऽवृञ्जत तद्वामभृतो वामभृत्त्वय्यँद्वामभृतमुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते हिरण्यमूर्द्धी भवति ज्योतिर्वै हिरण्यञ्ज्योतिर्वामञ्ज्योतिषैवाऽस्य ज्योतिर्वामँव्वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै ॥ १७ ॥ युञ्जानेष्वग्नें प्राचीनमुत्तानव्वामभृतश्चतुर्विꣳशतिश्च ॥ ३ ॥

आपो वरुणस्य पत्नय आसन्ता अग्निरभ्यध्यायत्तास्समभवत्तस्य रेतः पराऽपतत्तदियम-भवद्यद्द्वितीयं परापतत्तदसावभवदियँव्वै विराडसौ स्वराड्यद्विराजावुपदधातीमे एवोप धत्ते यद्वा असौ रेतस्सिञ्चति तदस्यां प्रति तिष्ठति तत्प्र जायते ता ओषधयो ॥ १८ ॥ वीरुधो भवन्ति ता अग्निरत्ति य एवँव्वेद प्रैव जायतेऽन्नादो भवति यो रेतस्वी स्यात्प्रथमायान्तस्य चित्यामुभे उप दद्ध्यादिमे एवाऽस्मै समीची रेतस्सिञ्चतो यस्सिक्तरेतास्स्यात्प्रथमायान्तस्य चित्यामन्यामुप दद्ध्यादुत्तमायामन्याꣳ रेत एवाऽस्य सिक्तमाभ्यामुभयतः परि गृह्णाति सँव्वथ्सरन्न क- ॥ १९ ॥ ञ्चन प्रत्यवरोहेन्न हीमे कञ्चन प्रत्यवरोहतस्तदेनयोर्व्रतय्यँो वा अपशीर्षाणमग्निञ्चिनुतेऽपशीर्षा-ऽमुष्मिँल्लोके भवति यस्सशीर्षाणञ्चिनुते सशीर्षाऽमुष्मिँल्लोके भवति चित्तिञ्जुहोमि मनसा घृतेन यथा देवा इहाऽऽगमन्वीतिहोत्रा ऋतावृधस्समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्वकर्मणे विश्वा-ऽहाऽमर्त्यꣳ हविरिति स्वयमातृण्णामुपधाय जुहोत्ये- ॥ २० ॥ तद्वा अग्नेश्शिरस्सशीर्षाणमेवा-ऽग्निञ्चिनुते सशीर्षाऽमुष्मिँल्लोके भवति य एवँव्वेद सुवर्गाय वा एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वङ्क्रियतेऽसुवर्ग्यमस्य तथ्सुवर्ग्योऽग्निश्चितिमुपधायाऽभि मृशेच्चित्तिमचित्तिञ्चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान्राये च नस्स्वपत्याय देव दितिञ्च रास्वाऽदितिमुरुष्येति यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनञ्चिनुते सुवर्ग्योऽस्य भवति ॥ २१ ॥ ओषधयः कञ्जुहोति स्वपत्यायाऽष्टादश च ॥ ४ ॥

विश्वकर्मा दिशां पतिस्स नः पशून्पातु सोऽस्मान्पातु तस्मै नमः प्रजापती रुद्रो वरुणो-ऽग्निर्दिशां पतिस्स नः पशून्पातु सोऽस्मान्पातु तस्मै नम एता वै देवता एतेषां पशूनामधिपतयस्ता-भ्यो वा एष आ वृश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधात्येताभ्य एव देवताभ्यो नमस्करोति ब्रह्मवादिनो ॥ २२ ॥ वदन्त्यग्नौ ग्राम्यान्पशून्प्र दधाति शुचाऽऽरण्यानर्पयति किन्तत उच्छिꣳषतीति यद्धिरण्येष्टका उपदधात्यमृतँव्वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजङ्करोति नैनान् हिनस्ति प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयाऽपानस्तृतीयाऽनु प्राऽण्यात्प्रथमाꣳ

स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्द्धयति व्यन्याद् - ॥ २३ ॥ द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्द्धयत्यपाऽन्यात्तृतीयामुपधायाऽपानेनैवाऽपानꣳ समर्द्धयत्यथो प्राणैरेवैनꣳ समिन्धे भूर्भुवस्सुवरिति स्वयमातृण्णा उप दधातीमे वै लोकास्स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राऽजायत यदेताभिर्व्याहृतीभिस्स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु ॥ २४ ॥ लोकेष्वधि प्र जायते प्राणाय व्यानायाऽपानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदाऽग्निना वै देवास्सुवर्गँल्लोकमजिगाꣳसन्तेन पतितुन्नाऽशक्नुवन्त एताश्चतस्रस्स्वयमातृण्णा अपश्यन्ता दिक्षूपाऽदधत तेन सर्वतश्चक्षुषा सुवर्गँल्लोकमायन् यच्चतस्रस्स्वयमातृण्णा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानस्सुवर्गँल्लोकमेति ॥ २५ ॥ ब्रह्मवादिनो व्यन्यादेषु यजमान-स्त्रीणि च ॥ ५ ॥

अग्न आ याहि वीतय इत्याहाऽह्वतैवैनमग्निन्दूतँव्वृणीमह इत्याह हूत्वैवैनँव्वृणीतेऽग्निनाऽग्निस्समिद्ध्यत इत्याह समिन्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्ध एवाऽस्मिन्निन्द्रियन्दधात्यग्नेस्स्तोमं मनामह इत्याह मनुत एवैनमेतानि वा अह्नाꣳ रूपाण्य- ॥ २६ ॥ न्वहमेवैनञ्चिनुतेऽवाऽह्नाꣳ रूपाणि रुन्धे ब्रह्मवादिनो वदन्ति कस्माꣳत्सत्याद्यातयाम्नीरन्या इष्टका अयातयाम्नी लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पतिश्चाऽयातयामानोऽनुचरवती भवत्यजामित्वायाऽनुष्टुभाऽनु चरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप्तस्मात्प्राणस्सर्वाण्यङ्गान्यनु चरति ता अस्य सूददोहस ॥ २७ ॥ इत्याह तस्मात्परुषिपरुषि रसस्सोमꣳ श्रीणन्ति पृश्नय इत्याहाऽन्नँव्वै पृश्न्यन्नमेवाऽव रुन्धेऽर्को वा अग्निरर्कोऽन्नमन्नमेवाऽव रुन्धे जन्मन्देवानाँव्विशस्त्रिष्वा रोचने दिव इत्याहेमानेवाऽस्मै लोकाञ्ज्योतिष्मतः करोति यो वा इष्टकानां प्रतिष्ठाँव्वेद प्रत्येव तिष्ठति तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्याहैषा वा इष्टकानां प्रतिष्ठा य एवँव्वेद प्रत्येव तिष्ठति ॥ २८ ॥ रूपाणि सूददोहसस्तया षोडश च ॥ ६ ॥

सुवर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयाद्वज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद्यन्न मिनुयात्स्वरुभिः पशून्व्यर्द्धयेदेकयूपं मिनोति नैनँव्वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्द्धयति वि वा एष इन्द्रियेण वीर्येणर्द्ध्यते योऽग्निञ्चिन्वन्नधिक्रामत्यैन्द्रिय- ॥ २९ ॥ र्चाऽऽक्रमणं प्रतीष्टकामुप दद्ध्यान्नेन्द्रियेण वीर्येण व्यृद्ध्यते रुद्रो वा एष यदग्निस्तस्य तिस्रश्शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आ वृश्च्यते योऽग्निञ्चिनुतेऽग्निञ्चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यथो ताभ्य एवाऽऽत्मानन्निष्क्रीणीते यत्ते रुद्र पुरो ॥ ३० ॥ धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र सँव्वथ्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवथ्सरेण नमस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावथ्सरेण नमस्करोमि यत्ते रुद्रोत्तराद्धनुस्त- ॥ ३१ ॥

द्वातो अनु वातु ते तस्मै ते रुद्रेदुवथ्सरेण नमस्करोमि यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वथ्सरेण नमस्करोमि रुद्रो वा एष यदग्निस्स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवव्वा एष एतर्हि सञ्चितमेतैरुप तिष्ठते नमस्कारैरेवैनꣳ शमयति येऽग्नयः ॥ ३२ ॥ पुरीष्याः प्रविष्टाः पृथिवीमनु । तेषान्त्वमस्युत्तमः प्र णो जीवातवे सुव । आपन्त्वाऽग्ने मनसाऽऽपन्त्वाऽग्ने तपसाऽऽपन्त्वाऽग्ने दीक्षयाऽऽपन्त्वाऽग्न उपसद्भिरापन्त्वाऽग्ने सुत्ययाऽऽपन्त्वाऽग्ने दक्षिणाभिरापन्त्वाऽग्नेऽवभृथेनाऽऽपन्त्वाऽग्ने वशयाऽऽपन्त्वाऽग्ने स्वगाकारेणेत्याहैषा वा अग्नेराप्तिस्तयैवैनमाप्नोति ॥ ३३ ॥ ऐन्द्रिया पुर उत्तराद्धनुस्तदग्नय आहाऽष्टौ च ॥ ७ ॥

गायत्रेण पुरस्तादुप तिष्ठते प्राणमेवाऽस्मिन्दधाति बृहद्रथन्तराभ्यां पक्षावोज एवाऽस्मिन्दधात्यृतुस्थायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति तिष्ठति पृष्ठैरुप तिष्ठते तेजो वै पृष्ठानि तेज एवाऽस्मिन्दधाति प्रजापतिरग्निमसृजत सोऽस्माथ्सृष्टः पराङैत्तव्वारवन्तीयेनाऽवारयत तद्वारवन्तीयस्य वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्व- ॥ ३४ ॥ य्यद्वारवन्तीयेनोपतिष्ठते वारयत एवैनꣳ श्यैतेन श्येती कुरुते प्रजापतेर्हृदयेनाऽपिपक्षं प्रत्युप तिष्ठते प्रेमाणमेवाऽस्य गच्छति प्राच्यां त्वा दिशा सादयामि गायत्रेण छन्दसाऽग्निना देवतयाऽग्नेश्शीर्ष्णाऽग्नेश्शिर उप दधामि दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छन्दसेन्द्रेण देवतयाऽग्नेः पक्षेणाऽग्नेः पक्षमुप दधामि प्रतीच्यां त्वा दिशा सादयामि ॥ ३५ ॥ जागतेन छन्दसा सवित्रा देवतयाऽग्नेः पुच्छेनाऽग्नेः पुच्छमुप दधाम्युदीच्या त्वा दिशा सादयाम्यानुष्टुभेन छन्दसा मित्रावरुणाभ्यान्देवतयाऽग्नेः पक्षेणाऽग्नेः पक्षमुप दधाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाऽग्नेः पृष्ठेनाऽग्नेः पृष्ठमुप दधामि यो वा अपात्मानमग्निञ्चिनुतेऽपात्माऽमुष्मिँल्लोके भवति यस्सात्मानञ्चिनुते सात्माऽमुष्मिँल्लोके भवत्यात्मेष्टका उप दधात्येष वा अग्नेरात्मा सात्मानमेवाऽग्निञ्चिनुते सात्माऽमुष्मिँल्लोके भवति य एवव्वेद ॥ ३६ ॥ श्यैतत्वं प्रतीच्यां त्वा दिशा सादयामि यस्सात्मानञ्चिनुते द्वाविꣳशतिश्च ॥ ८ ॥

अग्न उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्माऽग्ने दुद्ध्र गह्य किꣳशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुद्ध्रो ॥ ३७ ॥ द्वितीयो गह्यस्तृतीयः किꣳशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादद्ध्वर्युञ्च यजमानञ्च प्र दहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्च्छत्यद्ध्वर्युर्न यजमानो वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोश्श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनू- ॥ ३८ ॥ स्तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीरप वा एतस्मात्प्राणाः क्रामन्ति योऽग्निञ्चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवाऽऽत्मन्धत्ते यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो

रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्त्वाहुतिभागा वा अन्ये रुद्रा हविर्भागा ॥ ३९ ॥ अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकञ्चरुमेतेन यजुषा चरमायामिष्टकायान्नि दद्ध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रियत इति वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दख्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु ॥ ४० ॥ देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु न वा एतेन पूतो न मेद्ध्यो न प्रोख्षितो यदेनमतः प्राचीनं प्रोख्षति यथ्सञ्चितमाज्येन प्रोख्षति तेन पूतस्तेन मेद्ध्यस्तेन प्रोख्षितः ॥ ४१ ॥ दुद्ध्रस्तनूरुहविर्भागाः पातु द्वात्रिꣳशच्च ॥ ९ ॥

समीची नामाऽसि प्राची दिक्तस्यास्तेऽग्निरधिपतिरसितो रख्षिता यश्चाऽधिपतिर्यश्च गोप्ता ताभ्यान्नमस्तौ नो मृडयतान्ते यन्द्विष्मो यश्च नो द्वेष्टि तँव्वाञ्जम्भे दधाम्योजस्विनी नामाऽसि दख्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकुः प्राची नामाऽसि प्रतीची दिक्तस्यास्ते ॥ ४२ ॥ सोमो-ऽधिपतिस्स्वजोऽवस्थावा नामाऽस्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिरधिपत्नी नामाऽसि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिश्श्वित्रो वशिनी नामाऽसीयन्दिक्तस्यास्ते यमोऽधि-पतिः कल्माषग्रीवो रख्षिता यश्चाऽधिपतिर्यश्च गोप्ता ताभ्यान्नमस्तौ नो मृडयतान्ते यन्द्विष्मो यश्च ॥ ४३ ॥ नो द्वेष्टि तँव्वाञ्जम्भे दधाम्येता वै देवता अग्निञ्चितꣳ रख्षन्ति ताभ्यो यदाहुतीर्न जुहुया-दद्ध्वर्युश्च यजमानश्च द्ध्यायेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्च्छे-त्यद्ध्वर्युर्न यजमानो हेतयो नाम स्थ तेषाँव्वः पुरो गृहा अग्निर्व इषवस्सलिलो निलिम्पा नाम ॥ ४४ ॥ स्थ तेषाँव्वो दख्षिणा गृहाः पितरो व इषवस्सगरो वज्रिणो नाम स्थ तेषाँव्वः पश्चाद्गृहा-स्स्वप्नो व इषवो गह्वरोऽवस्थावानो नाम स्थ तेषाँव्व उत्तराद्गृहा आपो व इषवस्समुद्रोऽधिपतयो नाम स्थ तेषाँव्व उपरि गृहा वर्षँव्व इषवोऽवस्वान्क्रव्या नाम स्थ पार्थिवास्तेषाँव्व इह गृहा ॥ ४५ ॥ अन्नँव्व इषवो निमिषो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यन्द्विष्मो यश्च नो द्वेष्टि तँव्वो जम्भे दधामि हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति दद्ध्ना मधुमि-श्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान्प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इत्य-॥ ४६ ॥ नुपरिक्रामञ्जुहोत्यपरिवर्गमेवैनान्प्रीणातीमꣳ स्तनमूर्जस्वन्तन्धयाऽपां प्रप्यातमग्ने सरिरस्य मद्ध्ये । उथ्सञ्जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमा विशस्व । यो वा अग्निं प्रयुज्य न विमुञ्चति यथाऽश्वो युक्तोऽविमुच्यमानः ख्षुध्यन्पराभवत्येवमस्याऽग्निः परा भवति तं पराभवन्तय्यँजमानोऽनु परा भवति सोऽग्निञ्चित्वा लूख्षो ॥ ४७ ॥ भवतीमꣳ स्तनमूर्जस्वन्तन्धयाऽपामित्याज्यस्य पूर्णाꣳ स्रुचञ्जुहोत्येष वा अग्नेर्विमोको विमुच्यैवाऽस्मा अन्नमपि दधाति तस्मादाहुर्यश्चैवँव्वेद यश्च न सुधायꣳ ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत्प्रीणाति स एनं प्रीतः प्रीणाति

वसीयान्भवति ॥ ४८ ॥ प्रतीची दिक्तस्यांस्ते द्विष्मो यश्चं निलिंपा नामेह गृहा इतिं लूख्षो वसीयान्भवति ॥ १० ॥

इन्द्रांय राज्ञें सूकरो वरुणाय राज्ञे कृष्णों यमाय राज्ञ ऋश्यं ऋषभाय राज्ञें गवयश्शांर्दूलाय राज्ञें गौरः पुंरुषराजायं मर्कटः ख्षिप्रश्येनस्य वर्तिका नीलंङ्गोः क्रिमिस्सोमस्य राज्ञः कुलुङ्गस्सिन्धों-श्शिश्शुमारों हिमवंतो हुस्ती ॥ ४९ ॥ इन्द्रांय राज्ञेऽष्टाविंश्शतिः ॥ ११ ॥

मयुः प्राजापत्य ऊलो हलींख्ष्णो वृषदंश्शस्ते धातुस्सरंस्वत्यै शारिंश्श्येता पुंरुषवाख्सरं-स्वते शुकंश्श्येतः पुंरुषवागांरण्योंऽजो नंकुलश्शका ते पौष्णा वाचे क्रौञ्चः ॥ ५० ॥ मयुस्त्रयोंवि-श्शतिः ॥ १२ ॥

अपान्नप्त्रें जषो नाक्रो मकंरः कुलीकयस्तेऽकूंपारस्य वाचे पैङ्गराजो भगांय कुषीतंक आती वांहसो दर्विदा ते वांयव्यां दिग्भ्यश्चक्रवाकः ॥ ५१ ॥ अपामेकान्न विंश्शतिः ॥ १३ ॥

बलांयाऽजगर आखुस्सृंजया शयण्डंकस्ते मैत्रा मृत्यवेंऽसितो मन्यवें स्वजः कुंभीनसंः पुष्करसादो लोंहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कांयै वाहसः ॥ ५२ ॥ ॥ १४ ॥

पुरुषमृगश्चन्द्रमंसे गोधा कालंका दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृष्णो रात्रियै पिकः ख्ष्विङ्का नीलंशीर्ष्णी तेंऽर्यम्णे धातुः कंत्कुटः ॥ ५३ ॥ ॥ १५ ॥

सौरी बलाकश्यों मयूरंश्श्येनस्ते गंन्धर्वाणाँव्वसूनाङ्कपिञ्जंलो रुद्राणांन्तित्तिरी रोहित्कुं-ण्डृणाची गोलत्तिका ता अंफ्सरसामरंण्याय सृमरः ॥ ५४ ॥ ॥ १६ ॥

पृषतो वैंश्वदेवः पित्वो न्यङ्कुः कशस्तेऽनुंमत्या अन्यवापोंऽर्द्धमासानां मासाङ्कश्यपः क्वयिः कुटरुंर्दात्यौहस्ते सिंनीवाल्यै बृहस्पतंये शित्पुटः ॥ ५५ ॥ ॥ १७ ॥

शकां भौमी पान्त्रः कशों मान्थीलवस्ते पिंतृणामृंतूनाञ्जहंका सँव्वथ्सराय लोपां कपोत उलूंकश्शशस्ते नैर्ऋताः कृंकवाकुंस्सावित्रः ॥ ५६ ॥ बलांय पुरुषमृगस्सौरी पृंषतश्शकाऽष्टादंशाष्टादंश ॥ १८ ॥

रुरूः रौद्रः कृंकलासश्शकुनिः पिप्पंका ते शरव्यांयै हरिणो मांरुतो ब्रह्मणे शार्गस्तरख्षुः कृष्णश्श्वा चंतुरख्षो गंर्दभस्त इतरजनानामग्नये धूङ्ख्ष्णां ॥ ५७ ॥ रुरुर्विंश्शतिः ॥ १९ ॥

अलज आंन्तरिख्ष उद्रो मद्गुः प्लुवस्तेंऽपामदित्यै हंस्साचिंरिन्द्राण्यै कीर्शा गृद्ध्रश्शिति-कख्षी वांर्द्ध्राणसस्ते दिव्या द्यांवापृथिव्यां श्वावित् ॥ ५८ ॥ ॥ २० ॥

सुपर्णः पांर्जन्यो हंसो वृकों वृषदंश्शस्त ऐन्द्रा अपामुद्रोंऽर्यम्णे लोंपाशस्सिंहो नंकुलो व्याघ्रस्ते मंहेन्द्राय कामांय परंस्वान् ॥ ५९ ॥ अलजस्सुपर्णोंऽष्टादंशाष्टादंश ॥ २१ ॥

आग्नेयः कृष्णग्रीवस्सारस्वती मेषी बभ्रुस्सौम्यः पौष्णश्श्यामश्शितिपृष्ठो बार्हस्पत्य-शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नस्सꣳहितोऽधोरामस्सावित्रो वारुणः पेत्वः ॥ ६० ॥ आग्नेयो द्वाविꣳशतिः ॥ २२ ॥

अश्वस्तूपरो गोमृगस्ते प्राजापत्या आग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरस्सौर्यो बलक्षः पेत्वः ॥ ६१ ॥ अश्वष्षोडश ॥ २३ ॥

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजस्सारस्वती मेषी वारुणः कृष्ण एकशितिपात्पेत्वः ॥ ६२ ॥ अग्नयेऽनीकवते द्वाविꣳशतिः ॥ २४ ॥

यदेकेन प्रजापतिः प्रेणाऽनु यजुषाऽऽपो विश्वकर्माऽग्न आ याहि सुवर्गाय वज्रो गायत्रेणाऽग्न उदधे समीचीन्द्राय मयुरपां बलाय पुरुषमृगस्सौरी पृषतश्शका रुरुरलजस्सुपर्ण आग्नेयोऽश्वोऽग्नयेऽनीकवते चतुर्विꣳशतिः ॥ २४ ॥ यदेकेन स पापीयानेतद्वा अग्नेर्द्धनुस्तद्देवास्त्वेन्द्रज्येष्ठा अपान्नप्त्रेऽश्वस्तूपरो द्विषष्टिः ॥ ६२ ॥ यदेकेनैकशितिपात्पेत्वः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ पञ्चमकाण्डे षष्ठप्रश्नप्रारम्भः ॥

### ॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भन्दधिरे विरूपास्ता न आपश्शꣳ स्योना भवन्तु । यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शꣳ स्योना भवन्तु । यासान्देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं पयसोन्दन्ति ॥ १ ॥ शुक्रास्ता न आपश्शꣳ स्योना भवन्तु । शिवेन मा चक्षुषा पश्यताऽऽपश्शिवया तनुवोप स्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त । यददस्सम्प्रयतीरहावनदता हते । तस्मादा नद्यो

नाम॑ स्थ॒ ता वो॒ नामा॑नि सिन्धवः । यत्प्रेषि॑ता॒ वरु॑णेन॒ ताश्शीभ॑ꣳ स॒मव॑ल्गत । ॥ २ ॥ तदा॑प्नो॒दिन्द्रो॑ वो य॒तीस्तस्मा॒दापो॒ अनु॑ स्थन । अ॒प॒का॒मꣳ स्यन्द॑माना॒ अवी॑वरत वो॒ हिक॑म् । इन्द्रो॑ व॒श्शक्ति॑भिर्देवी॒स्तस्मा॒द्वार्णाम॑ वो हि॒तम् । एको॑ दे॒वो अप्य॑तिष्ठ॒थ्स्यन्द॑माना यथाव॒शम् । उदा॑निषु॒र्म॒हीरिति॒ तस्मा॑दु॒द॒कमु॑च्यते । आपो॑ भ॒द्रा घृ॒तमिदाप॑ आसुर॒ग्नीषोमौ॑ बिभ्र॒त्याप॒ इत्ताः । ती॒व्रो रसो॑ मधु॒पृचा॑- ॥ ३ ॥ मर॒ङ्गम॒ आ मा॑ प्रा॒णेन॑ स॒ह वर्च॑सा गन्॒ । आदित्प॑श्याम्यु॒त वा॑ शृ॒णोम्या मा॒ घोषो॑ गच्छति॒ वाङ्न॑ आसाम् । मन्ये॑ भेजा॒नो अ॒मृत॑स्य॒ तर्हि॒ हिर॑ण्यवर्णा॒ अतृ॑पय्य॒ँदा वः॑ । आपो॒ हि ष्ठा म॑योभु॒वस्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से । यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑ । उ॒श॒तीरि॑व मा॒तरः॑ । तस्मा॒ अर॑ङ्गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ । आपो॑ ज॒नय॑था च नः । दि॒वि श्र॑यस्वा॒ऽन्तरि॑क्षे यतस्व पृथि॒व्या सं भ॑व ब्रह्मवर्च॒सम॑सि ब्रह्मवर्च॒साय॑ त्वा ॥ ४ ॥ उन्दन्ति॑ स॒मव॑ल्गत मधु॒पृचा॑ मा॒तरो॒ द्वावि॑ꣳशतिश्च ॥ १ ॥

अ॒पाङ्ग्रहा॑न्गृह्णात्ये॒तद्वाव रा॑ज॒सू॒यय्य॑दे॒ते ग्रहाः॑स्स॒वो॑ऽग्निर्वरु॑णस॒वो रा॑ज॒सूय॑मग्निस॒वश्चि॒त्य-स्ताभ्या॑मे॒व सू॑यते॒ऽथो॑ उ॒भावे॒व लो॒काव॒भि ज॑यति॒ यश्च॑ राज॒सूये॑नेजा॒नस्य॒ यश्चा॑ऽग्निचि॒त आपो॑ भव-न्त्यापो॒ वा अ॒ग्नेर्भ्रातृ॑व्या॒ यद॒पो॑ऽग्नेर॒धस्ता॑दुप॒दधा॑ति॒ भ्रातृ॑व्याभिभूत्यै॒ भव॑त्यात्मना॒ परा॑ऽस्य॒ भ्रातृ॑-व्यो भवत्य॒मृत॑- ॥ ५ ॥ व्वा आप॒स्तस्मा॑द॒द्भिरव॑तान्तम॒भि षि॑ञ्चन्ति॒ नाऽऽर्ति॒मार्च्छ॑ति॒ सर्व॒मायु॑रेति॒ यस्यै॒ता उ॑पधी॒यन्ते॒ य उ॑ चैना ए॒वव्वेँदाऽन्न॒व्वा आपः॑ प॒शव॒ आपोऽन्नं॑ प॒शवो॑ऽन्ना॒दः प॑शु॒मान्भ॑वति॒ यस्यै॒ता उ॑पधी॒यन्ते॒ य उ॑ चैना ए॒वव्वेँद॒ द्वाद॑श भवन्ति॒ द्वाद॑श॒ मासाः॑स्सव्वँथ्स॒रस्स॑व्वँथ्स॒रेणै॒वाऽस्मा॒ ॥ ६ ॥ अन्न॒मव॑ रुन्धे॒ पात्रा॑णि भवन्ति॒ पात्रे॒ वा अन्न॑मद्यते॒ सयो॑न्येवाऽन्न॒मव॑ रुन्ध॒ आ द्वा॒द॒शात्पुरु॑-षा॒दन्न॑मत्त्यथो॒ पात्रा॒न्न छि॑द्यते॒ यस्यै॒ता उ॑पधी॒यन्ते॒ य उ॑ चैना ए॒वव्वेँद॑ कु॒म्भाश्च॑ कु॒म्भीश्च॑ मिथु॒नानि॑ भवन्ति मिथु॒नस्य॒ प्रजा॑त्यै॒ प्र प्र॒जया॑ प॒शुभि॑र्मिथु॒नैर्जा॑यते॒ यस्यै॒ता उ॑पधी॒यन्ते॒ य उ॑ ॥ ७ ॥ चैना ए॒वव्वेँद॒ शुग्वा अ॒ग्निस्सो॑ऽद्ध्व॒र्युय्यँज॑मानं॒ प्र॒जाश्शु॒चाऽर्प॑यति॒ यद॒प उ॑प॒दधा॑ति॒ शुच॑मे॒वाऽस्य॑ शमयति॒ नाऽऽर्ति॒मार्च्छ॒त्यद्ध्व॒र्युर्न यज॑मान॒श्शाम्य॑न्ति॒ प्र॒जा यत्रै॒ता उ॑पधी॒यन्ते॒ऽपाव्वाँ ए॒तानि॒ हृद॑यानि॒ यदे॒ता आपो॒ यदे॒ता अ॒प उ॑प॒दधा॑ति दि॒व्याभि॑रे॒वैना॒स्सꣳ सृ॑जति॒ वर्षु॑कः प॒र्जन्यो॑ ॥ ८ ॥ भवति॒ यो वा ए॒तासा॑मा॒यत॑नं॒ क्लृप्तिं॒व्वेदा॒ऽऽयत॑नवान्भवति॒ कल्प॑तेऽस्मा अनुसी॒तमुप॑ दधात्ये॒तद्वा आ॑सामा॒यत॑नमे॒षा क्लृप्ति॒र्य ए॒वव्वेँदा॒ऽऽयत॑नवान्भवति॒ कल्प॑तेऽस्मै द्व॒न्द्वम॒न्या उप॑ दधाति॒ चत॑स्रो॒ मद्ध्ये॒ धृत्या॒ अन्न॒व्वा इष्ट॑का ए॒तत्खलु॒ वै सा॒क्षाद॒न्नय्य॑दे॒ष च॒रुर्यदे॒तश्च॒रुमु॑प॒दधा॑ति सा॒क्षा- ॥ ९ ॥ दे॒वाऽस्मा॒ अन्न॒मव॑ रुन्धे मद्ध्य॒त उप॑ दधाति मद्ध्य॒त ए॒वाऽस्मा॒ अन्न॑न्दधाति॒ तस्मा॑न्म-द्ध्य॒तोऽन्न॑मद्यते बार्हस्प॒त्यो भ॑वति॒ ब्रह्म॒ वै दे॒वानां॑ बृह॒स्पति॒र्ब्रह्म॑णै॒वाऽस्मा॒ अन्न॒मव॑ रुन्धे ब्रह्मवर्च॒सम॑सि ब्रह्मवर्च॒साय॒ त्वेत्या॑ह तेज॒स्वी ब्र॑ह्मवर्च॒सी भ॑वति॒ यस्यै॒ष उ॑पधी॒यते॒ य उ॑ चैनमे॒वव्वेँद ॥ १० ॥ अ॒मृत॑मस्मै जायते॒ यस्यै॒ता उ॑पधी॒यन्ते॒ य उ॑ प॒र्जन्य॒ उ॑प॒दधा॑ति सा॒क्षाथ्स॒प्तच॑त्वारिꣳशच्च ॥ २ ॥

भूतेष्टका उप दधात्यत्रांत्र वै मृत्युर्जायते यत्रयत्रैव मृत्युर्जायते तत एवैनमव यजते तस्मा-दग्निचिथ्सर्वमायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टास्तस्मादग्निचिन्नाऽभिचरितवै प्रत्यगेनमभिचार-स्स्तृणुते सूयते वा एष योऽग्निश्चिनुते देवसुवामेतानि हवीꣳषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एवा- ॥ ११ ॥ ऽस्मै सवान्प्र यच्छन्ति त एनꣳ सुवन्ते सवोऽग्निर्वरुणसवो राजसूयं ब्रह्मसवश्चित्यो देवस्य त्वा सवितुः प्रसव इत्याह सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभि षिञ्चत्यन्नस्यान्नस्याऽभि षिञ्चत्यन्नस्यान्नस्याऽवरुद्धचै पुरस्तात्प्रत्यञ्चमभि षिञ्चति पुरस्ताद्धि प्रतीचीनमन्नमद्यते शीर्ष-तोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यत आ मुखादन्ववस्रावयति ॥ १२ ॥ मुखत एवाऽस्मा अन्नाद्य-न्दधात्यग्नेस्त्वा साम्राज्येनाऽभि षिञ्चामीत्याहैष वा अग्नेस्सवस्तेनैवैनमभि षिञ्चति बृहस्पतेस्त्वा साम्राज्येनाऽभि षिञ्चामीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य त्वा साम्रा-ज्येनाऽभि षिञ्चामीत्याहेन्द्रियमेवाऽस्मिन्नुपरिष्टाद्दधात्येत- ॥ १३ ॥ द्वै राजसूयस्य रूपय्य एव-वँविद्वानग्निश्चिनुत उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाऽग्निचित इन्द्रस्य सुषुवा-णस्य दशधेन्द्रियँव्वीर्यं पराऽपतत्तद्देवास्सौत्रामण्या समभरन्थ्सूयते वा एष योऽग्निश्चिनुतेऽग्निश्चि-त्वा सौत्रामण्या यजेतेन्द्रियमेव वीर्यꣳ संभृत्याऽऽत्मन्धत्ते ॥ १४ ॥ त एवाऽन्ववस्रावयत्येतदष्टाच-त्वारिꣳशच्च ॥ ३ ॥

सजूरब्दोऽयावभिस्सजूरुषा अरुणीभिस्सजूस्सूर्य एतशेन सजोषावश्विना दꣳसोभिस्सजू-रग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा सँव्वथ्सरो वा अब्दो मासा अयावा उषा अरुणी सूर्य एतश इमे अश्विना सँव्वथ्सरोऽग्निर्वैश्वानरः पशव इडा पशवो घृतꣳ सँव्वथ्सरं पशवोऽनु प्र जायन्ते सँव्वथ्सरे-णैवाऽस्मै पशून्प्र जनयति दर्भस्तम्बे जुहोति य- ॥ १५ ॥ द्वा अस्या अमृतय्यँद्वीर्यन्तद्दर्भास्तस्मि-ञ्जुहोति प्रैव जायतेऽन्नादो भवति यस्यैवञ्जुह्वत्येता वै देवता अग्नेः पुरस्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाऽग्नेः पुरस्तात्प्रति दधात्यनन्धो भवति य एवँव्वेदाऽऽपो वा इदमग्रे सलिलमासीथ्स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायथ्स ॥ १६ ॥ प्रतिष्ठान्नाऽविन्दत स एतदपाङ्कुलायमपश्य-त्तस्मिन्नग्निमचिनुत तदियमभवत्ततो वै स प्रत्यतिष्ठद्यां पुरस्तादुपादधात्तच्छिरोऽभवथ्सा प्राची दिग्यान्दक्षिणत उपादधाथ्स दक्षिणः पक्षोऽभवथ्सा दक्षिणा दिग्याम्पश्चादुपादधात्तत्पुच्छम-भवथ्सा प्रतीची दिग्यामुत्तरत उपादधा- ॥ १७ ॥ थ्स उत्तरः पक्षोऽभवथ्सोदीची दिग्यामुपरिष्टा-दुपादधात्तत्पृष्ठमभवथ्सोर्द्ध्वा दिगियँव्वा अग्निः पञ्चेष्टकस्तस्माद्यदस्याङ्खनन्त्यभीष्टकान्तृन्दन्त्यभि शर्कराꣳ सर्वा वा इयँव्वयोभ्यो नक्तन्दृशे दीप्यते तस्मादिमाँव्वयाꣳसि नक्तन्नाऽध्यासते य एव-वँविद्वानग्निश्चिनुते प्रत्येव ॥ १८ ॥ तिष्ठत्यभि दिशो जयत्याग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्द्धुकꣳ स्वामेव तद्दिशमन्वेत्यपाँव्वा अग्निः कुलायन्तस्मादापोऽग्निꣳ हारुकास्स्वामेव तद्योनिं प्र विशन्ति ॥ १९ ॥ यदलेलायथ्स उत्तरत उपादधादेव द्वात्रिꣳशच्च ॥ ४ ॥

सँव्वथ्सरमुख्यं भृत्वा द्वितीये सँव्वथ्सर आग्नेयमष्टाकपालन्निर्वपेदैन्द्रमेकादशकपालँव्वैश्व-
देवन्द्वादशकपालं बार्हस्पत्यञ्चरुँव्वैष्णवन्त्रिकपालन्तृतीये सँव्वथ्सरेऽभिजिता यजेत यदष्टाकपालो
भवत्यष्टाक्खरा गायत्र्याग्नेयङ्गायत्रं प्रातस्सवनं प्रातस्सवनमेव तेन दाधार गायत्रीञ्छन्दो यदेकादश-
कपालो भवत्येकादशाक्खरा त्रिष्टुगैन्द्रन्त्रैष्टुभं माद्ध्यन्दिनꣳ सवनं माद्ध्यन्दिनमेव सवनन्तेन
दाधार त्रिष्टुभ- ॥ २० ॥ ञ्छन्दो यद्द्वादशकपालो भवति द्वादशाक्खरा जगती वैश्वदेवञ्जागतन्तृती-
यसवनन्तृतीयसवनमेव तेन दाधार जगतीञ्छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां
बृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीये
सँव्वथ्सरेऽभिजिता यजतेऽभिजित्यै यथ्सँव्वथ्सरमुख्यं बिभर्तीममेव ॥ २१ ॥ तेन लोकꣳ स्पृणोति
यद्द्वितीये सँव्वथ्सरेऽग्निञ्चिनुतेऽन्तरिक्खमेव तेन स्पृणोति यत्तृतीये सँव्वथ्सरे यजतेऽमुमेव तेन
लोकꣳ स्पृणोत्येतँव्वै परं आट्णारः कक्खीवाꣳ औशिजो वीतहव्यश्श्रायसस्त्रसदस्युः पौरुकुथ्स्यः
प्रजाकामा अचिन्वत ततो वै ते सहस्रꣳसहस्रं पुत्रानविन्दन्त प्रथते प्रजया पशुभिस्तां मात्रामाप्नोति
यान्तेऽगच्छन् य एवँव्विद्वानेतमग्निञ्चिनुते ॥ २२ ॥ दाधार त्रिष्टुभमिममेवैवञ्चत्वारि च ॥ ५ ॥

प्रजापतिरग्निमचिनुत स क्खुरपविर्भूत्वाऽतिष्ठत्तन्देवा बिभ्यतो नोपाऽऽयन्ते छन्दोभिरात्मा-
नञ्छादयित्वोपाऽऽयन्तच्छन्दसाञ्छन्दस्त्वं ब्रह्म वै छन्दाꣳसि ब्रह्मण एतद्रूपँय्यत्कृष्णाजिनङ्कार्ष्णी
उपानहावुप मुञ्चते छन्दोभिरेवाऽऽत्मानञ्छादयित्वाऽग्निमुप चरत्यात्मनोऽहिꣳसायै देवनिधिर्वा
एष नि धीयते यदग्नि- ॥ २३ ॥ रन्ये वा वै निधिमगुप्तँव्विन्दन्ति न वा प्रति प्र जानात्युखामा
क्रामत्यात्मानमेवाऽधिपाङ्कुरुते गुप्त्या अथो खल्वाहुर्नाऽऽक्रम्येति नैरृत्युखा यदाक्रामेन्निरृत्या
आत्मानमपि दद्ध्यात्तस्मान्नाऽऽक्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपा-
येति तादृगेव तत् ॥ २४ ॥ प्रजापतिर्वा अथर्वाऽग्निरेव दद्ध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतꣳ ह
वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निञ्चिनोति सात्मानमेवाऽग्निञ्चिनुते
सात्माऽमुष्मिँल्लोके भवति य एवँव्वेद शरीरँव्वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वान-
रञ्जुहोति शरीरमेव सꣳस्कृत्या- ॥ २५ ॥ ऽभ्यारोहति शरीरँव्वा एतद्यजमानस्सꣳस्कुरुते यदग्नि-
ञ्चिनुते यच्चिते वैश्वानरञ्जुहोति शरीरमेव सꣳस्कृत्याऽऽत्मनाऽभ्यारोहति तस्मात्तस्य नाऽव द्यन्ति
जीवन्नेव देवानप्येति वैश्वानर्यर्चा पुरीषमुप दधातीयँव्वा अग्निर्वैश्वानरस्तस्यैषा चितिर्यत्पुरीषम-
ग्निमेव वैश्वानरञ्चिनुत एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवाऽस्य तनुवमव रुन्धे ॥ २६ ॥
अग्निस्तथ्सꣳस्कृत्याऽग्नेर्दश च ॥ ६ ॥

अग्नेर्वै दीक्खया देवा विराजमाप्नुवन्तिस्रो रात्रीर्दीक्खितस्स्यात्त्रिपदा विराड्विराजमाप्नोति
षड्रात्रीर्दीक्खितस्स्याथ्षड्वा ऋतवस्सँव्वथ्सरथ्सँव्वथ्सरो विराड्विराजमाप्नोति दश रात्रीर्दीक्खित-

स्याद्दशांख्खरा विराड्विराजमाप्नोति द्वादश रात्रींर्दीख्खितस्स्याद्द्वादश मासांस्सँव्वथ्सरस्सँव्वथ्सरो विराड्विराजमाप्नोति त्रयोदश रात्रींर्दीख्खितस्स्यात्त्रयोदश ॥ २७ ॥ मासांस्सँव्वथ्सरस्सँव्वथ्सरो विराड्विराजमाप्नोति पञ्चदश रात्रींर्दीख्खितस्स्यात्पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशस्सँव्वथ्सर आंप्यते सँव्वथ्सरो विराड्विराजमाप्नोति सप्तदश रात्रींर्दीख्खितस्स्याद्द्वादश मासाः पञ्चर्तव - स्स सँव्वथ्सरस्सँव्वथ्सरो विराड्विराजमाप्नोति चतुर्विꣳशतिꣳ रात्रींर्दीख्खितस्स्याच्चतुर्विꣳशतिरर्द्ध-मासास्सँव्वथ्सरस्सँव्वथ्सरो विराड्विराजमाप्नोति त्रिꣳशतꣳ रात्रींर्दीख्खितस्स्यांत् ॥ २८ ॥ त्रिꣳ-शदंख्खरा विराड्विराजमाप्नोति मासन्दीख्खितस्स्याद्यो मासस्स सँव्वथ्सरस्सँव्वथ्सरो विराड्विराजमाप्नोति चतुरो मासो दींख्खितस्स्यांच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाऽजंयन्गायत्रीञ्छन्दोऽष्टौ रुद्रास्तेऽन्तरिंख्खमाऽजंयन्त्रिष्टुभञ्छन्दो द्वादशाऽऽदित्यास्ते दिवमाऽजयञ्जगतीञ्छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यन्देवानां तस्माद्द्वादश मासो भृत्वाऽग्निञ्चिन्वीत द्वादश मासांस्सँव्वथ्सरस्सँव्वथ्सरोऽग्निश्चित्यस्तस्यांऽहोरात्राणीष्टका आप्तेष्टकमेनञ्चिनुतेऽथो व्यावृतमेव गच्छति श्रैष्ठ्यꣳ समानानांम् ॥ २९ ॥ स्यात्त्रयोदश त्रिꣳशतꣳ रात्रींर्दीख्खितस्स्याद्द्वे तेऽष्टाविꣳशतिश्च ॥७॥

सुवर्गाय वा एष लोकाय चीयते यदग्निस्तँय्यन्नाऽन्वारोहैथ्सुवर्गाल्लोकाद्यजमानो हीयेत पृथिवीमाऽक्रमिषं प्राणो मा मा हासीदन्तरिंख्खमाऽक्रमिषम्प्रजा मा मा हासीद्दिवमाऽक्रमिषꣳ सुवरगन्मेत्याहैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै यत्पख्खसंमितां मिनुयात् ॥ ३० ॥ कनीयाꣳसँय्यज्ञक्रतुमुपेयात्पापीयस्यस्याऽऽत्मनः प्रजा स्याद्वेदिसंमितां मिनोति ज्यायाꣳसमेव यज्ञक्रतुमुपैति नाऽस्याऽऽत्मनः पापीयसी प्रजा भवति साहस्रञ्चिन्वीत प्रथमञ्चिन्वानस्सहस्रसंमितो वा अयँल्लोक इममेव लोकमभि जयति द्विषाहस्रञ्चिन्वीत द्वितीयञ्चिन्वानो द्विषाहस्रँव्वा अन्तरिंख्खमन्तरिंख्खमेवाऽभि जयति त्रिषाहस्रञ्चिन्वीत तृतीयञ्चिन्वान- ॥ ३१ ॥ स्त्रिषाहस्रो वा असौ लोकोऽमुमेव लोकमभि जयति जानुदघ्नञ्चिन्वीत प्रथमञ्चिन्वानो गायत्रियैवेमँल्लोकमभ्यारोहति नाभिदघ्नञ्चिन्वीत द्वितीयञ्चिन्वानस्त्रिष्टुभैवाऽन्तरिंख्खमभ्यारोहति ग्रीवदघ्नञ्चिन्वीत तृतीयञ्चिन्वानो जगत्यैवाऽमुँल्लोकमभ्यारोहति नाऽग्निञ्चित्वा रामामुपेयादयोनौ रेतो धास्यामीति न द्वितीयञ्चित्वाऽन्यस्य स्त्रिय- ॥ ३२ ॥ मुपेयान्न तृतीयञ्चित्वा काञ्चनोपेयाद्रेतो वा एतन्नि धत्ते यदग्निञ्चिनुते यदुपेयाद्रेतसा व्यृद्ध्येताऽथो खल्वाहुरप्रजस्यन्तद्यन्नोपेयादिति यद्रेतस्सिचावुपदधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय त्रीणि वाव रेताꣳसि पिता पुत्रः पौत्रो ॥ ३३ ॥ यद्द्वे रेतस्सिचावुपदद्ध्याद्रेतोऽस्य वि च्छिन्द्यात्तिस्र उप दधाति रेतसस्सन्तत्या इयँव्वाव प्रथमा रेतस्सिग्वाग्वा इयन्तस्मात्पश्यन्तीमां पश्यन्ति वाचँव्वदन्तीमन्तरिंख्खन्द्वितीयां प्राणो वा अन्तरिंख्खन्तस्मान्नाऽन्तरिंख्खं पश्यन्ति न प्राणमसौ तृतीया चख्खुर्वा असौ तस्मात्पश्यन्त्यमूं पश्यन्ति चख्खुर्यजुषेमाश्चा- ॥ ३४ ॥ ऽमूश्चोप दधाति मनसा मद्ध्यमामे-

षाल्ँल्लोकानाङ्क्लृप्त्या अथो प्राणानामिष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीयेत्याह स्तुतशस्त्रे एवैतेन दुहे पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षुस्सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शꣳसिषदित्याहैतद्वा अग्नेरुक्थन्तेनैवैनमनु शꣳसति ॥ ३५ ॥ मिनुयात्तृतीयश्चिन्वानस्त्रियं पौत्रश्च वै सप्त च ॥ ८ ॥

सूयते वा एषोऽग्नीनाय्ँय उखायां भ्रियते यदधस्सादयेद्गर्भाः प्रपादुकास्स्युरथो यथा सवात्प्रत्यवरोहति तादृगेव तदासन्दी सादयति गर्भाणान्धृत्या अप्रपादायाऽथो सवमेवैनङ्करोति गर्भो वा एष यदुख्यो योनिश्शिक्यय्ँयच्छिक्यादुखान्निरूहेद्योनेर्गर्भन्निर्हण्यात्षडुद्यामꣳ शिक्यं भवति षोढाविहितो वै ॥ ३६ ॥ पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलञ्च स्तनौ तावस्य प्रजा उप जीवन्ति यदुखाञ्चोलूखलञ्चोपदधाति ताभ्यामेव यजमानोऽमुष्मिल्ँल्लोकेऽग्निन्दुहे सव्ँवथ्सरो वा एष यदग्निस्तस्य त्रेधाविहिता इष्टकाः प्राजापत्या वैष्णवी- ॥ ३७ ॥ र्वैश्वकर्मणीरहोरात्राण्येवाऽस्य प्राजापत्या यदुख्यम्बिभर्ति प्राजापत्या एव तदुप धत्ते यथ्समिध आदधाति वैष्णवा वै वनस्पतयो वैष्णवीरेव तदुप धत्ते यदिष्टकाभिरग्निञ्चिनोतीयव्ँवै विश्वकर्मा वैश्वकर्मणीरेव तदुप धत्ते तस्मादाहुस्त्रिवृदग्निरिति तव्ँवा एतय्ँयजमान एव चिन्वीत यदस्याऽन्यश्चिनुयाद्यत्तन्दक्षिणाभिर्न राधयेदग्निमस्य वृञ्जीत योऽस्याऽग्निञ्चिनुयात्तन्दक्षिणाभी राधयेदग्निमेव तथ्स्पृणोति ॥ ३८ ॥ षोढाविहितो वै वैष्णवीरन्यो विꣳशतिश्च ॥ ९ ॥

प्रजापतिरग्निमचिनुतर्तुभिस्सव्ँवथ्सरव्ँवसन्तेनैवाऽस्य पूर्वार्द्धमचिनुत ग्रीष्मेण दक्षिणं पक्षव्ँवर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ हेमन्तेन मद्ध्यं ब्रह्मणा वा अस्य तत्पूर्वार्द्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छव्ँविशोत्तरं पक्षमाशया मद्ध्यय्ँय एवव्ँविद्वानग्निञ्चिनुत ऋतुभिरेवैनञ्चिनुतेऽथो एतदेव सर्वमव ॥ ३९ ॥ रुन्धे शृण्वन्त्येनमग्निञ्चिक्यानमत्त्यन्नꣳ रोचत इयव्ँवाव प्रथमा चितिरोषधयो वनस्पतयः पुरीषमन्तरिक्षन्द्वितीया वयाꣳसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषय्ँयज्ञश्चतुर्थी दक्षिणा पुरीषय्ँयजमानः पञ्चमी प्रजा पुरीषय्ँयत्त्रिचितीकञ्चिन्वीत यज्ञन्दक्षिणामात्मानं प्रजामन्तरियात्तस्मात्पञ्चचितीकश्चेतव्य एतदेव सर्वꣳ स्पृणोति यत्तिस्रश्चितय- ॥ ४० ॥ स्त्रिवृद्ध्यग्निर्यद्द्वे द्विपाद्यजमानः प्रतिष्ठित्यै पञ्च चितयो भवन्ति पाङ्क्तः पुरुष आत्मानमेव स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सं पद्यन्ते दशाक्षरो वै पुरुषो यावानेव पुरुषस्तꣳ स्पृणोत्यथो दशाक्षरा विराडन्नव्ँविराड्विराज्येवाऽन्नाद्ये प्रति तिष्ठति सव्ँवथ्सरो वै षष्ठी चितिरृतवः पुरीषꣳ षट्चितयो भवन्ति षट्पुरीषाणि द्वादश सं पद्यन्ते द्वादश मासास्सव्ँवथ्सरस्सव्ँवथ्सर एव प्रति तिष्ठति ॥ ४१ ॥ अव चितयः पुरीषं पञ्चदश च ॥ १० ॥

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्या बभ्रुररुणबभ्रुश्शुकबभ्रुस्ते रौद्राश्श्येतश्श्ये-ताक्षश्श्येतग्रीवस्ते पितृदेवत्यास्तिस्रः कृष्णा वशा वारुण्यस्तिस्रश्श्वेता वशास्सौर्यो मैत्राबार्हस्पत्या धूम्रललामास्तूपराः ॥ ४२ ॥ ॥ ११ ॥

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी बलक्षी तास्सारस्वत्यः पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्यस्तिस्रश्श्यामा वशाः पौष्णियस्तिस्रो रोहिणीर्वशा मैत्रि-य ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः ॥ ४३ ॥ रोहितः पृश्निष्षड्विꣳशतिष्षड्विꣳशतिः ॥ १२ ॥

शितिबाहुरन्यतश्शितिबाहुस्समन्तशितिबाहुस्त ऐन्द्रवायवाश्शितिरन्ध्रोऽन्यतश्शितिरन्ध्र-स्समन्तशितिरन्ध्रस्ते मैत्रावरुणाश्शुद्धवालस्सर्वशुद्धवालो मणिवालस्त आश्विनास्तिस्रश्शिल्पा वशा वैश्वदेव्यस्तिस्रश्श्येनीः परमेष्ठिने सोमापौष्णाश्श्यामललामास्तूपराः ॥ ४४ ॥ ॥ १३ ॥

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाश्शितिककुच्छितिपृष्ठश्शितिभसत्त ऐन्द्राबार्हस्पत्या-श्शितिपाच्छित्योष्ठश्शितिभ्रुस्त ऐन्द्रावैष्णवास्तिस्रस्सिद्ध्मा वशा वैश्वकर्मण्यस्तिस्रो धात्रे पृषो-दरा ऐन्द्रापौष्णाश्श्येतललामास्तूपराः ॥ ४५ ॥ शितिबाहुरुन्नतः पञ्चविꣳशतिःपञ्चविꣳशतिः ॥ १४ ॥

कर्णास्त्रयो यामास्सौम्यास्त्रयश्श्वितिङ्गा अग्नये यविष्ठाय त्रयो नकुलास्तिस्रो रोहिणीस्त्र्य-व्यस्ता वसूनान्तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाꣳ सोमैन्द्रा बभ्रुललामास्तूपराः ॥ ४६ ॥ कर्णास्त्रयो-विꣳशतिः ॥ १५ ॥

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लफ्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चावीस्तिस्र आदित्यानान्त्रिवथ्सास्तिस्रोऽङ्गिरसामैन्द्रावैष्णवा गौरललामास्तू-पराः ॥ ४७ ॥ शुण्ठा विꣳशतिः ॥ १६ ॥

इन्द्राय राज्ञे त्रयश्शितिपृष्ठा इन्द्रायाऽधिराजाय त्रयश्शितिककुद इन्द्राय स्वराज्ञे त्रयश्शि-तिभसदस्तिस्रस्तुर्यौह्यस्साद्ध्यानान्तिस्रः पष्ठौह्यो विश्वेषान्देवानामाग्नेन्द्राः कृष्णललामास्तूपराः ॥ ४८ ॥ इन्द्राय राज्ञे द्वाविꣳशतिः ॥ १७ ॥

अदित्यै त्रयो रोहितैता इन्द्राण्यै त्रयः कृष्णैताः कुह्वै त्रयोऽरुणैतास्तिस्रो धेनवो राकायै त्रयोऽनड्वाहस्सिनीवाल्या आग्नावैष्णवा रोहितललामास्तूपराः ॥ ४९ ॥ अदित्या अष्टादश ॥ १८ ॥

सौम्यास्त्रयः पिशङ्गास्सोमाय राज्ञे त्रयस्सारङ्गाः पार्जन्या नभोरूपास्तिस्रोऽजा मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या द्यावापृथिव्या मालङ्गास्तूपराः ॥ ५० ॥ सौम्या एकान्न विꣳशतिः ॥ १९ ॥

वा॒रु॒णास्त्र॒यः॑ कृ॒ष्णल॑ललामा॒ वरु॑णाय॒ राज्ञे॒ त्रयो॒ रोहि॑तललामा॒ वरु॑णाय रि॒शाद॑से॒ त्रयो॑ऽरु॒ण॑ललामाश्शि॒ल्पास्त्रयो॑ वैश्वदे॒वास्त्र॒यः॒ पृश्न॑यस्सर्व॑देव॒त्या॑ ऐन्द्रासू॒राश्श्येत॑ललामास्तूप॒राः ॥ ५१ ॥ वा॒रु॒णा वि॒ꣳश॒तिः ॥ २० ॥

सोमा॑य स्व॒राज्ञे॑ऽनोवा॒हाव॑न॒ड्वाहा॑वि॒न्द्रा॒ग्निभ्या॑मोजो॒दाभ्या॑मु॒ष्टारा॑वि॒न्द्रा॒ग्निभ्या॑म्बल॒दाभ्या॑ꣳ सीरवा॒हाव॑वी॒ द्वे धे॒नू भौ॒मी दि॒ग्भ्यो वड॑बे॒ द्वे धे॒नू भौ॒मी वैरा॒जी पु॑रु॒षी द्वे धे॒नू भौ॒मी वा॒यव॑ आरोह॑णवा॒हाव॑न॒ड्वाहौ॑ वारु॒णी कृ॒ष्णे व॒शे अ॑रा॒ड्यौ॑ दि॒व्यावृ॑ष॒भौ प॑रिम॒रौ ॥ ५२ ॥ सोमा॑य स्व॒राज्ञे॒ चतु॑स्त्रिꣳशत् ॥ २१ ॥

एका॑दश प्रा॒तर्ग॒व्याः प॒शव॒ आ ल॑भ्यन्ते छग॒लः क॒ल्माषः॑ किकिदी॒विर्वि॑दी॒गय॒स्ते त्वा॒ष्ट्रास्सौ॒रीर्नव॑ श्वे॒ता व॒शा अ॑नूब॒न्ध्या॑ भवन्त्याग्ने॒य ऐ॑न्द्रा॒ग्न आ॑श्वि॒नस्ते वि॑शालयू॒प आ ल॑भ्यन्ते ॥ ५३ ॥ एका॑दश प्रा॒तः पञ्च॑वि॒ꣳशतिः ॥ २२ ॥

पि॒शङ्गा॒स्त्रयो॑ वास॒न्तास्सा॒रङ्गा॒स्त्रयो॒ ग्रैष्माः॑ पृष॒न्तास्त्रयो॒ वार्षि॒काः पृश्न॑य॒स्त्रय॑श्शार॒दाः पृ॒श्निस॒क्थास्त्रयो॒ हैम॑न्तिका अवलि॒प्तास्त्रय॑श्शैशि॒रास्स॑ꣳवथ्स॒राय॒ निव॑क्षसः ॥ ५४ ॥ पि॒शङ्गा॑ वि॒ꣳश॒तिः ॥ २३ ॥

रोहि॑तः कृ॒ष्णा धू॒म्रल॑ललामाः पृश्नि॒श्श्यामा॒ अ॑रुणल॑ललामाश्शितिबा॒हुश्शि॒ल्पाश्श्येनी॑श्श्या॒मल॑ललामा उन्नत॒स्सि॒द्ध्मा धा॒त्रे पौ॒ष्णाश्श्येत॑ललामाः क॒र्णा ब॒भ्रुल॑ललामाश्शु॒ण्ठा गौ॒रल॑ललामा॒ इन्द्रा॑य कृ॒ष्णल॑ललामा॒ अदि॑त्यै॒ रोहि॑तललामास्सौ॒म्या मा॒लङ्गा॑ वारु॒णास्सू॒राश्श्येत॑ललामा॒ दर्श ॥

हिर॑ण्यवर्णा अपाङ्क्त्या॑न्भूते॒ष्टकास्स॒जूस्स॑ꣳवथ्स॒रं प्र॒जाप॑तिस्स ख्खुर॒पवि॒रग्नै॑ दी॒क्षया॑ सुव॒र्गाय॒ तय्य॒न्न सू॒यतै॑ प्र॒जाप॑तिर्॒क्रतु॒भी॒ रोहि॑तः पृश्नि॒श्शितिबा॒हुरु॑न्नतः क॒र्णाश्शु॒ण्ठा इन्द्रा॒याऽदि॑त्यै सौ॒म्या वा॑रु॒णास्सोमा॒यैका॑दश पि॒शङ्गा॒स्त्रयो॑वि॒ꣳशतिः ॥ २३ ॥ हिर॑ण्यवर्णा भूते॒ष्टकाश्छन्दो॒ यत्कनी॑याꣳसन्नि॒वृद्ध्य॑ग्नि॒र्वा॑रु॒णाश्चतुष्पञ्चा॒शत् ॥ ५४ ॥ हिर॑ण्यवर्णा॒ निव॑क्षसः ॥

॥ हरिः॑ ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे षष्ठः प्रश्नस्समाप्तः॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ पञ्चमकाण्डे सप्तमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

यो वा अयथादेवतमग्निश्चिनुत आ देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतन्न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्या गायत्रिया प्रथमाश्चितिमभि मृशेत्त्रिष्टुभा द्वितीयाञ्जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीय्यँथादेवतमेवाऽग्निश्चिनुते न देवताभ्य आ वृश्च्यते वसीयान्भवतीडायै वा एषा विभक्तिः पशव इडा पशुभिरेन- ॥ १ ॥ श्चिनुते यो वै प्रजापतये प्रतिप्रोच्याऽग्निश्चिनोति नाऽऽर्तिमार्च्छत्यश्वावभितस्तिष्ठेताङ्कृष्ण उत्तरतश्श्वेतो दक्षिणस्तावालभ्येष्टका उप दद्ध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वस्साक्षादेव प्रजापतये प्रतिप्रोच्याऽग्निश्चिनोति नाऽऽर्तिमार्च्छत्येतद्वा अह्नो रूपय्यँच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नो ॥ २ ॥ रूपय्यँदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभि मृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनञ्चिनुते हिरण्यपात्रम्मधोः पूर्णन्ददाति मधव्योऽसानीति सौर्या चित्रवत्याऽवेक्षते चित्रमेव भवति मद्ध्यन्दिनेऽश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृद्ध्नोति ॥ ३ ॥ एनमेतदह्नोऽष्टाचत्वारिꣳशच्च ॥ १ ॥

त्वामग्ने वृषभञ्चेकितानं पुनर्युवानञ्जनयन्नुपागाम् । अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि । पशवो वा एते यदिष्टकाश्चित्याञ्चित्यामृषभमुप दधाति मिथुनमेवाऽस्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयूथ ऋषभः । सँव्वथ्सरस्य प्रतिमाय्याँन्त्वा रात्र्युपासते । प्रजाꣳ सुवीराङ्कृत्वा विश्वमायुर्व्यँश्नवत् । प्राजापत्या- ॥ ४ ॥ मेतामुप दधातीयव्वाँवैषैकाष्टका यदेवैकाष्टकायामन्नङ्क्रियते तदेवैतयाऽव रुन्ध एषा वै प्रजापतेः कामदुघा तयैव यजमानोऽमुष्मिँल्लोकेऽग्निन्दुहे येन देवा ज्योतिषोर्द्ध्वा उदायन् येनाऽऽदित्या वसवो येन रुद्राः । येनाऽङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति । सुवर्गाय वा एष लोकाय ॥ ५ ॥ चीयते यदग्निर्येन देवा ज्योतिषोर्द्ध्वा उदायन्नित्युख्यꣳ समिन्ध इष्टका एवैता उप धत्ते वानस्पत्यास्सुवर्गस्य लोकस्य समष्ट्यै शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे । शतय्यो नश्शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा । ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषाय्यो अज्यानिमजीतिमावहात्तस्मै नो देवाः ॥ ६ ॥ परि दत्तेह सर्वे । ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षास्सुवितन्नो अस्तु । तेषामृतूनाꣳ शतशारदानान्निवात एषामभये स्याम । इदुवथ्सराय परिवथ्सराय सँव्वथ्सराय

कृणुता बृहन्नमः । तेषाँव्वयꣳ सुमतौ यज्ञियानाञ्ज्योगजीता अहतास्स्याम । भद्रान्नश्श्रेयस्समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितो ॥ ७ ॥ आ विशस्व शन्तोकाय तनुवै स्योनः । अज्यानीरेता उप दधात्येता वै देवता अपराजितास्ता एव प्र विशति नैव जीयते ब्रह्मवादिनो वदन्ति यदर्द्धमासा मासा ऋतवस्सँव्वथ्सर ओषधीः पचन्त्यथ कस्मादन्याभ्यो देवताभ्य आग्रयणन्निरुप्यत इत्येता हि तद्देवता उदजयन्नु यदृतुभ्यो निर्वपेद्देवताभ्यस्समदन्दद्ध्यादाग्रयणन्निरुप्यैता आहुतीर्जुहोत्यर्द्धमासानेव मासानृतून्थ्सँव्वथ्सरं प्रीणाति न देवताभ्यस्समदन्दधाति भद्रान्नश्श्रेयस्समनैष्ट देवा इत्याह हुताद्याय यजमानस्याऽपराभावाय ॥ ८ ॥ प्राजापत्याल्लोँकाय देवाः पितो दद्ध्यादाग्रयणं पञ्चविꣳशतिश्च ॥ २ ॥

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्ताद्दक्षिणतः पश्चादुत्तरतोऽघायुरभिदासत्येतꣳ सोऽश्मानमृच्छतु । देवासुरास्सँय्यत्ता आसन्तेऽसुरा दिग्भ्य आऽबाधन्त तान्देवा इष्वा च वज्रेण चाऽपाऽनुदन्त यद्वज्रिणीरुपदधातीष्वा चैव तद्वज्रेण च यजमानो भ्रातृव्यानप नुदते दिख्षूप ॥ ९ ॥ दधाति देवपुरा एवैतास्तनूपानीः पर्यूहतेऽग्नाविष्णू सजोषसेमा वर्द्धन्तु वाङ्गिरः । द्युम्नैर्वाजेभिरा गतम् । ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किन्देवत्या वसोर्द्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराऽऽग्नावैष्णव्यर्चा वसोर्द्धाराञ्जुहोति भागधेयेनैवैनौ समर्द्धयत्यथो एता- ॥ १० ॥ मेवाऽऽहुतिमायतनवतीङ्करोति यत्काम एनाञ्जुहोति तदेवाऽव रुन्धे रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या यच्छतरुद्रीयञ्जुहोति यैवाऽस्य घोरा तनूस्तान्तेन शमयति यद्वसोर्द्धाराञ्जुहोति यैवाऽस्य शिवा तनूस्तान्तेन प्रीणाति यो वै वसोर्द्धारायै ॥ ११ ॥ प्रतिष्ठाँव्वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनम्पचेत्तं ब्राह्मणाश्चत्वारः प्राऽश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनान्तनुवाम्प्रति ष्ठापयति चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोऽमुष्मिँल्लोकेँऽग्निन्दुहे ॥ १२ ॥ उपैतान्धारायै षट्चत्वारिꣳशच्च ॥ ३ ॥

चित्तिञ्जुहोमि मनसा घृतेनेत्याहाऽदाभ्या वै नामैषाऽऽहुतिर्वैश्वकर्मणी नैनञ्चिक्यानं भ्रातृव्या दभ्नोत्यथो देवता एवाऽव रुन्धेऽग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते सप्त ते अग्ने समिधस्सप्त जिह्वा इत्याह होत्रा एवाऽव रुन्धेऽग्निर्देवेभ्योऽपाक्रामद्भागधेय- ॥ १३ ॥ मिच्छमानस्तस्मा एतद्भागधेयं प्राऽयच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि सर्वश्चितो जातायैवाऽस्मा अन्नमपि दधाति स एनं प्रीतः प्रीणाति वसीयान्भवति ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ क्वाऽस्याऽऽहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन्न् हि सर्वाभ्यो देवताभ्यो जुह्वति ॥ १४ ॥ य एवँव्विद्वानग्निञ्चिनुते साख्षादेव देवता ऋद्ध्नोत्यग्ने यशस्विन्न् यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽ वह । अयं मूर्द्धा परमेष्ठी सुवर्चास्समानानामुत्तमश्लोको अस्तु ।

भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं बलमोजश्च जातन्तदस्मै देवा अभि सन्नमन्तु । धाता विधाता परमो- ॥ १५ ॥ त सन्दृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सन्नमाम । अभ्यावर्तद्ध्वमुप मेत साकमयꣳ शास्ताऽधिपतिर्वो अस्तु । अस्य विज्ञानमनु सꣳ रभद्ध्वमिमं पश्चादनु जीवाथ सर्वे । राष्ट्रभृत एता उप दधात्येषा वा अग्नेश्चिती राष्ट्रभृत्तयैवाऽस्मिन्राष्ट्रन्दधाति राष्ट्रमेव भवति नाऽस्माद्राष्ट्रं भ्रꣳशते ॥ १६ ॥ भागधेयञ्जुहोति परमा राष्ट्रन्दधाति सप्त च ॥ ४ ॥

यथा वै पुत्रो जातो म्रियत एवव्वा एष म्रियते यस्याऽग्निरुख्य उद्वायति यन्निर्मन्थ्यङ्कुर्याद्वि च्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीद्ध्यस्स्वादेवैनय्योनेर्जनयति नाऽस्मै भ्रातृव्यञ्जनयति तमो वा एतङ्गृह्णाति यस्याऽग्निरुख्य उद्वायति मृत्युस्तमः कृष्णव्वासः कृष्णा धेनुर्दक्षिणा तमसै- ॥ १७ ॥ व तमो मृत्युमप हते हिरण्यन्ददाति ज्योतिर्वै हिरण्यञ्ज्योतिषैव तमोऽप हतेऽथो तेजो वै हिरण्यन्तेज एवाऽऽत्मन्धत्ते सुवर्न घर्मस्स्वाहा सुवर्नाऽर्कस्स्वाहा सुवर्न शुक्रस्स्वाहा सुवर्न ज्योतिस्स्वाहा सुवर्न सूर्यस्स्वाहाऽर्को वा एष यदग्निरसावादित्यो ॥ १८ ॥ ऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि सन्दधात्येष ह त्वा अर्काश्वमेधी यस्यैतदग्नौ क्रियत आपो वा इदमग्रे सलिलमासीत्स एतां प्रजापतिः प्रथमाञ्चितिमपश्यत्तामुपाऽधत्त तदियमभवत्तव्विश्वकर्माऽब्रवीदुप त्वाऽऽयानीति नेह लोकोऽस्तीत्य- ॥ १९ ॥ ब्रवीत्स एतान्द्वितीयाञ्चितिमपश्यत्तामुपाऽधत्त तदन्तरिक्षमभवत्स यज्ञः प्रजापतिमब्रवीदुप त्वाऽऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणमब्रवीदुप त्वाऽऽयानीति केन मोपैष्यसीति दिश्याभिरित्यब्रवीत्तन्दिश्याभिरुपैत्ता उपाऽधत्त ता दिशो- ॥ २० ॥ ऽभवन्त्स परमेष्ठी प्रजापतिमब्रवीदुप त्वाऽऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणञ्च यज्ञञ्चाऽब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स एतान्तृतीयाञ्चितिमपश्यत्तामुपाऽधत्त तदसावभवत्स आदित्यः प्रजापतिमब्रवीदुप त्वा- ॥ २१ ॥ ऽऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणञ्च यज्ञञ्चाऽब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स परमेष्ठिनमब्रवीदुप त्वाऽऽयानीति केन मोपैष्यसीति लोकम्पृणयेत्यब्रवीत्तल्लोकम्पृणयोपैत्तस्मादयातयाम्नी लोकम्पृणाऽयातयामा ह्यसा- ॥ २२ ॥ वादित्यस्तानृषयोऽब्रुवन्नुप व आऽयामेति केन न उपैष्यथेति भूम्नेत्यब्रुवन्तान्द्वाभ्याञ्चितीभ्यामुपायन्त्स पञ्चचितीकस्समपद्यत य एवव्विद्वानग्निञ्चिनुते भूयानेव भवत्यभीमाल्लोकाञ्जयति विदुरेनन्देवा अथो एतासामेव देवतानाꣳ सायुज्यङ्गच्छति ॥ २३ ॥ तमसाऽऽदित्योऽस्तीति दिश आदित्यः प्रजापतिमब्रवीदुप त्वाऽसौ पञ्चचत्वारिꣳशच्च ॥ ५ ॥

वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नीयात्तमेवाऽग्निमद्यादार्तिमार्च्छेत्संवत्सरव्व्रतञ्चरेत्संवत्सरꣳ हि व्रतन्नाऽति पशुर्वा एष यदग्निर्हिनस्ति खलु वै तं पशुर्य एनं पुरस्तात्प्रत्यञ्चमुपचरति

तस्मात्पश्चात्प्राङुपचर्य आत्मनोऽहिंसायै तेजोऽसि तेजो मे यच्छ पृथिवीय्यंच्छ ॥ २४ ॥ पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छाऽन्तरिक्षय्यंच्छाऽन्तरिक्षान्मा पाहि सुवरसि सुवर्मे यच्छ दिवय्यंच्छ दिवो मा पाहीत्याहैताभिर्वा इमे लोका विधृता यदेता उपदधात्येषाल्लोकानावृँ्विधृत्यै स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधातीमे वै लोकास्स्वयमातृण्णा ज्योतिर्हिरण्यय्य-थ्स्वयमातृण्णा उपधाय ॥ २५ ॥ हिरण्येष्टका उपदधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो एताभिरेवाऽस्मा इमे लोकाः प्र भान्ति यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिस्सर्वाभी रुचे जनाय नस्कृधि । या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिस्सर्वाभी रुचन्नो धत्त बृहस्पते । रुचन्नो धेहि ॥ २६ ॥ ब्राह्मणेषु रुचᳪ राजसु नस्कृधि । रुचवृँ्विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् । द्वेधा वा अग्निश्चिक्यानस्य यश इन्द्रियङ्गच्छत्यग्निवा चितमीजानव्वा यदेता आहुतीर्जुहोत्यात्मन्नेव यश इन्द्रियन्धत्त ईश्वरो वा एष आर्तिमार्तोर्योऽग्नि-श्चिन्वन्नधिक्रामति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा ॥ २७ ॥ जुहुयाच्छान्तिरेवैषा-ऽग्नेर्गुप्तिरात्मनो हविष्कृतो वा एष योऽग्निश्चिनुते यथा वै हविस्स्कन्दत्येवव्वा एष स्कन्दति योऽग्निश्चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्दाय यो वा अग्निमृतुस्थाव्वेदर्तुरृतुरस्मै कल्पमान एति प्रत्येव तिष्ठति सव्वथ्सरो वा अग्निर्- ॥ २८ ॥ ऋतुस्थास्तस्य वसन्तश्शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छᳪ शरदुत्तरः पक्षो हेमन्तो मद्ध्यं पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका एष वा अग्निरृतुस्था य एवव्वेदर्तुरृतुरस्मै कल्पमान एति प्रत्येव तिष्ठति प्रजापतिर्वा एतञ्ज्यैष्ठ्यकामो न्यधत्त ततो वै स ज्यैष्ठ्यमगच्छद्य एववृँ्विद्वानग्निश्चिनुते ज्यैष्ठ्यमेव गच्छति ॥ २९ ॥ पृथिवीय्यंच्छ यथ्स्वयमातृण्णा उपधाय धेह्युचाऽग्नि-श्चिनुते त्रीणि च ॥ ६ ॥

यदाकूताथ्समसुस्रोद्धृदो वा मनसो वा संभृतश्चक्षुषो वा । तमनु प्रेहि सुकृतस्य लोकय्य-त्रर्षयः प्रथमजा ये पुराणाः । एतᳪ संधस्थ परि ते ददामि यमावहाच्छेवधिञ्जातवेदाः । अन्वा-गन्ता यज्ञपतिर्वो अत्र तᳪ स्म जानीत परमे व्योमन् । जानीतादेनं परमे व्योमन्देवास्सधस्था विद रूपमस्य । यदागच्छात् ॥ ३० ॥ पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै । सं प्र च्यवद्ध्वमनु सं प्र याताऽग्ने पथो देवयानान्कृणुद्ध्वम् । अस्मिन्थ्सधस्थे अद्ध्युत्तरस्मिन्विश्वे देवा यजमानश्च सी-दत । प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमय्यंज्ञन्नो वह सुवर्देवेषु गन्तवे । यदिष्टय्य-त्परादानय्यद्दत्तय्या च दक्षिणा । त- ॥ ३१ ॥ दग्निर्वैश्वकर्मणस्सुवर्देवेषु नो दधत् । येना सहस्रव्व-हसि येनाऽग्ने सर्ववेदसम् । तेनेमय्यंज्ञन्नो वह सुवर्देवेषु गन्तवे । येनाऽग्ने दक्षिणा युक्ता यज्ञव्व-हन्त्यृत्विजः । तेनेमय्यंज्ञन्नो वह सुवर्देवेषु गन्तवे । येनाऽग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेने-

मय्यँज्ञन्नों वह सुवर्देवेषु गन्तवे । यत्र धारा अनपेता मधौर्घृतस्य च याः । तदग्निर्वैश्वकर्मणस्सुवर्देवेषु नो दधत् ॥ ३२ ॥ आगच्छात्तद्वचानशुस्तेनेमय्यँज्ञन्नों वह सुवर्देवेषु गन्तवे चतुर्दश च ॥ ७ ॥

यास्तें अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये तें अग्ने मेडयो य इन्दव-स्तेभिरात्मानञ्चिनुहि प्रजानन् । उथ्सन्नयज्ञो वा एष यदग्निः किँवाऽहैतस्य क्रियते किँवा न यद्वा अद्ध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्तें अग्ने समिधो यानि ॥ ३३ ॥ धामेत्याहैषा वा अग्नेस्स्वयञ्चितिरग्निरेव तदग्निश्चिनोति नाऽद्ध्वर्युरात्मनोऽन्तरेति चतस्र आशाः प्र चरन्त्वग्नय इमन्नों यज्ञन्नयतु प्रजानन्न । घृतं पिन्वन्नजरँ सुवीरं ब्रह्म समिद्भवत्याहुतीनाम् । सुवर्गाय वा एष लोकायोप धीयते यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नय इत्याह ॥ ३४ ॥ दिश एवैतेन प्र जानातीमन्नों यज्ञन्नयतु प्रजाननित्याह सुवर्गस्य लोकस्याऽभिनीत्यै ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै देवास्सुवर्गल्लोकमायन् यद्ब्रह्मण्वत्योपदधाति ब्रह्मणैव तद्यजमानस्सुवर्गल्लोकमेति प्रजापतिर्वा एष यदग्निस्तस्य प्रजाः पशवश्छन्दाँसि रूपँ सर्वान् वर्णानिष्टकानाङ्कुर्याद्रूपेणैव प्रजां पशूञ्छन्दाँस्यव रुन्धेऽथों प्रजाभ्य एवैनं पशुभ्यश्छन्दोभ्योऽवरुद्ध्य चिनुते ॥ ३५ ॥ यान्यग्नय इत्याहेष्टकानाँ षोडश च ॥ ८ ॥

मयि गृह्णाम्यग्रे अग्निँ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो दधाम्यरिष्टास्स्याम तनुवा सुवीराः । यो नों अग्निः पितरो हृथ्स्वन्तरमर्त्यो मर्त्याँ आविवेश । तमात्मन्परि गृह्णीमहे वयं मा सो अस्माँ अवहाय परा गात् । यदद्ध्वर्युरात्मन्नग्निमगृहीत्वाऽग्निश्चिनुयाद्योऽस्य स्वोऽग्निस्तमपि ॥ ३६ ॥ यजमानाय चिनुयादग्निङ्खलु वै पशवोऽनूप तिष्ठन्तेऽपक्रामुका अस्मात्पशवस्स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहाऽऽत्मन्नेव स्वमग्निन्दाधार नाऽस्मात्पशवोऽप क्रामन्ति ब्रह्मवादिनो वदन्ति यन्मृचाऽऽपश्चाऽग्नेरनाद्यमथ कस्मान्मृदा चाऽद्भिश्चाऽग्निश्चीयत इति यदद्भिस्सँयौ- ॥ ३७ ॥ त्यापो वै सर्वा देवता देवताभिरेवैनँ सँ सृजति यन्मृदा चिनोतीयँवा अग्निर्वैश्वानरोऽग्निनैव तदग्निश्चिनोति ब्रह्मवादिनो वदन्ति यन्मृदा चाऽद्भिश्चाऽग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाँसि तस्मादग्निरुच्यतेऽथो इयँवा अग्निर्वैश्वानरो य-॥ ३८ ॥ न्मृदा चिनोति तस्मादग्निरुच्यते हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यञ्ज्योतिरेवाऽस्मिन्दधात्यथो तेजो वै हिरण्यन्तेज एवाऽऽत्मन्धत्ते यो वा अग्निँ सर्वतोमुखश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयति गायत्रीं पुरस्तादुप दधाति त्रिष्टुभन्दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मद्ध्य एष वा अग्निस्सर्वतोमुखस्तँय्य एवँविद्वाँश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक्प्रोता ॥ ३९ ॥ अपि सँयौति वैश्वानरो यदेष वै पञ्चविँशतिश्च ॥ ९ ॥

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः प्राङ्प्राऽद्रवत्तस्मा अश्वं प्रत्यास्यत्स दक्षिणाऽऽवर्तत तस्मै वृष्णिं प्रत्यास्यत्स प्रत्यङ्ङाऽवर्तत तस्मा ऋषभं प्रत्यास्यत्स उदङ्ङाऽवर्तत तस्मै बस्तं प्रत्यास्यत्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवैन- ॥ ४० ॥ मवरुद्ध्य चिनुत एता वै प्राणभृतश्चक्षुष्मतीरिष्टका यत्पशुशीर्षाणि यत्पशुशीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मिँल्लोके प्राणित्यथो ताभिरेवाऽस्मा इमे लोकाः प्र भान्ति मृदाऽभिलिप्योप दधाति मेध्यत्वाय पशुर्वा एष यदग्निरन्नं पशव एष खलु वा अग्निर्यत्पशुशीर्षाणि यङ्कामयेत कनी- योऽस्यान्नꣳ ॥ ४१ ॥ स्यादिति सन्तरान्तस्य पशुशीर्षाण्युप दध्यात्कनीय एवाऽस्याऽन्नं भवति यङ्कामयेत समावदस्याऽन्नꣳ स्यादिति मध्यतस्तस्योप दध्यात्समावदेवाऽस्याऽन्नं भवति यङ्काम- येत भूयोऽस्याऽन्नꣳ स्यादित्यन्तेषु तस्य व्युदूह्योप दध्यादन्तत एवाऽस्मा अन्नमव रुन्धे भूयोऽस्याऽन्नं भवति ॥ ४२ ॥ एनमस्याऽन्नं भूयोऽस्याऽन्नं भवति ॥ १० ॥

स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरादकाङ्खादेनोर्जꣳ सꣳसूदेनाऽरण्यञ्जाम्बीलेन मृदं बस्वै- भिश्शर्कराभिरवकामवकाभिश्शर्करामुत्सादेन जिह्वामवक्रन्देन तालुꣳ सरस्वतीञ्जिह्वाग्रेण ॥ ४३ ॥ स्तेगान्द्वाविꣳशतिः ॥ ११ ॥

वाजꣳ हनूभ्यामप आस्येनाऽऽदित्याञ्छ्मश्रुभिरुपयाममधरेणोष्ठेन सदुत्तरेणाऽन्तरे- णाऽनूकाशं प्रकाशेन बाह्यꣳ स्तनयित्नुन्निर्बाधेन सूर्याग्नी चक्षुर्भ्यांवैद्युतौ कनीनकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥ ४४ ॥ वाजं पञ्चविꣳशतिः ॥ १२ ॥

कूर्माञ्छफैरच्छलाभिः कपिञ्जलान्त्साम कुष्ठिकाभिर्जवञ्जङ्घाभिरगदञ्जानुभ्यांवीर्यङ्कुहाभ्यां भयं प्रचालाभ्याङ्गुहोपपक्षाभ्यामश्विनावꣳसाभ्यामदितिꣳ शीर्ष्णा निरृतिन्निर्जाल्मकेन शीर्ष्णा ॥ ४५ ॥ कूर्मान्त्रयोविꣳशतिः ॥ १३ ॥

योक्त्रङ्गृध्राभिर्युगमानतेन चित्तं मन्याभिस्सङ्क्रोशान्प्राणैः प्रकाशेन त्वचं पराकाशेनाऽन्तरां मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः ॥ ४६ ॥ योक्त्रमेक- विꣳशतिः ॥ १४ ॥

मित्रावरुणौ श्रोणीभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीव- द्भ्याꣳ सवितारं पुच्छेन गन्धर्वाञ्छेपेनाऽप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामा- क्रमणꣳ स्थूराभ्यां प्रतिक्रमणङ्कुष्ठाभ्याम् ॥ ४७ ॥ ॥ १५ ॥

इन्द्रस्य क्रोडोऽदित्यै पाजस्यन्दिशाञ्जत्रवो जीमूतान्हृदयौपशाभ्यामन्तरिक्षं पुरितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान्क्लोम्ना गिरीन्प्लाशिभिस्समुद्रमुदरेण वैश्वानरं भस्मना ॥ ४८ ॥ मित्रावरुणाविन्द्रस्य द्वाविꣳशतिर्द्वाविꣳशतिः ॥ १६ ॥

पूष्णो वनिष्ठुरन्धाहेस्स्थूरगुदा सर्पान्गुदाभिरृतून्पृष्टीभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा रुद्राणान्द्वितीयाऽऽदित्यानान्तृतीयाऽङ्गिरसाञ्चतुर्थी साद्ध्यानां पञ्चमी विश्वेषान्देवानाꣳ षष्ठी ॥ ४९ ॥ पूष्णश्चतुर्विꣳशतिः ॥ १७ ॥

ओजो ग्रीवाभिर्निरृतिमस्थभिरिन्द्रꣳ स्वपसा वहेन रुद्रस्य विचलस्स्कन्धोऽहोरात्र-योर्द्वितीयोऽर्द्धमासानान्तृतीयो मासाञ्चतुर्थ ऋतूनां पञ्चमस्संवँथ्सरस्य षष्ठः ॥ ५० ॥ ओजो विꣳशतिः ॥ १८ ॥

आनन्दन्नन्दथुना कामं प्रत्यासाभ्यां भयꣳ शितीमभ्यां प्रशिषं प्रशासाभ्याꣳ सूर्याचन्द्रमसौ वृक्याभ्याꣳ श्यामशबलौ मतस्नाभ्याँव्व्युष्टिꣳ रूपेण निम्रुक्तिमरूपेण ॥ ५१ ॥ आनन्दꣳ षोडश ॥१९॥

अहर्माꣳसेन रात्रिं पीवसाऽपो यूषेण घृतꣳ रसेन श्यांव्वसया दूषीकाभिर्ह्रादुनिमश्रुभिः पृष्वान्दिवꣳ रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीञ्चर्मणा छवीञ्छव्योपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा ॥ ५२ ॥ अहरष्टाविꣳशतिः ॥ २० ॥

अग्नेः पक्षतिस्सरस्वत्यै निपक्षतिस्सोमस्य तृतीयाऽपाञ्चतुर्थ्योषधीनां पञ्चमी संव्वथ्स-रस्य षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषान्दे-वानान्द्वादशी द्यावापृथिव्योः पार्श्वय्यँमस्य पादूरः ॥ ५३ ॥ अग्नेरेकान्न त्रिꣳशत् ॥ २१ ॥

वायोः पक्षतिसरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणाञ्चतुर्थी सवितुः पञ्चमी रुद्रस्य षष्ठी सर्पाणाꣳ सप्तम्यर्यम्णोऽष्टमी त्वष्टुर्नवमी धातुर्दशमीन्द्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वँय्यम्यै पादूरः ॥ ५४ ॥ वायोरष्टाविꣳशतिः ॥ २२ ॥

पन्थामनूवृग्भ्याꣳ सन्ततिꣳ स्नावन्याभ्याꣳ शुकान्पित्तेन हरिमाणँय्यक्ना हलीक्ष्णान्पाप-वातेन कूश्माञ्छकभिश्शवर्तानूवद्ध्येन शुनो विशसनेन सर्पाल्लोँहितगन्धेन वयाꣳसि पक्वगन्धेन पिपीलिकाः प्रशादेन ॥ ५५ ॥ पन्थान्द्वाविꣳशतिः ॥ २३ ॥

क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैस्संव्विदानः । स नो नय सुकृतस्य लोकन्तस्य ते वयꣳ स्वधया मदेम ॥ ५६ ॥ क्रमैरष्टादश ॥ २४ ॥

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिस्सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमा-श्श्रोत्रं मासाश्चाऽर्द्धमासाश्च पर्वाण्यृतवोऽङ्गानि संव्वथ्सरो महिमा ॥ ५७ ॥ द्यौः पञ्चविꣳशतिः ॥ २५ ॥

अग्निः पशुरासीत्तेनाऽयजन्त स एतल्लोँकमजयद्यस्मिन्नग्निस्स ते लोकस्तञ्जेष्यस्यथाऽव जिघ्र वायुः पशुरासीत्तेनाऽयजन्त स एतल्लोँकमजयद्यस्मिन्वायुस्स ते लोकस्तस्मात्त्वाऽन्तरेष्यामि

यदि नाऽवजिघ्रस्यादित्यः पशुरासीत्तेनाऽयजन्त स एतल्लोकमजयद्यस्मिन्नादित्यस्स तें लोकस्तञ्जे-ष्यसि यद्यवजिघ्रसि ॥ ५८ ॥ यस्मिन्नष्टौ च ॥ २६ ॥

यो वा अयथादेवतन्त्वामग्न इन्द्रस्य चित्तिर्य्यथा वै वयो वै यदाकूतादास्तें अग्ने मयि गृह्णामि प्रजापतिस्सों-ऽस्मात्स्तेगान् वाजंङ्कूर्मान् योक्त्रं मित्रावरुणाविन्द्रस्य पूष्ण ओज आनन्दमहरग्नेर्वायोः पन्थाङ्क्मैर्यौस्तेऽग्निः पशुरा-सीत्षड्विंशतिः ॥ २६ ॥ यो वा एवाऽऽहुतिमभवन्पृथिभिरवरुद्धयाऽऽनन्दमष्टौ पञ्चाशत् ॥ ५८ ॥ यो वा अयथादेवतय्यद्यवजिघ्रसि ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां पञ्चमकाण्डे सप्तमः प्रश्नस्समाप्तः ॥

## ॥ इति पञ्चमं काण्डम् ॥



## ॥ पञ्चमकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ५९ | ३०८१ |
| २ | १२ | ६४ | ३१९५ |
| ३ | १२ | ४८ | २४७७ |
| ४ | १२ | ५८ | २९०६ |
| ५ | २४ | ६२ | २७२७ |
| ६ | २३ | ५४ | २४३६ |
| ७ | २६ | ५८ | २५८२ |

॥ संहतसङ्ख्या ॥

| | | | |
|---|---|---|---|
| ७ | १२० | ४०३ | १९४०४ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ षष्ठं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

प्राचीनवꣳशङ्करोति देवमनुष्या दिशो व्यभजन्त प्राचीन्देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत्प्राचीनवꣳशङ्करोति देवलोकमेव तद्यजमान उपावर्तते परि श्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकान्नाऽस्माल्लोकात्स्वेतव्यमिवेत्याहुः को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान्करो-॥ १ ॥ त्युभयोर्लोकयोरभिजित्यै केशश्मश्रु वपते नखानि नि कृन्तते मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैत्यङ्गिरसस्सुवर्गँल्लोकँय्यन्तोऽप्सु दीक्षातपसी प्राऽवेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे तीर्थे स्नाति तीर्थे हि ते ताम्प्राऽवेशयन्तीर्थे स्नाति ॥ २ ॥ तीर्थमेव समानानां भवत्यपोऽश्नात्यन्तरत एव मेध्यो भवति वाससा दीक्षयति सौम्यँवै क्षौमन्देवतया सोममेष देवतामुपैति यो दीक्षते सोमस्य तनूरसि तनुवम्मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामा शास्तेऽग्नेस्तूषाधानँव्वायोर्वातपानं पितृणान्नीविरोषधीनां प्रघात ॥ ३ ॥ आदित्यानां प्राचीनतानो विश्वेषान्देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत्सर्वदेवत्यँय्यद्वासो यद्वाससा दीक्षयति सर्वाभिरेवैनन्देवताभिर्दीक्षयति बहिःप्राणो वै मनुष्यस्तस्याऽशनं प्राणोऽश्नाति सप्राण एव दीक्षत आशितो भवति यावानेवाऽस्य प्राणस्तेन सह मेधमुपैति घृतन्देवानां मस्तु पितृणान्निष्पक्वं मनुष्याणान्तद्वा ॥ ४ ॥ एतत्सर्वदेवत्यँय्यन्नवनीतँय्यन्नवनीतेनाऽभ्यङ्क्ते सर्वा एव देवताः प्रीणाति प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकँय्यो दीक्षितोऽन्तरेव नवनीतन्तस्मान्नवनीतेनाऽभ्यङ्क्तेऽनुलोमँय्यजुषा व्यावृत्त्या इन्द्रो वृत्रमहन्तस्य कनीनिका पराऽपतत्तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते दक्षिणं पूर्वमाऽङ्क्ते ॥ ५ ॥ सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे परिमितमाऽङ्क्तेऽपरिमितꣳ हि मनुष्या आञ्जते सतूलयाऽऽङ्क्तेऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै यदपतूलयाऽऽञ्जीत वज्र इव स्यात्सतूलयाऽऽङ्क्ते मित्रत्वाये-॥ ६ ॥ न्द्रो वृत्रमहन्त्सोऽ(१)पोऽ(१)भ्यम्रियत तासाँय्यन्मेध्यँय्यज्ञियꣳ सदेवमासीत्तदपोदक्रामत्ते दर्भा अभवन् यद्दर्भपुञ्जीलैः पवयति या

एव मेद्ध्या यज्ञियास्सदेवा आपस्ताभिरेवैनं पवयति द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनंल्लोकैः पवयति पञ्चभिः ॥ ७ ॥ पवयति पञ्चाक्खरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणास्सप्राणमेवैनं पवयत्येक-विꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं ॥ ८ ॥ पवयति चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुना-त्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति तस्य ते पवि-त्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्याहाऽऽशिषमेवैतामा शास्ते ॥ ९ ॥ अतीकाशान्करोत्यवे-शयन्तीर्थे स्नाति प्रघातो मनुष्याणान्तद्धा आऽङ्क्ते मित्रत्वाय पञ्चभिरपरिवर्गमष्टाचत्वारिꣳशच्च ॥ १ ॥

यावन्तो वै देवा यज्ञायाऽपुनत त एवाऽभवन् य एवव्ँविद्वान् यज्ञाय पुनीते भवत्येव बहिः पवयित्वाऽन्तः प्र पादयति मनुष्यलोक एवैनं पवयित्वा पूतन्देवलोकं प्र णयत्यदीक्खित एकया-ऽऽहुत्येत्याहुस्स्रुवेण चतस्रो जुहोति दीक्खितत्वाय स्रुचा पञ्चमीं पञ्चाक्खरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञ-मेवाऽव रुन्ध आकूत्यै प्रयुजेऽग्नये ॥ १० ॥ स्वाहेत्याहाऽऽकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेति मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति सरस्वत्यै पूष्णेऽग्नये स्वा-हेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्र युङ्क्त आपो देवीर्बृहतीर्विश्वशंभुव इत्याह या वै वर्ष्यास्ता ॥ ११ ॥ आपो देवीर्बृहतीर्विश्वशंभुवो यदेतद्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता इम-ल्ँल्लोकमा गच्छेयुरापो देवीर्बृहतीर्विश्वशंभुव इत्याहाऽस्मा एवैना लोकाय शमयति तस्माच्छान्ता इमल्ँल्लोकमा गच्छन्ति द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्तरिक्खमित्याहाऽन्तरिक्खे हि यज्ञो बृहस्पतिर्नो हविषा वृधा-॥ १२ ॥ त्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवाऽस्मै यज्ञमव रुन्धे यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परि वृणक्ति प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः पराङैत्स प्र यजुरव्लीनात्प्र साम तमृगुदयच्छद्यदृगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वमृचा ॥ १३ ॥ जुहोति यज्ञस्योद्यत्या अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनुष्टुभा जुहोति यज्ञस्योद्यत्यै द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद्द्वादशभिर्वात्सबन्धविदो दीक्खयन्ति सा वा एषर्गनु-ष्टुग्वागनुष्टुग्यदेतयर्चा दीक्खयति वाचैवैनꣳ सर्वया दीक्खयति विश्वे देवस्य नेतुरित्याह सावित्र्येतेन मर्तो वृणीत सख्य- ॥ १४ ॥ मित्याह पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्येतेन द्युम्न-व्ँवृणीत पुष्यस इत्याह पौष्ण्येतेन सा वा एषर्क्सर्वदेवत्या यदेतयर्चा दीक्खयति सर्वाभिरेवैनन्देवता-भिर्दीक्खयति सप्ताक्खरं प्रथमं पदमष्टाक्खराणि त्रीणि यानि त्रीणि तान्यष्टावुप यन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्खरा तेन ॥ १५ ॥ गायत्री यदेकादशाक्खरा तेन त्रिष्टुग्यद्द्वादशाक्खरा तेन जगती सा वा एषर्क्सर्वाणि छन्दाꣳसि यदेतयर्चा दीक्खयति सर्वेभिरेवैनञ्छन्दोभिर्दीक्खयति सप्ताक्खरं

प्रथमं पदꣳ सप्तपदा शक्वरी पशवश्शक्वरी पशूनेवाऽव रुन्ध एकस्मादख्षरादनाप्तं प्रथमं पदन्तस्माद्य-
द्वाचोऽनाप्तन्तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया
जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै ॥ १६ ॥ अग्नये ता वृधात्वृचा सख्यन्तेन
जुहोति पञ्चदश च ॥ २ ॥

ऋक्सामे वै देवेभ्यो यज्ञायाऽतिष्ठमाने कृष्णो रूपङ्कृत्वाऽपक्रम्याऽतिष्ठतान्तेऽमन्यन्त यँव्वा
इमे उपावर्थ्स्यतस्स इदं भविष्यतीति ते उपाऽमन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपा-
वर्तेतामेष वा ऋचो वर्णो यच्छुक्लङ्कृष्णाजिनस्यैष साम्नो यत्कृष्णमृक्सामयोश्शिल्पे स्थ इत्याह-
र्क्सामे एवाऽव रुन्ध एष ॥ १७ ॥ वा अह्नो वर्णो यच्छुक्लङ्कृष्णाजिनस्यैष रात्रिया यत्कृष्णँय्यदेवैन-
योस्तत्र न्यक्तन्तदेवाऽव रुन्धे कृष्णाजिनेन दीख्षयति ब्रह्मणो वा एतद्रूपँय्यत्कृष्णाजिनं ब्रह्मणैवै-
नन्दीख्षयतीमान्धियꣳ शिख्षमाणस्य देवेत्याह यथायजुरेवैतद्गर्भो वा एष यद्दीख्षित उल्बँव्वासः
प्रोर्णुते तस्माद्- ॥ १८ ॥ गर्भाः प्रावृता जायन्ते न पुरा सोमस्य क्रयादपोर्ण्वीत यत्पुरा सोमस्य क्र-
यादपोर्ण्वीत गर्भाः प्रजानां परापातुकास्स्युः क्रीते सोमेऽपोर्णुते जायत एव तदथो यथा वसीयाꣳसं
प्रत्यपोर्णुते तादृगेव तदङ्गिरसस्सुवर्गँल्लोकँय्यन्त ऊर्जँव्व्यभजन्त ततो यदत्यशिष्यत ते शरा अभव-
न्नूर्ग्वै शरा यच्छरमयी ॥ १९ ॥ मेखला भवत्यूर्जमेवाऽव रुन्धे मद्ध्यतस्सन्नह्यति मद्ध्यत एवा-
ऽस्मा ऊर्जन्दधाति तस्मान्मद्ध्यत ऊर्जा भुञ्जत ऊर्द्ध्वँव्वै पुरुषस्य नाभ्यै मेद्ध्यमवाचीनममे-
द्ध्यँय्यन्मद्ध्यतस्सन्नह्यति मेद्ध्यञ्चैवाऽस्याऽमेद्ध्यञ्च व्यावर्तयतीन्द्रो वृत्राय वज्रम्प्राऽहरथ्स त्रेधा
व्यभवथ्स्फ्यस्तृतीयꣳ रथस्तृतीयँय्यूपस्तृतीयं- ॥ २० ॥ येऽन्तश्शरा अशीर्यन्त ते शरा अभवन्त-
च्छराणाꣳ शरत्वँव्वज्रो वै शराः ख्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति वज्रेणैव
साख्षात्ख्षुधं भ्रातृव्यं मद्ध्यतोऽप हते त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मद्ध्यतो यजमाने
दधाति पृथ्वी भवति रज्जूनाँव्व्यावृत्त्यै मेखलया यजमानन्दीख्षयति योक्त्रेण पत्नीम्मिथुनत्वाय
॥ २१ ॥ यज्ञो दख्षिणामभ्यद्ध्यायत्ताꣳ समभवत्तदिन्द्रोऽचायथ्सोऽमन्यत यो वा इतो जनिष्यते स
इदं भविष्यतीति तां प्राऽविशत्तस्या इन्द्र एवाऽजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं
भविष्यतीति तस्या अनुमृश्य योनिमाऽच्छिनथ्सा सूतवशाऽभवत्तथ्सूतवशायै जन्म ॥ २२ ॥ ताꣳ
हस्ते न्यवेष्टयत तां मृगेषु न्यदधाथ्सा कृष्णविषाणाऽभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति
कृष्णविषाणां प्र यच्छति सयोनिमेव यज्ञङ्करोति सयोनिन्दख्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय
कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधयः पच्यन्ते सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह
तस्मादोषधयः फलङ्गृह्णन्ति यद्धस्तेन ॥ २३ ॥ कण्डूयेत पामनम्भावुकाः प्रजास्स्युर्यथ्स्मयेत
नग्नम्भावुकाः कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानाङ्गोपीथाय न पुरा दख्षिणाभ्यो नेतोः

कृष्णविषाणामवं चृतेद्यत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद्योनिः प्रजानां परापातुका स्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्राऽस्यति योनिर्वै यज्ञस्य चात्वालँ्योनिः कृष्णविषाणा योनांवेव योनिन्दधाति यज्ञस्यं सयोनित्वायं ॥ १४ ॥ रुन्ध एष तस्मांच्छरमयी यूपस्तृतीयं मिथुनत्वाय जन्म हस्तेनाऽष्टाचत्वारिंशच्च ॥ ३ ॥

वाग्वै देवेभ्योऽपाँऽक्रामद्यज्ञायाऽतिष्ठमाना सा वनस्पतीन्प्राऽविशथ्सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणंवे या वीणायाँय्यद्दीक्षितदण्डं प्रयच्छति वाचमेवाऽवं रुन्ध औदुंबरो भवत्यूर्वा उदुंबर ऊर्जमेवाऽवं रुन्धे मुखेन संमितो भवति मुखत एवाऽस्मा ऊर्जन्दधाति तस्मान्मुखत ऊर्जा भुंञ्जते ॥ २५ ॥ क्रीते सोमे मैत्रावरुणायं दण्डं प्र यंच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचंवँ्विभजति तामृत्विजो यजमाने प्रति ष्ठापयन्ति स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञस्स्वाहोरोरन्तरिक्षादित्याहाऽन्तरिक्षे हि यज्ञस्स्वाहा यज्ञँ्वातादा रभ इत्याहाऽय- ॥ २६ ॥ वँ्वाव यः पवते स यज्ञस्तमेव साक्षादा रंभते मुष्टी करोति वाचंय्यच्छति यज्ञस्य धृत्या अदीक्षिष्टाऽयं ब्राह्मण इति त्रिरुपाꣳश्वाह देवेभ्य एवैनं प्राऽऽह त्रिरुच्चैरुभयेभ्य एवैनन्देवमनुष्येभ्यः प्राऽऽह न पुरा नक्षत्रेभ्यो वाचवँ्वि सृजेद्यत्पुरा नक्षत्रेभ्यो वाचवँ्विसृजेद्यज्ञवँ्वि च्छिन्द्या-॥ २७ ॥ दुदितेषु नक्षत्रेषु व्रतङ्कृणुतेति वाचवँ्वि सृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाऽभि वाचवँ्वि सृजति यदि विसृजेद्वैष्णवीमृचमनु ब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति दैवीन्धियं मनामह इत्याह यज्ञमेव तन्म्रदयति सुपारा नो असद्वश इत्याह व्युष्टिमेवाऽवं रुन्धे ॥ २८ ॥ ब्रह्मवादिनो वदन्ति होतव्यन्दीक्षितस्य गृहा(३)इ न होतव्या(३)मिति हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्याऽवदायं जुहुयाद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनोयुज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्तेष्वेव परोक्षञ्जुहोति तन्नेवं हुतन्नेवाऽहुतꣳ स्वपन्तँ्वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः ॥ २९ ॥ खलु वै रक्षोहाऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्याहाऽग्निमेवाऽधिपाङ्कृत्वा स्वपिति रक्षसामपहत्या अव्रत्यमिव वा एष करोति यो दीक्षितस्स्वपिति त्वमग्ने व्रतपा असीत्याहाऽग्निर्वै देवानाँव्रतपतिस्स एवैनँव्रतमा लम्भयति देव आ मर्त्येष्वेत्याह देवो ॥ ३० ॥ ह्येष सन्मर्त्येषु त्वँय्यज्ञेष्वीड्य इत्याहैतꣳ हि यज्ञेष्वीडतेऽप वै दीक्षिताथ्सुषुपुष इन्द्रियन्देवताः क्रामन्ति विश्वे देवा अभि मामाऽववृत्रन्नित्याहेन्द्रियेणैवैनन्देवताभिस्सन्नयति यदेतद्यजुर्न ब्रूयाद्यावंत एव पशूनभि दीक्षेत तावन्तोऽस्य पशवस्स्यू रास्वेयं-॥ ३१ ॥ थ्सोमाऽऽ भूयो भरेत्याहाऽपरिमितानेव पशूनवं रुन्धे चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रति गृह्णाति वायवे त्वा वरुणाय त्वेति यदेवमेता नाऽनुदिशेदयथादेवतन्दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति न देवताभ्य आ ॥ ३२ ॥ वृश्च्यते देवीरापो अपान्नपादित्याह यद्वो

मेद्धचर्य्यंज्ञियं सदेवन्तद्वो माऽवं क्रमिषमिति वावैतदाहाऽच्छिंन्नन्तन्तुं पृथिव्या अनुं गेषमित्याह सेतुंमेव कृत्वाऽत्येति ॥ ३३ ॥ भुञ्जतेऽयञ्छिन्द्याद्रुन्धेऽग्निराह देवं इयंद्देवताभ्य आ त्रयंस्त्रिंशच्च ॥ ४ ॥

देवा वै देवयजंनमद्धचवसाय दिशो न प्राजानन्तेऽ(१)न्योऽन्यमुपाऽधावन्त्वया प्र जानाम त्वयेति तेऽदित्याः समंद्ध्रियन्त त्वया प्र जानामेति साऽब्रवीद्वरंवृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्या ॥ ३४ ॥ अथो पञ्चाक्खरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे पत्थ्याः स्वस्तिमंयजन्प्राचीमेव तया दिशम्प्राऽजानन्नग्निना दक्खिणा सोमेन प्रतीचीः सवित्रोदीचीमदित्योर्द्ध्वां पत्थ्याः स्वस्तिय्यंजति प्राचीमेव तया दिशं प्र जानाति पत्थ्याः स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्खुंषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवाऽनु पश्य-॥ ३५ ॥ त्यग्नीषोमाविष्ट्वा संवितारय्यंजति सवितृप्रसूत एवाऽनु पश्यति सवितारमिष्ट्वाऽदितिय्यंजतीयव्वा अदितिरस्यामेव प्रतिष्ठायाऽनु पश्यत्यदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानावृंविशो देवविशङ्खलु वै कल्पमानम्मनुष्यविशमनु कल्पते यन्मारुतीमृचमन्वाह विशाङ्कृप्त्यै ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयङ्कार्यमनूयाजव- ॥ ३६ ॥ दप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजास्सैव सा यज्ञस्य सन्ततिस्तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात्प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः परा भवति यज्ञं पराभवन्तय्यंजमानोऽनु ॥ ३७ ॥ परा भवति प्रयाजवदेवाऽनूयाजवत्प्रायणीयङ्कार्यं प्रयाजवदनूयाजवदुदयनीयन्नाऽऽत्मानमन्तरेति न प्रजान्न यज्ञः पराभवति न यजमानः प्रायणीयस्य निष्कास उदयनीयमभि निर्वपति सैव सा यज्ञस्य सन्ततिर्याः प्रायणीयस्य याज्या यत्ता उदयनीयस्य याज्याः कुर्यात्पराङ्मुल्लोकमा रोहेत्प्रमायुकस्स्याद्याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रति तिष्ठति ॥ ३८ ॥ प्रज्ञात्यै पश्यत्यनूयाजवद्यजमानोऽनु पुरोनुवाक्यास्ता अष्टौ च ॥ ५ ॥

कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्द्धेताः सा कद्रूस्सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानन्निष्क्रीणीष्वेतीयव्वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयास्साऽब्रवीदस्मै वै पितरौ पुत्रान्बिभृतस्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानन्निष्क्रीणीष्वे- ॥ ३९ ॥ ति मा कद्रूरवोचदिति जगत्युदपतच्चतुर्दशाक्खरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्खरे अमीयेताः सा पशुभिश्च दीक्खया चाऽऽगच्छत्तस्माज्जगती छन्दसां पशव्यतमा तस्मात्पशुमन्तन्दीक्खोप नमति त्रिष्टुगुदपतत्त्रयोदशाक्खरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्खरे अमीयेताः सा दक्खिणाभिश्च ॥ ४० ॥ तपसा चाऽऽगच्छत्तस्मात्त्रिष्टुभो लोके माद्ध्यन्दिने सवने दक्खिणा नीयन्त एतत्खलु वाव तप इत्याहुर्यस्स्वन्ददातीति गायत्र्युदपतच्चतुरक्खरा सत्यजया ज्योतिषा

तमस्या अजाऽभ्यरुन्ध तदजाया अजत्वꣳ सा सोमश्चाऽऽहरच्चत्वारि चाऽख्खराणि साऽष्टाख्खरा समपद्यत ब्रह्मवादिनो वदन्ति ॥ ४१ ॥ कस्माथ्सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति यदेवाऽदस्सोममाऽहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मात्तेजस्विनीतमा पद्भ्यान्द्वे सवने समगृ-ह्णान्मुखेनैकय्यँन्मुखेन समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातस्सवनश्च माध्यन्दिनश्च तस्मा-त्तृतीयसवन ऋजीषमभि षुण्वन्ति धीतमिव हि मन्यन्त ॥ ४२ ॥ आशिरमव नयति सशुक्र-त्वायाऽथो सं भरत्येवैनत्तꣳ सोमंमाह्रियमाणङ्गन्धर्वो विश्वावसुः पर्यमुष्णाथ्स तिस्रो रात्रीः परिमु-षितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतस्सोमो वसति ते देवा अब्रुवन्थ्स्त्रीकामा वै गन्धर्वास्स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीङ्कृत्वा तया निरक्रीणन्थ्सा रोहिद्रूपङ्कृत्वा गन्धर्वेभ्यो- ॥ ४३ ॥ ऽपक्रम्याऽतिष्ठत्तद्रोहितो जन्म ते देवा अब्रुवन्नप युष्मदक्रमीन्नाऽस्मानुपावर्तते वि ह्वया-महा इति ब्रह्म गन्धर्वा अवदन्नगायन्देवास्सा देवान्गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते कामुका एनꣳ स्त्रियो भवन्ति य एवव्ँवेदाऽथो य एवव्ँविद्वानपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतया ॥ ४४ ॥ भवन्त्येकहायन्या क्रीणाति वाचैवैनꣳ सर्वया क्रीणाति तस्मादेकहायना मनु-ष्या वाचव्ँवदन्त्यकूटयाऽकर्णयाऽकाणयाऽश्लोणयाऽसप्तशफया क्रीणाति सर्वयैवैनङ्क्रीणाति यच्छ्वे-तया क्रीणीयाद्दुश्चर्मा यजमानस्स्याद्यत्कृष्णयाऽनुस्तरणी स्यात्प्रमायुको यजमानस्स्याद्यद्द्विरूपया वार्त्रघ्नी स्याथ्स वाऽन्यञ्जिनीयात्तव्ँवाऽन्यो जिनीयादरुणया पिङ्गाख्ख्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवैनन्देवतया क्रीणाति ॥ ४५ ॥ निष्क्रीणीष्व दख्खिणाभिश्च वदन्ति मन्यन्ते गन्धर्वेभ्यो बहुतयाः पिङ्गाख्ख्या दश च ॥ ६ ॥

तद्धिरण्यमभवत्तस्मादद्भ्यो हिरण्यं पुनन्ति ब्रह्मवादिनो वदन्ति कस्माथ्सत्यादनस्थिकेन प्रजाः प्रवीयन्तेऽस्थन्वतीर्जायन्त इति यद्धिरण्यङ्घृतेऽवधाय जुहोति तस्मादनस्थिकेन प्रजाः प्र वीयन्तेऽस्थन्वतीर्जायन्त एतद्वा अग्नेः प्रियन्धाम यद्घृतन्तेजो हिरण्यमियन्ते शुक्र तनूरिदव्ँवर्च इत्याह सतेजसमेवैनꣳ सतनु- ॥ ४६ ॥ ङ्करोत्यथो सं भरत्येवैनय्यँदबद्धमवदध्याद्गर्भाः प्रजानां परापातुकास्स्युर्बद्धमव दधाति गर्भाणान्धृत्यै निष्टर्क्यं बध्नाति प्रजानां प्रजननाय वाग्वा एषा यथ्सोमक्रयणी जूरसीत्याह यद्धि मनसा जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाग्धृता जुष्टा विष्णव इत्याह ॥ ४७ ॥ यज्ञो वै विष्णुर्यज्ञायैवैनाञ्जुष्टाङ्करोति तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसूतामेव वाचमव रुन्धे काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रख्खाꣳसि जिघाꣳसन्त्येष खलु वा अरख्खोहतः पन्था योऽग्नेश्च सूर्यस्य च सूर्यस्य चख्खुराऽरुहमग्नेरख्ख्णः कनीनिकामित्याह य एवाऽरख्खोहतः पन्थास्तꣳ समारोहति ॥ ४८ ॥ वाग्वा एषा यथ्सोमक्रयणी चिदसि मनाऽसीत्याह शास्त्येवैनामेतत्तस्माच्छिष्टाः प्रजा जायन्ते चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनाऽसीत्याह यद्धि मनसाऽभिगच्छति तत्करोति धीरसीत्याह यद्धि मनसा

द्ध्चारयति तद्वाचा ॥ ४९ ॥ वदति दक्षिणाऽसीत्याह दक्षिणा ह्येषा यज्ञियाऽसीत्याह यज्ञियामेवै-नाङ्करोति क्षत्रियाऽसीत्याह क्षत्रिया ह्येषाऽदितिरस्युभयतश्शीर्ष्णीत्याह यदेवाऽऽदित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह यदबद्धा स्यादयता स्याद्यत्पदिबद्धाऽनुस्तरणी स्यात्प्रमायुको यजमानस्स्या- ॥ ५० ॥ द्यत्कर्णगृहीता वार्त्रघ्नी स्याथ्स वाऽन्यञ्जिनीयात्तव्वाऽन्यो जिनीयान्मित्रस्त्वा पदि बद्ध्नात्वित्याह मित्रो वै शिवो देवानान्तेनैवैनां पदि बद्ध्नाति पूषाऽद्ध्वनः पात्वित्याहेयव्वै पूषेमामेवाऽस्या अधिपामकस्समष्ट्या इन्द्रायाऽद्ध्यक्षायेत्याहेन्द्रमेवाऽस्या अद्ध्यक्षङ्करो- ॥ ५१ ॥ त्यनु त्वा माता मन्यतामनु पितेत्याहाऽनुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवस्सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात्पराच्येव सोमक्रयणीयाद्रुद्रस्त्वाऽऽ वर्तयत्वित्याह रुद्रो वै क्रूरो ॥ ५२ ॥ देवानान्तमेवाऽस्यै परस्ताद्दधात्यावृत्त्यै क्रूरमिव वा एतत्करोति यद्रुद्रस्य कीर्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष वि क्रीणीते यस्सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन्वाचन्धत्तेऽनुपदासुकाऽस्य वाग्भवति य एवव्वेद ॥ ५३ ॥ सतनुवृंविष्णव इत्याह समारोहति द्ध्चारयति तद्वाचा यजमानस्स्यात्करोति क्रूरो वेद ॥ ७ ॥

षट्पदान्यनु नि क्रामति षडहव्वाङ्नाऽतिं वदत्युत सव्वथ्सरस्याऽयने यावत्येव वाक्तामव रुन्धे सप्तमे पदे जुहोति सप्तपदा शक्करी पशवश्शक्करी पशूनेवाऽव रुन्धे सप्त ग्राम्याः पशवस्सप्ताऽऽ-रण्यास्सप्त छन्दाꣳस्युभयस्याऽवरुद्ध्यै वस्व्यसि रुद्राऽसीत्याह रूपमेवाऽस्या एतन्महिमान- ॥ ५४ ॥ व्व्याचष्टे बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवाऽस्मै पशूनव रुन्धे रुद्रो वसुभिरा चिकेत्वित्याहाऽऽवृत्त्यै पृथिव्यास्त्वा मूर्द्धन्ना जिघर्मि देवयजन इत्याह पृथिव्या ह्येष मूर्द्धा यद्देवयजनमिडायाः पद इत्याहेडायै ह्येतत्पदय्यथ्सोमक्रयण्यै घृतवति स्वाहे- ॥ ५५ ॥ त्याह यदेवाऽस्यै पदाद्धृतमपीड्यत तस्मादेवमाह यदद्ध्वर्युरनग्नावाहुतिञ्जुहुयादन्धोऽद्ध्वर्युस्स्याद्र-क्षाꣳसि यज्ञꣳ हन्युरुहिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नाऽन्धोऽद्ध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या ॥ ५६ ॥ इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनन्द्वेष्टि तयोरेवाऽनन्त-रायङ्ग्रीवाः कृन्तति पशवो वै सोमक्रयण्यै पदय्यावत्मूतꣳ सव्वपति पशूनेवाऽव रुन्धेऽस्मे राय इति सव्वपत्यात्मानमेवाऽद्ध्वर्युः ॥ ५७ ॥ पशुभ्यो नाऽन्तरेति त्वे राय इति यजमानाय प्र यच्छति यजमान एव रयिन्दधाति तोते राय इति पत्निया अर्द्धो वा एष आत्मनो यत्पत्नी यथा गृहेषु निधत्ते तादृगेव तत्त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधात्यस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपवपेदस्मिँल्लोके पशुमान्थ्स्याद्यदा-

हवनीयेऽमुष्मिँल्लोके पशुमान्थ्स्यादुभयोरुप वपत्युभयोरेवैनँल्लोकयोः पशुमन्तङ्करोति ॥ ५८ ॥
महिमानꣳ स्वाहाऽपहत्या अद्ध्वर्युर्द्धीयते चतुर्विꣳशतिश्च ॥ ८ ॥

ब्रह्मवादिनो वदन्ति विचित्यस्सोमा(३) न विचित्या(३) इति सोमो वा ओषधीनाꣳ राजा तस्मिन् यदापन्नङ्ग्रसितमेवाऽस्य तद्यद्विचिनुयाद्यथाऽऽस्याद्ग्रसितन्निष्खिदति तादृगेव तद्यन्न विचिनुयाद्यथाऽख्यन्नापन्नवँविधावति तादृगेव तत्ख्षोधुकोऽद्ध्वर्युस्स्यात्ख्षोधुको यजमानस्सोम-विक्रयिन्थ्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतर- ॥ ५९ ॥ य्यँदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्माँथ्सोमविक्रयी ख्षोधुकोऽरुणो ह स्माऽऽहौपवेशिस्सोमक्रयण एवाऽहन्तृतीयसवनमव रुन्ध इति पशूनाश्चर्मन्मिमीते पशूनेवाऽव रुन्धे पशवो हि तृतीयꣳ सवनय्यँङ्कामयेताऽपशुस्स्यादित्यृख्ष-तस्तस्य मिमीतख्र्षँव्वा अपशव्यमपशुरेव भवति यङ्कामयेत पशुमान्थ्स्या- ॥ ६० ॥ दिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवाऽस्मै पशूनव रुन्धे पशुमानेव भवत्यपामन्तेँ क्रीणाति सरसमेवैनङ्क्रीणात्यमात्योऽसीत्याहाऽमैवैनङ्कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहोऽनसाऽच्छं याति महिमानमेवाऽस्याऽच्छं यात्यनसा- ॥ ६१ ॥ ऽच्छं याति तस्मादनोवाह्यꣳ समे जीवनय्यँत्र खलु वा एतꣳ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यङ्गिरौ जीवनमभि त्यन्देवꣳ सवि-तारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनञ्छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसाय्यँदतिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनꣳ समानानाङ्करोत्येकयैकयोथ्सर्गं ॥ ६२ ॥ मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयस्सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्माँथ्समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्माथ्सर्वा अनु सञ्चरति यथ्सह सर्वाभिर्मिमीत सꣳश्लिष्टा अङ्गुलयो जायेरन्नेकयैकयोथ्सर्गं मिमीते तस्माद्विभक्ता जायन्ते पञ्च कृत्वो यजुषा मिमीते पञ्चाख्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे पञ्च कृत्वस्तूष्णी- ॥ ६३ ॥ न्दश सं पद्यन्ते दशाख्षरा विराडन्नवँविराड्विराजैवाऽन्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाऽव रुन्धे यत्तूष्णीं भविष्यद्यद्वै तावानेव सोमस्स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नाऽपि सदस्यानां प्रजा-भ्यस्त्वेत्युप समूहति सदस्यानेवाऽन्वाभजति वाससोप नह्यति सर्वदेवत्यव्वँै ॥ ६४ ॥ वासस्स-र्वाभिरेवैनन्देवताभिस्समर्द्धयति पशवो वै सोमः प्राणाय त्वेत्युप नह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनु शृन्थति व्यानमेव पशुषु दधाति तस्माँथ्स्वपन्तं प्राणा न जहति ॥ ६५ ॥ इतरं पशुमान्थ्स्याद्यात्यनसोथ्सर्गन्तूष्णीꣳ सर्वदेवत्यव्वँै त्रयस्त्रिꣳशच्च ॥ ९ ॥

यत्कलया ते शफेन ते क्रीणानीति पणेताऽगोअर्घꣳ सोमङ्कुर्यादगोअर्घय्यँजमानमगोअर्घम-द्ध्वर्युङ्गोस्तु महिमानन्नाऽव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमङ्करोति गोअर्घय्यँजमा-नङ्गोअर्घमद्ध्वर्युन्न गोर्महिमानमव तिरत्यजया क्रीणाति सतपसमेवैनङ्क्रीणाति हिरण्येन क्रीणाति सशुक्रमेवै- ॥ ६६ ॥ नङ्क्रीणाति धेन्वा क्रीणाति साशिरमेवैनङ्क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवै-

नङ्क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान् वह्निनैव वह्नि यज्ञस्य क्रीणाति मिथुनाभ्याङ्क्रीणाति मिथुनस्याऽवरुद्ध्यै वाससा क्रीणाति सर्वदेवत्यव्वै वासस्सर्वाभ्य एवैनन्देवताभ्यः क्रीणाति दश सं पद्यन्ते दशाक्षरा विराडन्नव्विराड्विराजैवाऽन्नाद्यमव रुन्धे ॥ ६७ ॥ तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदद्ध्वर्युर्नि ह्नुत आत्मनोऽनाव्रस्काय गच्छति श्रियं प्र पशूनाप्नोति य एवव्वेद शुक्रन्ते शुक्रेण क्रीणामीत्याह यथायजुरेवैतद्देवा वै येन हिरण्येन सोममक्रीणन्तदभीषहा पुनरा-ऽददत को हि तेजसा विक्रेष्यत इति येन हिरण्येन ॥ ६८ ॥ सोमङ्क्रीणीयात्तदभीषहा पुनरा ददीत तेज एवाऽऽत्मन्धत्तेऽस्मे ज्योतिस्सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति यदनुपग्रत्थ्य हन्याद्दन्दशूकास्ताꣳ समाꣳ सर्पास्स्युरिदमहꣳ सर्पाणान्दन्दशू-कानाङ्ग्रीवा उप ग्रथ्नामीत्याहाऽदन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणव्विध्यति स्वान ॥ ६९ ॥ भ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन् यदेतेभ्यस्सोमक्रयणानाऽनुदिशेदक्रीतोऽस्य सोमस्स्यान्नाऽस्यैतेऽमुष्मिँल्लोके सोमꣳ रक्षेयुर्यदेते-भ्यस्सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्याऽमुष्मिँल्लोके सोमꣳ रक्षन्ति ॥ ७० ॥ सशुक्रमेव रुन्ध इति येन हिरण्येन स्वान चतुश्चत्वारिꣳशच्च ॥ १० ॥

वारुणो वै क्रीतस्सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्या इन्द्रस्योरुमा विश दक्षिणमित्याह देवा वै यꣳ सोममक्रीणन्तमिन्द्रस्योरौ दक्षिण आऽसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहोदायुषा स्वायुषेत्याह देवता एवाऽन्वारभ्योत्- ॥ ७१ ॥ तिष्ठत्युर्वन्तरिक्ष-मन्विहीत्याहाऽन्तरिक्षदेवत्यो (१) ह्येतर्हि सोमोऽदित्यास्सदोऽस्यदित्यास्सद आ सीदेत्याह यथायजुरेवैतद्वि वा एनमेतदर्द्धयति यद्वारुणꣳ सन्तं मैत्रङ्करोति वारुण्यर्चाऽऽ सादयति स्वयैवैनन्दे-वतया समर्द्धयति वाससा पर्यानह्यति सर्वदेवत्यव्वै वासस्सर्वाभिरेवै- ॥ ७२ ॥ नन्देवताभिस्समर्-द्धयत्यथो रक्षसामपहत्यै वनेषु व्यन्तरिक्षन्ततानेत्याह वनेषु हि व्यन्तरिक्षन्ततान वाजमर्व-थ्स्वित्याह वाजꣳ ह्यर्वथ्सु पयो अघ्नियास्वित्याह पयो ह्यघ्नियासु हृथ्सु क्रतुमित्याह हृथ्सु हि क्रतुव्वरुणो विक्ष्वग्निमित्याह वरुणो हि विक्ष्वग्निन्दिवि सूर्य- ॥ ७३ ॥ मित्याह दिवि हि सूर्यꣳ सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमन्दधाति यो यजते तस्मादेवमाहोदु त्यञ्जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्या उस्रावेतन्धूर्षाहावित्याह यथायजुरेवैतत्प्र च्यवस्व भुवस्पत इत्याह भूतानाꣳ ह्येष- ॥ ७४ ॥ ष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्ये(१)षोऽभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादस्सोममाह्रिय-माणङ्गन्धर्वो विश्वावसुः पर्यमुष्णात्तस्मादेवमाहाऽपरिमोषाय यजमानस्य स्वस्त्ययन्यसीत्याह यज-मानस्यैवैष यज्ञस्याऽन्वारंभोऽनवच्छित्त्यै वरुणो वा एष यजमानमभ्यैति यत् ॥ ७५ ॥ क्रीतस्सोम

उपनद्धो नमो मित्रस्य वरुणस्य चक्षसे इत्याह शान्त्या आ सोमँव्वहन्त्यग्निना प्रति तिष्ठते तौ संभवन्तौ यजमानमभि सं भवतः पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षितो यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवाऽस्य स तस्मात्तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव ह्यथो खल्वाहुरग्नीषोमाभ्याँव्वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवाऽस्य स तस्माद्वाश्यँव्वारुण्यर्चा परि चरति स्वयैवैनन्देवतया परि चरति ॥ ७६ ॥ अन्वारभ्योथ्सर्वाभिरेव सूर्यं भूताना२ँ ह्येति यदाहुस्सप्तविंशतिश्च ॥ ११ ॥

प्राचीनवꣳशँय्यावन्त ऋक्सामे वाग्वै देवेभ्यो देवा वै देवयजनङ्कद्रूश्च तद्धिरण्य२ँ षट्पदानि ब्रह्मवादिनो विचित्यो यत्कलया ते वारुणो वै क्रीतस्सोम एकादश ॥ ११ ॥ प्राचीनवꣳश२ँ स्वाहेत्याह यैऽन्तश्शरा ह्येष सन्तपसा च यत्कर्णगृहीतेति लोमतो वारुणष्षट्थ्सप्ततिः ॥ ७६ ॥ प्राचीनवꣳशं परि चरति ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ षष्ठकाण्डे द्वितीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

यदुभौ विमुच्याऽऽतिथ्यङ्गृह्णीयाद्यज्ञँव्वि च्छिन्द्याद्यदुभावविमुच्य यथाऽनागतायाऽऽतिथ्यङ्क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यङ्गृह्णाति यज्ञस्य सन्तत्यै पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैवाऽनुमतन्निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनन्तदथो पत्निया एवै- ॥ १ ॥ ष यज्ञस्याऽन्वारम्भोऽनवच्छित्त्यै यावद्भिर्वै राजाऽनुचरैराग-च्छति सर्वेभ्यो वै तेभ्य आतिथ्यङ्क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या ॥ २ ॥ एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहाऽनुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे ब्रह्मवादिनो वदन्ति

कस्मांथ्सत्याद्गायत्रिया उभयत आतिथ्यस्य क्रियत इति यद्देवाऽदस्सोममा- ॥ ३ ॥ ऽहरत्तस्मा-
द्गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च शिरो वा एतद्यज्ञस्य यदातिथ्यन्नवकपालः
पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतन्नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता
स्तोमेन संमितास्तेजस्त्रिवृत्तेज एव यज्ञस्य शीर्षन्दधाति नवकपालः पुरोडाशो भवति ते
त्रयस्त्रिकपालास्त्रिवृता प्राणेन संमितास्त्रिवृद्वै ॥ ४ ॥ प्राणस्त्रिवृतमेव प्राणमभिपूर्वय्यँज्ञस्य शीर्षन्द-
धाति प्रजापतेर्वा एतानि पख्ष्माणि यदश्ववाला ऐख्षवी तिरश्री यदाश्ववालः प्रस्तरो भवत्यैख्षवी
तिरश्री प्रजापतेरेव तच्चख्षुस्सं भरति देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन्ते देवाः
कार्ष्मर्यमपश्यन्कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान्परिधीन- ॥ ५ ॥ कुर्वत तैर्वै ते
रख्षाꣳस्यपाऽघ्नत यत्कार्ष्मर्यमयाः परिधयो भवन्ति रख्षसामपहत्यै सꣳ स्पर्शयति रख्षसामन-
न्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रख्षाꣳस्यपहन्त्यूर्ध्वे समिधावा दधात्यु-
परिष्टादेव रख्षाꣳस्यप हन्ति यजुषाऽन्यान्तूष्णीमन्यां मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः
प्रतिष्ठित्यै ब्रह्मवादिनो वदन्त्य- ॥ ६ ॥ ग्निश्च वा एतौ सोमश्च कथा सोमायाऽऽतिथ्यङ्क्रियते
नाऽग्नय इति यदग्नावग्निम्मथित्वा प्रहरति तेनैवाऽग्नय आतिथ्यङ्क्रियतेऽथो खल्वाहुरग्निस्सर्वा देवता
इति यद्धविरासाद्याऽग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति ॥ ७ ॥ पत्निया एव जगत्या
आ त्रिवृद्वै परिधीन् वदन्त्येकचत्वारिꣳशच्च ॥ १ ॥

देवासुरास्सय्यँत्ता आसन्ते देवा मिथो विप्रिया आसन्तेऽ(१)न्योऽन्यस्मै ज्यैष्ठ्यायाऽतिष्ठ-
मानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽम-
न्यन्ताऽसुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियास्स्मो या न इमाः प्रियास्तनुवस्ता-
स्समवद्यामहै ताभ्यस्स निरृच्छाद्यो ॥ ८ ॥ नः प्रथमोऽ(१)न्योऽन्यस्मै द्रुह्यादिति तस्माद्यस्सता-
नूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति यत्तानूनप्त्रꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना
पराऽस्य भ्रातृव्यो भवति पञ्च कृत्वोऽवद्यति पञ्चधा हि ते तथ्संमवाद्यन्ताऽथो पञ्चाख्षरा पङ्क्तिः
पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्ध आपतये त्वा गृह्णामीत्याह प्राणो वा ॥ ९ ॥ आपतिः प्राणमेव
प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते
तास्समवाद्यन्त शाक्वरायेत्याह शक्त्यै हि ते तास्समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते
तदात्मनस्समवाद्यन्ताऽनाधृष्टमस्यनाधृष्यमित्याहाऽनाधृष्टꣳ ह्येतदनाधृष्यन्देवानामोज ॥ १० ॥
इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाऽभिशस्तिपा ह्येतदनभिशस्तेन्यमनु
मे दीख्षान्दीख्षापतिर्मन्यतामित्याह यथायजुरेवैतद्घृतव्वै देवा वज्रङ्कृत्वा सोममघ्नन्नन्तिकमिव
खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्त्यꣳशुरꣳशुस्ते देव सोमाऽऽ प्यायतामित्याह य-
॥ ११ ॥ देवाऽस्याऽपुवायते यन्मीयते तदेवास्यैतेनाऽऽ प्यायत्या तुभ्यमिन्द्रः प्यायतामा त्वमि-

न्द्राय प्यायस्वेत्याहोभावेवेन्द्रञ्च सोमञ्चाऽऽ प्यायत्या प्यायय सखीन्थ्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाऽऽ प्याययति स्वस्ति तें देव सोम सुत्यामशीये- ॥ १२ ॥ त्याहाऽऽशिष-मेवैतामा शांस्ते प्र वा एतेंऽस्माल्लोकाच्च्यवन्ते ये सोममाप्याययन्त्यन्तरिख्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्याऽस्मिँल्लोके प्रति तिष्ठन्ति देवासुरास्सय्यँत्ता आसन्ते देवा बिभ्यतोऽग्निं प्राऽविशन्तस्मादाहुरग्निस्सर्वा देवता इति तें- ॥ १३ ॥ ऽग्निमेव वरूथङ्कृत्वाऽसुरानभ्यभवन्नग्निमिव खलु वा एष प्र विशति योऽवान्तरदीख्षामुपैति भ्रातृ-व्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यात्मानमेव दीख्षया पाति प्रजामवान्तरदीख्षया सन्तरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्नि-श्शीतेन वायति समिद्ध्यै या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनद्देवतया व्रतयति सयोनित्वाय शान्त्यै ॥ १४ ॥ यो वा ओजं आह यदशीयेति तेंऽग्न एकादश च ॥ २ ॥

तेषामसुराणान्तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुन्ना-ऽशक्नुवन्ता उपसदैवाऽजिगीषन्तस्मादाहुर्यश्चैवव्वेद यश्च नोपसदा वै महापुरञ्जयन्तीति त इषुꣳ समस्कुर्वताऽग्निमनीकꣳ सोमꣳ शल्यव्विँष्णुन्तेजनन्तेंऽब्रुवन्क इमामसिष्यतीति ॥ १५ ॥ रुद्र इत्यब्रुवन्रुद्रो वै क्रूरस्सोंऽस्यत्विति सोंऽब्रवीद्वरव्वृँणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवाऽसृजथ्स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान्प्राऽणुदत यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै नाऽन्यामाहुतिं पुरस्ताञ्जुहुयाद्यदन्यामाहुतिं पुरस्ताञ्जुहुया- ॥ १६ ॥ दन्यन्मुखङ्कुर्याथ्स्रुवेणाऽऽघारमा घारयति यज्ञस्य प्रज्ञात्यै पराङतिक्रम्य जुहोति पराच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान्प्र णुदते पुनरत्याक्रम्योपसदञ्जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्या-ञ्जित्वा भ्रातृव्यलोकमभ्यारोहति देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान्प्राऽणुदन्त यास्सायꣳ रात्रियै ताभिर्यथ्सायंप्रातरुपसद ॥ १७ ॥ उपसद्यन्तेंऽहोरात्राभ्यामेव तद्यजमानो भ्रातृ-व्यान्प्र णुदते याः प्रातर्याज्यास्स्युस्तास्सायं पुरोनुवाक्याः कुर्यादयातयामत्वाय तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान्प्रीणाति षट्थ्सं पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति द्वादशाऽहीने सोम उपैति द्वादश मासास्सव्वँथ्सरस्सव्वँथ्सरमेव प्रीणाति चतुर्विꣳशतिस्सं ॥ १८ ॥ पद्यन्ते चतु-र्विꣳशतिरर्द्धमासा अर्द्धमासानेव प्रीणात्याराग्रामवान्तरदीख्षामुपेयाद्यः कामयेताऽस्मिन्मे लोके-ऽर्द्धुकꣳ स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्राऽवान्तरदीख्षाऽस्मिन्नेवाऽस्मै लोकेऽर्द्धुकं भवति परोवरीयसीमवान्तरदीख्षामुपेयाद्यः कामयेताऽमुष्मिन्मे लोकेऽर्द्धुकꣳ स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीख्षाऽमुष्मिन्नेवाऽस्मै लोकेऽर्द्धुकं भवति ॥ १९ ॥ असिष्यतीति जुहुयाथ्सायंप्रातरुपसदश्चतुर्विꣳशतिस्सश्चतुरोऽग्रे षोडश च ॥ ३ ॥

सुवर्गँव्वा एते लोकँय्यन्ति य उपसद उपयन्ति तेषाँय्य उन्नयते हीयत एव स नोदनेषीति सूँन्नीयमिव यो वै स्वार्त्थेतांय्यता श्रान्तो हीयत उत स निष्टचाय सह वसति तस्माँथ्सकृदुन्नीय नाऽपरमुन्नयेत दद्ध्नोन्नयेतैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे ॥ २० ॥ यज्ञो देवेभ्यो निलायत विष्णू रूपङ्कृत्वा स पृथिवीं प्राऽविशत्तन्देवा हस्तान्थ्सꣳरभ्यैच्छन्तमिन्द्र उपर्युपर्यत्यक्राम-थ्सोऽब्रवीत्को माऽयमुपर्युपर्यत्यक्रमीदित्यहन्दुर्गे हन्तेत्यथ कस्त्वमित्यहन्दुर्गादाहर्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽयँव्वाममोष- ॥ २१ ॥ स्सप्तानाङ्गिरीणां परस्ताद्वित्तँव्वेद्यमसुराणां बिभर्ति तञ्जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्थ्सोऽब्रवीद्दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति तमेभ्यो यज्ञ एव यज्ञमाऽहरद्यत्तद्वित्तँव्वेद्यमसुराणामविन्दन्त तदे-कँव्वेद्यै वेदित्वमसुराणा- ॥ २२ ॥ व्वा इयमग्र आसीद्यावदासीनः परापश्यति तावद्देवानान्ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदियꣳ सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रस्सलावृकी रूपङ्कृत्वेमान्त्रिस्सर्वतः पर्यक्रामत्तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वꣳ ॥ २३ ॥ सा वा इयꣳ सर्वैव वेदिरियति शख्यामीति त्वा अवमाय यजन्ते त्रिꣳशत्पदानि पश्चात्तिरश्ची भवति षट्त्रिꣳशत्प्राची चतुर्विꣳशतिः पुरस्तात्तिरश्ची दशदश सं पद्यन्ते दशाक्षरा विराडन्नँव्विराड्विराजैवाऽन्नाद्यमव रुन्ध उद्धन्ति यदेवाऽस्या अमेद्ध्यन्तदप हन्त्युद्धन्ति तस्मादो-षधयः परा भवन्ति बर्हिस्स्तृणाति तस्मादोषधयः पुनरा भवन्त्युत्तरं बर्हिष उत्तरबर्हिस्स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवाऽयजमानादुत्तरङ्करोति तस्माद्यजमानोऽयजमाना-दुत्तरः ॥ २४ ॥ रुन्धे वाममोषो वेदित्वमसुराणाँव्वेदित्वं भवन्ति पञ्चविꣳशतिश्च ॥ ४ ॥

यद्वा अनीशानो भारमादत्ते वि वै स लिशते यद्द्वादश साह्नस्योपसदस्स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशाऽहीनस्य यज्ञस्य सवीर्यत्वायाऽथो सलोम क्रियते वथ्सस्यैकस्स्तनो भागी हि सोऽथैकꣳ स्तनँव्व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै ॥ २५ ॥ क्षुरपवि नाम व्रतँय्येन प्र जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणानथो कनीयसैव भूय उपैति चतुरोऽग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनन्नाम व्रतन्तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभिर्यवागू राजन्यस्य व्रतङ्क्रूरेव वै यवागूः क्रूर इव ॥ २६ ॥ राजन्यो वज्रस्य रूपꣳ समृद्ध्या आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन्धत्तेऽथो पयसा वै गर्भा वर्द्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयो व्रतं भवत्यात्मानमेव तद्वर्द्धयति त्रिव्रतो वै मनुरासीद्द्विव्रता असुरा एकव्रता ॥ २७ ॥ देवाः प्रातर्मद्ध्यन्दिने सायन्तन्मनोर्व्रतमासीत्पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायञ्चाऽसुराणान्नि-र्मद्ध्यङ्क्षुधो रूपन्ततस्ते पराऽभवन्मद्ध्यन्दिने मद्ध्यरात्रे देवानान्ततस्तेऽभवन्थ्सुवर्गँल्लोक-मायन् यदस्य मद्ध्यन्दिने मद्ध्यरात्रे व्रतं भवति मद्ध्यतो वा अन्नेन भुञ्जते मद्ध्यत एव तदूर्जन्धत्ते

भ्रातृव्याभिभूत्यै भवत्यात्मना ॥ २८ ॥ पराऽस्य भ्रातृव्यो भवति गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितँय्यद्दीक्षितो दीक्षितविमितात्प्रवसेद्यथा योनेर्गर्भस्स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथायैष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेथ्स एनमीश्वरोऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै दक्षिणतश्शय एतद्वै यजमानस्याऽऽयतनꣳ स्व एवाऽऽयतने शयेऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये ॥ २९ ॥ एतद्वै क्रूर इवैकव्रता आत्मना यजमानस्य त्रयोदश च ॥ ५ ॥

पुरोहविषि देवयजने याजयेद्यङ्कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गँल्लोकञ्जयेदित्येतद्वै पुरोहविर्देवयजनँय्यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यत्युपैनमुत्तरो यज्ञो नमत्यभि सुवर्गँल्लोकञ्जयत्याप्ते देवयजने याजयेद्भ्रातृव्यवन्तं पन्थाँव्वाऽधिस्पर्शयेत्कर्तँव्वा यावन्नाऽनसे यातवै ॥ ३० ॥ न रथायैतद्वा आप्तन्देवयजनमाप्नोत्येव भ्रातृव्यन्नैनं भ्रातृव्य आप्नोत्येकोन्नते देवयजने याजयेत्पशुकाममेकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्ताऽन्तरा सदोहविर्द्धाने उन्नतꣳ स्यादेतद्वा एकोन्नतन्देवयजनं पशुमानेव भवति त्र्युन्नते देवयजने याजयेथ्सुवर्गकामन्त्र्युन्नताद्वै देवयजनादङ्गिरसस्सुवर्गँल्लोकमायन्नन्तराऽऽहवनीयञ्च हविर्द्धानञ्चो- ॥ ३१ ॥ न्नतꣳ स्यादन्तरा हविर्द्धानञ्च सदश्चाऽन्तरा सदश्च गार्हपत्यञ्चैतद्वै त्र्युन्नतन्देवयजनꣳ सुवर्गमेव लोकमेति प्रतिष्ठिते देवयजने याजयेत्प्रतिष्ठाकाममेतद्वै प्रतिष्ठितन्देवयजनँय्यथ्सर्वतस्समं प्रत्येव तिष्ठति यत्राऽन्याअन्या ओषधयो व्यतिषक्तास्स्युस्तद्याजयेत्पशुकाममेतद्वै पशूनाꣳ रूपꣳ रूपेणैवाऽस्मै पशू- ॥ ३२ ॥ नव रुन्धे पशुमानेव भवति निरृतिगृहीते देवयजने याजयेद्यङ्कामयेत निरृत्याऽस्य यज्ञङ्ग्राहयेयमित्येतद्वै निरृतिगृहीतन्देवयजनँय्यथ्सदृश्यै सत्या ऋक्षन्निरृत्यैवाऽस्य यज्ञङ्ग्राहयति व्यावृत्ते देवयजने याजयेद्व्यावृत्कामँय्यं पात्रे वा तल्पे वा मीमाꣳसेरन्प्राचीनमाहवनीयात्प्रवणꣳ स्यात्प्रतीचीनङ्गार्हपत्यादेतद्वै व्यावृत्तन्देवयजनँव्वि पाप्मना भ्रातृव्येणाऽऽ वर्तते नैनं पात्रे न तल्पे मीमाꣳसन्ते कार्ये देवयजने याजयेद्भूतिकामङ्कार्यो वै पुरुषो भवत्येव ॥ ३३ ॥ यातवै हविर्द्धानञ्च पशून्पाप्मनाऽष्टादश च ॥ ६ ॥

तेभ्य उत्तरवेदिस्सिꣳही रूपङ्कृत्वोभयानन्तराऽपक्रम्याऽतिष्ठत्ते देवा अमन्यन्त यतरान् वा इयमुपावथ्स्यति त इदं भविष्यन्तीति तामुपाऽमन्त्रयन्त साऽब्रवीद्वरँव्वृणै सर्वान्मया कामान्व्यश्ञवथ पूर्वान्तु माऽग्नेराहुतिरश्ञवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतꣳ ह्यस्यै शम्यया परि मिमीते ॥ ३४ ॥ मात्रैवाऽस्यै साऽथो युक्तेनैव युक्तमव रुन्धे वित्तायनी मेऽसीत्याह वित्ता ह्येनानावत्तिक्तायनी मेऽसीत्याह तिक्तान् ह्येनानावदवतान्मा नाथितमित्याह नाथितान् ह्येनानावदवतान्मा व्यथितमित्याह व्यथितान् ह्येनानावद्विदेरग्निर्नभो नामा- ॥ ३५ ॥ ऽग्ने अङ्गिर इति त्रिर्हरति य एवेषु लोकेष्वग्नयस्तानेवाऽव रुन्धे तूष्णीञ्चतुर्थꣳ हरत्यनिरुक्तमेवाऽव रुन्धे

सिꣳहीरसि महिषीरसीत्याह सिꣳहीह्येषा रूपङ्कृत्वोभयानन्तराऽपक्रम्याऽतिष्ठदुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवा- ॥ ३६ ॥ ऽसीति सꣳहन्ति धृत्यै देवेभ्यश्शुन्धस्व देवेभ्यश्शुम्भस्वेत्यव चोक्षति प्र च किरति शुद्ध्या इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्याह दिग्भ्य एवैनां प्रोक्षति देवाꣳश्चेदुत्तरवेदिरुपावर्तीहैव वि जयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपा- ॥ ३७ ॥ ऽनुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वकर्माऽऽदित्यैरुत्तरतो यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान्प्र णुदत इन्द्रो यतीन्थ्सालावृकेभ्यः प्राऽयच्छत्तान्दक्षिणत उत्तरवेद्या आदन्यत्प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद्यदेव तत्र क्रूरन्तत्तेन शमयति यन्द्विष्यात्तन्ध्यायेच्छुचैवैनमर्पयति ॥ ३८ ॥ मिमीते नाम ध्रुवाऽप शुचा त्रीणि च ॥ ७ ॥

सोत्तरवेदिरब्रवीथ्सर्वान्मया कामान्व्यश्नवथेति ते देवा अकामयन्ताऽसुरान्भ्रातृव्यानभि भवेमेति तेऽजुहवुस्सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान्भ्रातृव्यानभ्यभवन्तेऽसुरान्भ्रातृव्यानभिभूयाऽकामयन्त प्रजावँविन्देमहीति तेऽजुहवुस्सिꣳहीरसि सुप्रजावनिस्स्वाहेति ते प्रजामविन्दन्त ते प्रजावँवित्त्वा- ॥ ३९ ॥ ऽकामयन्त पशून् विन्देमहीति तेऽजुहवुस्सिꣳहीरसि रायस्पोषवनिस्स्वाहेति ते पशूनविन्दन्त ते पशून् वित्त्वाऽकामयन्त प्रतिष्ठावँविन्देमहीति तेऽजुहवुस्सिꣳहीरस्यादित्यवनिस्स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठावँवित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुस्सिꣳहीरस्या वह देवान्देवयते ॥ ४० ॥ यजमानाय स्वाहेति ते देवता आशिष उपाऽऽयन्पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धेऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषान्तद्भागधेयन्तानेव तेन प्रीणाति पौतुद्रवान्परिधीन्परि दधात्येषा- ॥ ४१ ॥ ल्ँलोकानावँविधृत्या अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यवँवहन्तः प्राऽमीयन्त सोऽग्निरबिभेदित्थँवाव स्य आर्तिमाऽरिष्यतीति स निलायत स यावँवनस्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु ताꣳसुगन्धितेजने यां पशुषु ताम्पेत्वस्याऽन्तरा शृङ्गे तन्देवताः प्रैषमैच्छन्तमन्वविन्दन्तमब्रुव- ॥ ४२ ॥ न्नुप न आ वर्तस्व हव्यन्नो वहेति सोऽब्रवीद्वरवँवृणै यदेव गृहीतस्याऽहुतस्य बहिःपरिधि स्कन्दात्तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याऽहुतस्य बहिःपरिधि स्कन्दति तेषान्तद्भागधेयन्तानेव तेन प्रीणाति सोऽमन्यताऽस्थन्वन्तो मे पूर्वे भ्रातरः प्राऽमेषताऽस्थानि शातया इति स यान्य-॥ ४३ ॥ स्थान्यशातयत तत्पूतुद्रवभवद्यन्माꣳसमुपमृतन्तद्गुल्गुलु यदेतान्थ्सम्भारान्थ्संभरत्यग्निमेव तथ्सं भरत्यग्नेः पुरीषमसीत्याहाऽग्नेर्ह्येतत्पुरीषँयथ्संभारा अथो खल्वाहुरेते वावैनन्ते भ्रातरः परि शेरे यत्पौतुद्रवाः परिधय इति ॥ ४४ ॥ वित्त्वा देवयत एषामब्रुवन् यानि चतुश्चत्वारिꣳशच्च ॥ ८ ॥

बुद्धमवं स्यति वरुणपाशादेवैनं मुञ्चति प्र णेनेक्ति मेद्ध्यं एवैनं करोति सावित्रियर्चा हुत्वा हविर्द्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षस्स यदुथ्सर्जेद्यजमानस्य गृहानभ्युथ्संजेथ्सुवाग्देव दुर्या ऽ आ वदेत्याह गृहा वै दुर्याश्शान्त्यै पत्न्यु- ॥ ४५ ॥ पानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनन्तदथो पत्निया एवैष यज्ञस्याँऽन्वारंभोऽनवच्छित्त्यै वर्त्मना वा अन्वित्य यज्ञ ऽ रक्षाꣳसि जिघाꣳसन्ति वैष्णवीभ्यांमृग्भ्याँव्वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति यददध्वर्युरनग्रावाहुति-ञ्जुहुयादन्धोंऽदध्वर्युस्स्याद्रक्षाꣳसि यज्ञ ऽ हन्युरु- ॥ ४६ ॥ हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोंऽदध्वर्युर्भवति न यज्ञ ऽ रक्षाꣳसि घ्नन्ति प्राची प्रेतमदध्वरङ्कल्पयन्ती इत्याह सुवर्गमेवैनं लोकङ्गमयत्यत्र रमेथाँव्वर्ष्मन्पृथिव्या इत्याह वर्ष्म ह्येतत्पृथिव्या यद्देवयजन ऽ शिरो वा एतद्यज्ञस्य यद्धविर्द्धानन्दिवो वा विष्णवुत वा पृथिव्या ॥ ४७ ॥ इत्याशीपदयर्चा दक्षिणस्य हविर्द्धानस्य मेथीन्नि हन्ति शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे दण्डो वा औपरस्तृतीयस्य हविर्द्धा-नस्य वषट्कारेणाऽक्षमच्छिनद्यत्तृतीयञ्छदिर्हविर्द्धानयोरुदाह्रियते तृतीयस्य हविर्द्धानस्याऽवरु-द्ध्यै शिरो वा एतद्यज्ञस्य यद्धविर्द्धानव्ँविष्णो रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतव्ँविष्णोस्स्यूरसि विष्णोर्द्ध्रुवमसीत्याह वैष्णव ऽ हि देवतया हविर्द्धानय्ँयं प्रथमङ्ग्रन्थिङ्ग्र-थ्नीयाद्यत्तन्न विस्रꣳसयेदमेहेनाऽदध्वर्युः प्र मीयेत तस्माथ्स विस्रस्यः ॥ ४८ ॥ पत्नी हन्युर्वा पृथिव्या विष्यूतव्ँविष्णोष्षड्विꣳशतिश्च ॥ ९ ॥

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाऽश्विनौ हि देवा-नामदध्वर्यू आस्ताँ पूष्णो हस्ताभ्यामित्याह यत्यै वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै काण्डेकाण्डे वै क्रियमाणे यज्ञ ऽ रक्षाꣳसि जिघाꣳसन्ति परिलिखित ऽ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या ॥ ४९ ॥ इदमह ऽ रक्षसो ग्रीवा अपि कृन्तामि योंऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनन्द्वेष्टि तयोरेवाऽनन्तरायङ्ग्रीवाः कृन्तति दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनाँल्लोकेभ्यः प्रोक्षति परस्तादर्वाचीं प्रोक्षति तस्माँत् ॥ ५० ॥ परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यव ऊर्गुदुम्बर ऊर्जैवोर्ज ऽ समर्द्धयति यजमानेन सम्मितौदुंबरी भवति यावानेव यजमानस्तावतीमेवाऽस्मिन्नूर्जन्दधाति पितृणा ऽ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्याँ(१) ऽ ॥ ५१ ॥ ह्येतद्यन्निखातय्ँयद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्या निखाता स्याद्ब-र्हिरवस्तीर्य मिनोत्यस्यामेवैनाँ मिनोत्यथो स्वारुहमेवैनाङ्करोत्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृणे-त्याहैषाँल्लोकानाव्ँविधृत्यै द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवाना-मौदुंबरीं मिनोति तेनैवै- ॥ ५२ ॥ नाँ मिनोति ब्रह्मवनिन्त्वा क्षत्रवनिमित्याह यथायजुरे-

वैतद्धृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यांञ्जुहोति द्यावापृथिवी एव रसेनाऽनक्त्यान्तमन्ववं-स्रवयत्यान्तमेव यजमानन्तेजसाऽनक्त्यैन्द्रमसीति छदिरधि नि दधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यथ्सदो नवछदि ॥ ५३ ॥ तेजस्कामस्य मिनुयात्त्रिवृता स्तोमेन संमितन्तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशछदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियन्त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशछदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशतिछदि प्रतिष्ठाकामस्यैक-विꣳशस्तोमानां प्रतिष्ठा प्रतिष्ठित्या उदरँव्वै सद ऊर्गुदुम्बरो मद्ध्यत औदुम्बरीं मिनोति मद्ध्यत एव प्रजानामूर्जन्दधाति तस्मा- ॥ ५४ ॥ न्मद्ध्यत ऊर्जा भुञ्जते यजमानलोके वै दक्षिणानि छदी-ꣳषि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवाऽयजमानादुत्तरङ्करोति तस्मा-द्यजमानोऽयजमानादुत्तरोऽन्तर्वर्तान्करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उप जीवन्ति परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैतदिन्द्रस्य स्यूरसीन्द्रस्य द्ध्रुवमसीत्याहैन्द्रꣳ हि देवतया सदो यं प्रथमङ्ग्रन्थिङ्ग्रथ्नीयाद्यत्तन्न विस्रꣳसयेदमेहेनाऽद्ध्वर्युः प्र मीयेत तस्माथ्स विस्रस्यः ॥ ५५ ॥ अपहत्यै तस्मात्पितृदेवत्यन्तेनैव नवछदि तस्माथ्सदः पञ्चदश च ॥ १० ॥

शिरो वा एतद्यज्ञस्य यद्धविर्द्धानं प्राणा उपरवा हविर्द्धाने खायन्ते तस्माच्छीर्षन्प्राणा अध-स्तात्खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणा रक्षोहणो वलगहनो वैष्णवान्खनामीत्याह वैष्णवा हि देवतयोपरवा असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्न्यखनन्तान्बाहुमात्रेऽन्वविन्दन्तस्माद्बाहु-मात्राः खायन्त इदमहन्तँव्वलगमुद्वपामि ॥ ५६ ॥ यन्नस्समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चाऽसमानो यमेवास्मै तौ वलगन्निखनतस्तमेवोद्वपति सन्तृणत्ति तस्माथ्सन्तृण्णा अन्तरतः प्राणा न सं भिनत्ति तस्मादसम्भिन्नाः प्राणा अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणा यवमतीरव नय- ॥ ५७ ॥ त्यूर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जन्दधाति बर्हि-रव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणा आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्त्यसन्तृण्णे हि हनू अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै शिरो वा एतद्यज्ञस्य यद्धविर्द्धानं ॥ ५८ ॥ प्राणा उपरवा हनू अधिषवणे जि-ह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरꣳ सदो यदा खलु वै जिह्वया दथ्स्वधि खादत्यथ मुखङ्गच्छति यदा मुखङ्गच्छत्यथोदरङ्गच्छति तस्माद्धविर्द्धाने चर्मन्नधि ग्रावभिरभिषु-त्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति यो वै विराजो यज्ञमुखे दोहँव्वेद दुह एवैना-मियँव्वै विराट्तस्यै त्वक्चर्मोधोऽधिषवणे स्तना उपरवा ग्रावाणो वथ्सा ऋत्विजो दुहन्ति सोमः पयो य एवँव्वेद दुह एवैनाम् ॥ ५९ ॥ वपामि यवमतीरव नयति हविर्द्धानमेव त्रयोविꣳशतिश्च ॥ ११ ॥

यदुभौ देवासुरा मिथस्तेषाꣳ सुवर्गय्यद्वा अनीशानः पुरोहविषि तेभ्यस्सोत्तरवेदिर्बद्धन्देवस्याऽग्निँव्वज्रश्शिरो वा एकादश ॥ ११ ॥ यदुभावित्याह देवानाय्यँज्ञो देवेभ्यो न रथाय यजमानाय परस्तादर्वाचीन्नवपञ्चाशत् ॥ ५९॥ यदुभौ दुह एवैनाम् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ षष्ठकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वालय्यँज्ञस्य सयोनित्वाय देवा वै यज्ञं पराऽजयन्त तमाग्नीद्ध्रात्पुनरपाऽजयन्नेतद्वै यज्ञस्याऽपराजितय्यँदाग्नीद्ध्रय्यँदाग्नीद्ध्राद्धिष्णियान् विहरति यदेव यज्ञस्याऽपराजितन्ततं एवैनं पुनस्तनुते पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुत ॥ १ ॥ आहाऽग्नीदग्नीन् वि हर बर्हिस्स्तृणाहि पुरोडाशाꣳ अलङ्कुर्विति यज्ञमेवाऽपजित्य पुनस्तन्वाना यन्त्यङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाऽथो सं भरत्येवैनद्धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन्तमन्ववायन्तं पर्यविशन् य एवव्वेँद विन्दते ॥ २ ॥ परिवेष्टारन्ते सोमपीथेन व्यार्धयन्त ते देवेषु सोमपीथमैच्छन्त तान्देवा अब्रुवन्द्वेद्वे नामनी कुरुद्ध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो वा अथ धिष्णियास्तस्माद्विनामा ब्राह्मणोऽर्धुकस्तेषाय्यँ नेदिष्ठं पर्यविशन्ते सोमपीथं प्राऽऽप्नुवन्नाहवनीय आग्नीद्ध्रीयो होत्रीयो मार्जालीयस्तस्मात्तेषु जुह्वत्यतिहाय वषट्करोति वि ह्ये- ॥ ३ ॥ ते सोमपीथेनाऽऽर्ध्यन्त देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राऽणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ताभिरपाऽनुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो धिष्णियान्व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीं- ॥ ४ ॥ जायन्ते प्राणा वा एते यद्धिष्णिया यदद्ध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्थ्सङ्कर्षेत्प्रमायुकस्स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्द्ध्वः खलु वै नाभ्यै प्राणोऽवाङपानो यदद्ध्वर्युः प्रत्यङ् होतारमतिसर्पेदपाने प्राणन्दद्ध्यात्प्रमायुकस्स्यान्नाऽद्ध्वर्युरुप गायेद्वाग्वीर्यो वा

अद्ध्वर्युर्यदद्ध्वर्युरुपगायेदुद्गात्रे ॥ ५ ॥ वाचꣳ सं प्र यच्छेदुपदासुकाऽस्य वाख्स्याद्ब्रह्मवादिनो वद-
न्ति नाऽसꣳस्थिते सोमेऽद्ध्वर्युः प्रत्यङ्ख्सदोऽतीयादथ कथा दाख्षिणानि होतुमेति यामो हि स
तेषाङ्कस्मा अह देवा याममँव्वाऽयाममँव्वाऽनु ज्ञास्यन्तीत्युत्तरेणाऽऽग्नीद्ध्रं परीत्य जुहोति दाख्षिणानि
न प्राणान्थ्सङ्घर्षति न्यन्ये धिष्णिया उप्यन्ते नाऽन्ये यान्निवपति तेन तान्प्रीणाति यान्न निवपति
यदनुदिशति तेन तान् ॥ ६ ॥ स्तुते विन्दते हि वीयन्ते प्रतीचीरुद्गात्र उप्यन्ते चतुर्दश च ॥ १ ॥

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि द्वाभ्याङ्गार्हपत्ये जुहोति द्विपाद्यजमानः
प्रतिष्ठित्या आग्नीद्ध्रे जुहोत्यन्तरिख्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनँल्लोकङ्गमयति
देवान् वै सुवर्गँल्लोकय्यँतो रख्षाꣳस्यजिघाꣳसन्ते सोमेन राज्ञा रख्षाꣳस्यपहत्याऽप्तुमात्मानङ्कृत्वा
सुवर्गँल्लोकमायन्नख्षसामनुपलाभायाऽऽत्तस्सोमो भवत्यथ ॥ ७ ॥ वैसर्जनानि जुहोति रख्षसाम-
पहत्यै त्वꣳ सोम तनूकृद्भ्य इत्याह तनूकृद्ध्येष द्वेषोभ्योऽन्यकृतेभ्य इत्याहाऽन्यकृतानि हि रख्षा-
ꣳस्युरु यन्ताऽसि वरूथमित्याहोरु णस्कृधीति वावैतदाह जुषाणो अप्तुराज्यस्य वेत्वित्याहाऽप्तुमेव
यजमानङ्कृत्वा सुवर्गँल्लोकङ्गमयति रख्षसामनुपलाभायाऽऽ सोमन्ददत ॥ ८ ॥ आ ग्राव्ण्ण आ
वायव्यान्या द्रोणकलशमुत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति यावदेवाऽस्याऽस्ति तेन सह सुव-
र्गँल्लोकमेति नयवत्यर्चाऽऽग्नीद्ध्रे जुहोति सुवर्गस्य लोकस्याऽभिनीत्यै ग्राव्ण्णो वायव्यानि द्रोण-
कलशमाग्नीद्ध्र उप वासयति वि ह्येनन्तैर्गृह्णते यथ्सहोपवासयेदपुवायेत सौम्यर्चा प्र पादयति स्वयै-
॥ ९ ॥ वैनन्देवतया प्र पादयत्यदित्यास्सदोऽस्यदित्यास्सद आ सीदेत्याह यथायजुरेवैतद्यजमानो
वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितस्सोम इत्याह सवितृप्रसूत एवैनन्देवताभ्यस्सं प्र
यच्छत्येतत्त्वꣳ सोम देवो देवानुपाऽगा इत्याह देवो ह्येष स- ॥ १० ॥ न्देवानुपैतीदमहं मनुष्यो
मनुष्यानित्याह मनुष्यो(१) ह्येष सन्मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानस्स्याथ्सह
प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिस्सहेमँल्लोकमुपावर्तते नमो देवेभ्य इत्याह नमस्कारो
हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि ॥ ११ ॥ पितृणामिदमहन्निर्वरुणस्य पाशादि-
त्याह वरुणपाशादेव निर्मुच्यतेऽग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः को हि तद्वेद यद्वसीयान्थ्स्वे
वशे भूते पुनर्वा ददाति न वेति ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवव्विद्वान्ग्राव्ण्ण
आग्नीद्ध्र उपवासयति नैनं मलिम्लुसेना विन्दति ॥ १२ ॥ अथ ददते स्वया सन्थ्स्वधाकारो हि विन्दति
॥ २ ॥

वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपस्स्वयैवैनन्देवतयाऽच्छैत्यत्यन्यान-
गान्नाऽन्यानुपाऽगामित्याहाऽति ह्यन्यानेति नाऽन्यानुपैत्यर्वाक्त्वा परैरविदं परोऽवरैरित्याहाऽर्वा-
ग्घ्येनं परैर्विन्दति परोऽवरैस्तन्त्वा जुषे ॥ १३ ॥ वैष्णवन्देवयज्याया इत्याह देवयज्यायै ह्येनञ्जुषते
देवस्त्वा सविता मद्ध्वाऽनक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसी-

रित्याह वज्रो वै स्वधितिश्शान्त्यै स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति यः प्रथमश्शकलः परापतेत्तमप्या हरेत्सतेजस- ॥ १४ ॥ मेवैनमा हरतीमे वै लोका यूपात्प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मद्ध्येन मा हिꣳसीरित्याहैभ्य एवैनँल्लोकेभ्यश्शमयति वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति सहस्र-वल्शा वि वयꣳ रुहेमेत्याहाऽऽशिषमेवैतामा शास्तेऽनक्षसङ्ग- ॥ १५ ॥ वृश्चेद्यदक्षसङ्गँवृश्चेद-धर्ईषय्यजमानस्य प्रमायुकꣳ स्याद्यङ्कामयेताऽप्रतिष्ठितस्स्यादित्यारोहन्तस्मै वृश्चेदेष वै वनस्पतीना-मप्रतिष्ठितोऽप्रतिष्ठित एव भवति यङ्कामयेताऽपशुस्स्यादित्यपर्णन्तस्मै शुष्काग्रँवृश्चेदेष वै वनस्प-तीनामपशव्योऽपशुरेव भवति यङ्कामयेत पशुमान्त्स्यादिति बहुपर्णन्तस्मै बहुशाखँवृश्चेदेष वै ॥ १६ ॥ वनस्पतीनां पशव्यः पशुमानेव भवति प्रतिष्ठितँवृश्चेत्प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यस्समे भूम्यै स्वाद्योनेे रूढः प्रत्येव तिष्ठति यः प्रत्यङ्ङुपनतस्तँवृश्चेत्स हि मेधमभ्युपनतः पञ्चारत्निन्तस्मै वृश्चेद्यङ्कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो ॥ १७ ॥ नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्वरी पशवश्शक्वरी पशूनेवाऽव रुन्धे नवारत्निन्तेजस्कामस्य त्रिवृता स्तोमेन संमितन्ते-जस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियन्त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तद-शः प्रजापतिः प्रजापतेराप्त्या एकविꣳशत्यरत्निं प्रतिष्ठाकामस्यैकविꣳशस्स्तोमानां प्रतिष्ठा प्रतिष्ठि-त्या अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखन्तेजसैव गायत्रिया यज्ञमुखेन सं-मितः ॥ १८ ॥ जुषे सतेजसमनक्षसङ्गं बहुशाखँवृश्चेदेष वै यज्ञ उपैनमुत्तरो यज्ञ आप्त्या एकान्न विꣳशतिश्च ॥ ३ ॥

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनँल्लोकेभ्यः प्रोक्षति पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै यवमतीरव नय-त्यूर्ग्वै यवो यजमानेन यूपस्संमितो यावानेव यजमानस्तावतीमेवाऽस्मिन्नूर्जन्दधाति ॥ १९ ॥ पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्याꣳ(१)ꣳ ह्येतद्यन्निखातय्यद्बर्हिरनवस्तीर्य मि-नुयात्पितृदेवत्यो निखातस्स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनम्मिनोति यूपशकलमवाऽस्यति सतेजसमेवैनम्मिनोति देवस्त्वा सविता मद्ध्वाऽनक्त्वित्याह तेजसैवैनमनक्ति सुपिप्पलाभ्यस्त्वौ-षधीभ्य इति चषालं प्रति ॥ २० ॥ मुञ्चति तस्माच्छीर्षत ओषधयः फलङ्गृह्णन्त्यनक्ति तेजो वा आज्यय्यँजमानेनाऽग्निष्ठाऽश्रिस्संमिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्त्यान्तमन-क्त्यान्तमेव यजमानन्तेजसाऽनक्ति सर्वतः परि मृशत्यपरिवर्गमेवाऽस्मिन्तेजो दधात्युद्दिवꣳ स्तभानाऽऽन्तरिक्षं पृणेत्याहैषाल्लोकानावँविधृत्यै वैष्णव्यर्चा ॥ २१ ॥ कल्पयति वैष्णवो वै

देवतया यूपस्स्वयैवैनन्देवतया कल्पयति द्वाभ्यांङ्कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै यङ्कामयेत तेजसैनन्देवताभिरिन्द्रियेण व्यर्द्धयेयमित्यग्निष्ठान्तस्याऽग्निमाहवनीयादित्थँव्वेत्थँव्वाऽति नावयेत्ते-जसैवैनन्देवताभिरिन्द्रियेण व्यर्द्धयति यङ्कामयेत तेजसैनन्देवताभिरिन्द्रियेण समर्द्धयेयमित्य-॥ २२ ॥ ग्निष्ठान्तस्याऽग्निमाहवनीयेन सं मिनुयात्तेजसैवैनन्देवताभिरिन्द्रियेण समर्द्धयति ब्रह्मव-निन्त्वा रक्षत्रवनिमित्याह यथायजुरेवैतत्परि व्ययत्यूर्वै रशना यजमानेन यूपस्संमितो यजमानमे-वोर्जा समर्द्धयति नाभिदघ्ने परि व्ययति नाभिदघ्न एवाऽस्मा ऊर्जन्दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते यङ्कामयेतोर्जैन-॥ २३ ॥ व्व्यर्द्धयेयमित्यूर्द्ध्वाँव्वा तस्याऽवाचीँव्वाऽवोहेदूर्जैवैनँव्व्यर्द्धयति यदि कामयेत वर्षुकः पर्जन्यस्स्यादित्यवाचीमवोहेद्वृष्टिमेव नि यच्छति यदि कामयेताऽवर्षुक-स्स्यादित्यूर्द्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति पितृणान्निखातं मनुष्याणामूर्द्ध्वन्निखातादा रशनाया ओष-धीना९ रशना विश्वेषा- ॥ २४ ॥ न्देवानामूर्द्ध्व९ रशनाया आ चषालादिन्द्रस्य चषाल९ साद्ध्या-नामतिरिक्त९ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति यज्ञेन वै देवास्सुवर्गल्ँलोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गल्ँलोक-मायन्तमृषयो यूपेनैवाऽनु प्राऽजानन्तद्यूपस्य यूपत्व- ॥ २५ ॥ य्यँद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै पुरस्तान्मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायतेऽप्रज्ञात९ हि तद्यदतिपन्न आहुरिदङ्कार्यमासीदिति साद्ध्या वै देवा यज्ञमत्यमन्यन्त तान् यज्ञो नाऽस्पृशत्तान् यद्यज्ञस्याऽतिरिक्तमासीत्तद-स्पृशदतिरिक्तँव्वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेत- ॥ २६ ॥ द्यूपस्य यदूर्द्ध्वञ्च-षालात्तेषान्तद्भागधेयन्तानेव तेन प्रीणाति देवा वै स९स्थिते सोमे प्र स्रुचोऽहरन्प्र यूपन्तेऽमन्यन्त यज्ञवेशसँव्वा इदङ्कुर्म इति ते प्रस्तर९ स्रुचान्निष्क्रयणमपश्यन्थ्स्वरुँय्यूपस्य स९स्थिते सोमे प्र प्रस्तर९ हरति जुहोति स्वरुमयज्ञवेशसाय ॥ २७ ॥ दधाति प्रत्यृचा समर्द्धयेयमित्यूर्जैनवृँवि-श्वेषाय्यूँपत्वमतिरिक्तमेतद्विचत्वारि९शच्च ॥ ४ ॥

साद्ध्या वै देवा अस्मिल्ँलोक आसन्नाऽन्यत्किञ्चन मिषत्तेऽग्निमेवाऽग्नये मेधायाऽऽलभन्त न ह्यन्यदालम्भ्यमविन्दन्ततो वा इमाः प्रजाः प्राऽजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय रुद्रो वा एष यदग्निर्यजमानः पशुर्यत्पशुमालभ्याऽग्निं मन्थेद्रुद्राय यजमान- ॥ २८ ॥ मपि दद्ध्यात्प्रमायुकस्स्यादथो खल्वाहुरग्निस्सर्वा देवता हविरेतद्यत्पशुरिति यत्पशुमालभ्याऽग्निम्मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयत्युपाकृत्यैव मन्थ्यस्तन्नेवाऽऽलब्धन्नेवाऽनालब्धमग्नेर्जनित्र-मसीत्याहाऽग्नेर्ह्येतज्जनित्रँव्वृषणौ स्थ इत्याह वृषणौ ॥ २९ ॥ ह्येतावुर्वश्यस्यायुरसीत्याह मिथु-नत्वाय घृतेनाऽक्ते वृषणन्दधाथामित्याह वृषण९ ह्येते दधाते ये अग्निङ्गायत्रञ्छन्दोऽनु प्र जायस्वे-त्याह छन्दोभिरेवैनं प्र जनयत्यग्नये मत्थ्यमानायाऽनु ब्रूहीत्याह सावित्रीमृचमन्वाह सवितृप्रसूत एवैनम्मन्थति जातायाऽनु ब्रूहि ॥ ३० ॥ प्रह्रियमाणायाऽनु ब्रूहीत्याह काण्डेकाण्ड एवैनङ्क्रियमाणे

समर्द्धयति गायत्रीस्सर्वा अन्वाह गायत्रछन्दा वा अग्निस्स्वेनैवैनञ्छन्दसा समर्द्धयत्यग्निः पुरा भवत्यग्निम्मंथित्वा प्र हरति तौ संभवन्तौ यजमानमभि सं भवतो भवतन्नस्समनसावित्याह शान्त्यै प्रहृत्य जुहोति जातायैवाऽस्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियन्धाम यदाज्यं प्रियेणै-वैनन्धाम्ना समर्द्धयत्यथो तेजसा ॥ ३१ ॥ यजमानमाह वृषणौ जातायाऽनु ब्रूह्यप्यष्टादश च ॥ ५ ॥

इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजत उपवीरसीत्याहोप ह्येनानाकरोत्युपो देवान्दैवीर्विशः प्राऽगुरित्याह दैवीर्ह्येता विशस्सतीर्देवानुपयन्ति वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह बृहस्पते धारया वसूनीत्या- ॥ ३२ ॥ ह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवा-ऽस्मै पशूनव रुन्धे हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवाऽस्मै रमयति देवस्य त्वा सवितुः प्रसव इति ॥ ३३ ॥ रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहा-ऽश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्या ऋतस्य त्वा देवहविः पाशेनाऽऽ रभ इत्याह सत्यँव्वा ऋतꣳ सत्येनैवैनमृतेनाऽऽ रभतेऽक्ष्णया परि हरति वद्ध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै धर्षा मानुषानिति नि युनक्ति धृत्या अद्भ्य- ॥ ३४ ॥ स्त्वौषधीभ्यः प्रोक्षामीत्याहाऽद्भ्यो ह्येष ओषधीभ्यस्संभवति यत्पशुरपां पेरुरसीत्याहैष ह्यपां पाता यो मेधाया-ऽऽरभ्यते स्वात्तञ्चित्सदेवꣳ हव्यमापो देवीस्स्वदतैनमित्याह स्वदयत्यैवैनमुपरिष्टात्प्रोक्षत्युप-रिष्टादेवैनं मेद्ध्यं करोति पाययत्यन्तरत एवैनं मेद्ध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेद्ध्यं करोति ॥ ३५ ॥ वसूनीति प्रसव इत्यद्भ्योऽन्तरत एवैनन्दश च ॥ ६ ॥

अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिद्ध्यमानायाऽनु ब्रूहीत्याह भ्रातृव्याभिभूत्यै सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः प्रजापतेराप्त्यै सप्तदशाऽन्वाह द्वादश मासाः पञ्चर्तवस्स सँव्वथ्सरस्सँव्वथ्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय देवा वै सामिधेनीरनूच्य यज्ञन्नाऽन्व-पश्यन्थ्स प्रजापतिस्तूष्णीमाघार- ॥ ३६ ॥ माऽघारयत्ततो वै देवा यज्ञमन्वपश्यन् यत्तूष्णीमाघा-रमाघारयति यज्ञस्याऽनुख्यात्या असुरेषु वै यज्ञ आसीत्तन्देवास्तूष्णीꣳहोमेनाऽवृञ्जत यत्तूष्णीमा-घारमाघारयति भ्रातृव्यस्यैव तद्यज्ञँव्वृङ्क्ते परिधीन्थ्सं मार्ष्टि पुनात्येवैनान्त्रिस्त्रिस्सं मार्ष्टि त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सं पद्यन्ते द्वादश ॥ ३७ ॥ मासास्सँव्वथ्सरस्सँव्वथ्सरमेव प्रीणात्यथो सँव्वथ्सरमेवाऽस्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै शिरो वा एतद्यज्ञस्य यदाघा-रोऽग्निस्सर्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानस्सर्वा देवता अव रुन्धे शिरो व्रा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य पशुꣳ समनक्त्यात्मन्नेव यज्ञस्य ॥ ३८ ॥ शिरः प्रति दधाति सन्ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवाऽस्य प्राणञ्जुहोति सँय्यजत्रैरङ्गानि सँय्यज्ञपतिराशिषेत्याह यज्ञपतिमेवाऽस्याऽऽशिषङ्गमयति विश्वरूपो वै त्वाष्ट्र

उपरिष्टात्पशुमभ्यवमीत्तस्मादुपरिष्टात्पशोर्नाऽवं द्यन्ति यदुपरिष्टात्पशु॰ समनक्ति मेद्धमेवै- ॥ ३९ ॥ नंङ्करोत्यृत्विजों वृणीते छन्दा॑ᳪस्येव वृणीते सप्त वृणीते सप्त ग्राम्याः पशवस्सप्ताऽऽ- रण्यास्सप्त छन्दाᳪस्युभयस्याऽवरुद्ध्या एकादश प्रयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति वपामेकः परि शय आत्मैवाऽऽत्मानं परि शये वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतङ्खलु वै देवा वज्रङ्कृत्वा सोममघ्नन्घृतेनाऽक्तौ पशुन्त्रायेथामित्याह वज्रेणैवैनँव्वशे कृत्वाऽऽ लभते ॥ ४० ॥ आघारं पद्यन्ते द्वादशाऽऽत्मन्नेव यज्ञस्य मेद्धमेव खलु वा अष्टादश च ॥ ७ ॥

पर्यग्नि करोति सर्वहुतमेवैनङ्करोत्यस्कन्दायाऽस्कन्नᳪ हि तद्यद्धुतस्य स्कन्दति त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू(३)र्नाऽन्वारभ्या(३) इति मृत्यवे वा एष नीयते यत्पशुस्तयँदन्वारभेत प्रमायुको यजमानस्स्यादथो खल्वाहुस्सुवर्गाय वा एष लोकाय नीयते यत् ॥ ४१ ॥ पशुरिति यन्नाऽन्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत वपाश्रपणीभ्यामन्वारभते तन्नेवाऽन्वारब्धन्नेवाऽनन्वारब्धमुप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितᳪ हि कर्म क्रियते रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतेत्याह यथायजुरेवैतदग्निना पुरस्तादेति रक्षसामपह- त्यै पृथिव्यास्संपृचः पाहीति बर्हि- ॥ ४२ ॥ रुपाऽस्यत्यस्कन्दायाऽस्कन्नᳪ हि तद्यद्बर्हिषि स्कन्द- त्यथो बर्हिषदमेवैनङ्करोति पराङा वर्ततेऽद्ध्वर्युः पशोस्सँज्ञप्यमानात्पशुभ्य एव तन्नि ह्नुत आत्म- नोऽनाव्रस्काय गच्छति श्रियं प्र पशूनाप्नोति य एवँव्वेद पश्चाल्लोका वा एषा प्राच्युदानीयते यत्पत्नी नमस्त आतानेत्याहाऽऽदित्यस्य वै रश्मयः ॥ ४३ ॥ आतानास्तेभ्य एव नमस्करोत्यनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाऽऽ- शिषमेवैतामा शास्त आपो देवीश्शुद्धायुव इत्याह यथायजुरेवैतत् ॥ ४४ ॥ लोकाय नीयते यद्बर्हि रश्मयस्सप्तत्रिᳪशच्च ॥ ८ ॥

पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक्त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवाऽस्य शुचᳪ शमयति सा प्राणेभ्योऽधि पृथिवीᳪ शुक्प्रविशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव पृथिव्यै शुचᳪ शमयत्योषधे त्रायस्वैनᳪ स्वधिते मैनᳪ हिᳪसीरित्याह वज्रो वै स्वधिति- ॥ ४५ ॥ श्शान्त्यै पार्श्वत आच्छ्यति मद्ध्यतो हि मनुष्या आच्छ्यन्ति तिरश्चीनमा- च्छ्यत्यनूचीनᳪ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वा- ऽपाऽस्यत्यस्नैव रक्षाᳪसि निरवदयत इदमहᳪ रक्षोऽधमन्तमो नयामि योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव ॥ ४६ ॥ द्वेष्टि यश्चैनन्द्वेष्टि तावुभावधमन्तमो नयतीषे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो यजते यदुपतृन्द्याद्रुद्रोऽस्य पशून्घातुकस्स्याद्यन्नोपतृन्द्यादयता स्यादन्ययोपतृणत्त्यन्यया न धृत्यै घृतेन द्यावापृथिवी प्रोर्ण्वाथामित्याह द्यावापृथिवी एव रसेनाऽन- क्त्यच्छिन्नो ॥ ४७ ॥ रायस्सुवीर इत्याह यथायजुरेवैतत्क्रूरमिव वा एतत्करोति यद्वपामुत्खिदत्यु-

वैन्तरिक्षमन्विहीत्याह शान्त्यै प्र वा एषोऽस्माल्लोकाच्च्यवते यः पशुम्मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रति तिष्ठत्यग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येना- ॥ ४८ ॥ ऽन्वैति नाऽन्तममङ्गारमति हरेद्यदन्तममङ्गारमतिहरेद्देवता अति मन्येत वायो वीहि स्तोकानामित्याह तस्माद्विभक्तास्स्तोका अव पद्यन्तेऽग्रँव्वा एतत्पशूनाँय्यद्वपाऽग्रमोषधीनां बर्हिरग्रेणैवाऽग्रꣳ समर्द्धयत्यथो ओषधीष्वेव पशून्प्रति ष्ठापयति स्वाहाकृतीभ्यः प्रेष्येत्याह ॥ ४९ ॥ यज्ञस्य समिष्ट्यै प्राणापानौ वा एतौ पशूनाँय्यत्पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि घारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति स्वाहोर्द्ध्वनभसं मारुतङ्गच्छतमित्याहोर्द्ध्वनभा ह स्म वै मारुतो देवानाँव्वपाश्रपणी प्र हरति तेनैवैने प्र हरति विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ ॥ ५० ॥ स्वधितिश्चैवाऽच्छिन्नो हव्येनेष्येत्याह षट्चत्वारिꣳशच्च ॥ ९ ॥

पशुमालभ्य पुरोडाशन्निर्वपति समेधमेवैनमा लभते वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश ऊर्जमेव पशूनां मद्धयतो दधात्यथो पशोरेव छिद्रमपि दधाति पृषदाज्यस्योपहत्य त्रिः पृच्छति शृतꣳ हवी(३)श्शमितरिति त्रिषत्या हि देवा योऽशृतꣳ शृतमाह स एनसा प्राणापानौ वा एतौ पशूना- ॥ ५१ ॥ य्यत्पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभि समेति यत्पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति पशुना वै देवास्सुवर्गँल्लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति तस्य शिरश्छित्त्वा मेधं प्राऽक्षारयन्थ्स प्रक्षोऽभवत्तत्प्रक्षस्य प्रक्षत्वँय्यत्प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव ॥ ५२ ॥ पशोरव द्यति पशुँव्वै ह्रियमाणꣳ रक्षाꣳस्यनु सचन्तेऽन्तरा यूपञ्चाऽऽहवनीयञ्च हरति रक्षसामपहत्यै पशोर्वा आलब्धस्य मनोऽप क्रामति मनोतायै हविषोऽवदीयमानस्याऽनु ब्रूहीत्याह मन एवाऽस्याऽव रुन्ध एकादशाऽवदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याऽव ॥ ५३ ॥ द्यति हृदयस्याऽग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाऽभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वँय्यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवाऽस्य पशोरवत्तं भवति मद्धयतो गुदस्याऽव द्यति मद्धयतो हि प्राण उत्तमस्याऽव द्यत्यु- ॥ ५४ ॥ त्तमो हि प्राणो यदीतरँय्यदीतरमुभयमेवाऽजामि जायमानो वै ब्राह्मणस्त्रिभिरृणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाऽव दयते तदवदानानामवदानत्वन्देवासुरास्सँय्यत्ता आसन्ते देवा अग्निमब्रुवन्त्वया वीरेणाऽसुरानभि भवामेति ॥ ५५ ॥ सोऽब्रवीद्वरँव्वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्द्धस्य गुदं मद्धयतश्श्रोणिञ्जघनार्द्धस्य ततो देवा अभवन्पराऽसुरा यत्त्र्यङ्गाणाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यक्ष्णयाऽव द्यति तस्मादक्ष्णया पशवो-

ऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै ॥ ५६ ॥ एतौ पशूनाꣳ समेधस्यैव तस्याऽवौत्तमस्याऽवं द्यतीति पञ्चचत्वारिꣳशच्च ॥ १० ॥

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति यूषन्नवधाय प्रोर्णोति रसो वा एष पशूनाँय्यद्यू रसमेव पशुषु दधाति पार्श्वेन वसाहोमं प्र यौति मद्ध्यँव्वा एतत्पशूनाँय्यत्पार्श्वꣳ रस एष पशूनाँय्यद्वसा यत्पार्श्वेन वसाहोमं प्रयौति मद्ध्यत एव पशूनाꣳ रसन्दधाति घ्नन्ति ॥ ५७ ॥ वा एतत्पशुँय्यथ्सँज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः प्राणो अङ्गेअङ्गे नि देद्ध्यदित्याह प्राणापानावेव पशुषु दधाति देव त्वष्टर्भूरि ते सꣳसमेत्वित्याह त्वाष्ट्रा हि देवतया पशवो विषुरूपा यथ्सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तस्सलक्ष्माण एतर्हि भवन्ति देवत्रा यन्त- ॥ ५८ ॥ मवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहाऽनुमतमेवैनं मात्रा पित्रा सुवर्गँल्लोकङ्गमयत्यर्द्धर्चे वसाहोमञ्जुहोत्यसौ वा अर्द्धर्च इयमर्द्धर्च इमे एव रसेनाऽनक्ति दिशो जुहोति दिश एव रसेनाऽनक्त्यथो दिग्भ्य एवोर्जꣳ रसमव रुन्धे प्राणापानौ वा एतौ पशूनाँय्यत्पृषदाज्यँव्वानस्पत्याः खलु ॥ ५९ ॥ वै देवतया पशवो यत्पृषदाज्यस्योपहत्याऽऽह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधात्यन्यस्यान्यस्य समवत्तꣳ समवद्यति तस्मान्नानारूपाः पशवो यूष्णोप सिञ्चति रसो वा एष पशूनाँय्यद्यू रसमेव पशुषु दधातीडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते ॥ ६० ॥ चतुष्पादो हि पशवो यङ्कामयेताऽपशुस्स्यादित्यमेदस्कन्तस्मा आ दद्ध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति यङ्कामयेत पशुमान्थ्स्यादिति मेदस्वत्तस्मा आ दद्ध्यान्मेदोरूपा वै पशवो रूपेणैवाऽस्मै पशूनव रुन्धे पशुमानेव भवति प्रजापतिर्यज्ञमसृजत स आज्यं ॥ ६१ ॥ पुरस्तादसृजत पशुं मद्ध्यतः पृषदाज्यं पश्चात्तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मद्ध्यतः पृषदाज्येनाऽनूयाजास्तस्मादेतन्मिश्रमिव पश्चाथ्सृष्टꣳ ह्येकादशाऽनूयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति घ्नन्ति वा एतत्पशुँय्यथ्सँज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनाँय्यत्पृषदाज्यँय्यत्पृषदाज्येनाऽनूयाजान् यजति प्राणापानावेव पशुषु दधाति ॥ ६२ ॥ घ्नन्ति यन्तङ्खलु चतुरुप ह्वयत आज्यँय्यत्पृषदाज्येन षट्च ॥ ११ ॥

चात्वालाथ्सुवर्गाय यद्वैसर्जनानि वैष्णव्यर्चा पृथिव्यै साद्ध्या इषे त्वेत्यग्निना पर्यग्नि पशोः पशुमालभ्य मेदसा स्रुचावेकादश ॥ ११ ॥ चात्वालाद्देवानुपैति मुञ्चति प्रह्रियमाणाय पर्यग्नि पशुमालभ्य चतुष्पादो द्विषष्टिः ॥ ६२ ॥ चात्वालात्पशुषु दधाति ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे तृतीयः प्रश्नस्समाप्तः ॥

ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ षष्ठकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवाऽसृजत यदुपयज उपयजति प्रजा एव तद्यजमानस्सृजते जघनार्द्धादव द्यति जघनार्द्धाद्धि प्रजाः प्रजायन्ते स्थविमतोऽव द्यति स्थविमतो हि प्रजाः प्रजायन्तेऽसम्भिन्दन्नव द्यति प्राणानामसम्भेदाय न पर्यावर्तयति यत्पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकस्स्यात्समुद्रङ्गच्छ स्वाहेत्याह रेत ॥ १ ॥ एव तद्दधात्यन्तरिक्षङ्गच्छ स्वाहेत्याहाऽन्तरिक्षेणैवाऽस्मै प्रजाः प्र जनयत्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते देवꣳ सवितारङ्गच्छ स्वाहेत्याह सवितृप्रसूत एवाऽस्मै प्रजाः प्र जनयत्यहोरात्रे गच्छ स्वाहेत्याहाऽहोरात्राभ्यामेवाऽस्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते मित्रावरुणौ गच्छ स्वाहे- ॥ २ ॥ त्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति सोमङ्गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजा यज्ञङ्गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति छन्दाꣳसि गच्छ स्वाहेत्याह पशवो वै छन्दाꣳसि पशूनेवाऽव रुन्धे द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति नभो ॥ ३ ॥ दिव्यङ्गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिन्नि यच्छत्यग्निं वैश्वानरङ्गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति प्राणानाँव्वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदयशूल- ॥ ४ ॥ मभि समेति यत्पृथिव्याꣳ हृदयशूलमुद्वासयेत्पृथिवीꣳ शुचाऽर्पयेद्यदप्स्वपश्शुचाऽर्पयेच्छुष्कस्य चाऽऽर्द्रस्य च सन्धावुद्वासयत्युभयस्य शान्त्यै यन्द्विष्यात्तन्ध्यायेच्छुचैवैनमर्पयति ॥ ५ ॥ रेतो मित्रावरुणौ गच्छ स्वाहा नभो हृदयशूलन्द्वात्रिꣳशच्च ॥ १ ॥

देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन्वसतु नु न इदमिति तद्वसतीवरीणाँव्वसतीवरित्वन्तस्मिन्प्रातर्न समशक्नुवन्तदप्सु प्राऽवेशयन्ता वसतीवरीरभवन्वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवाऽऽरभ्य गृहीत्वोप वसति यस्याऽगृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञस्स्या- ॥ ६ ॥ द्यज्ञँव्वि च्छिन्द्याज्ज्योतिष्या वा गृह्णीयाद्धिरण्यँव्वाऽवधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानाङ्गृह्णीयात्स हि गृहीतवसतीवरीको वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवाऽऽरभ्य गृहीत्वोप वसति यदन्वीपन्तिष्ठन्गृह्णीयान्निर्मार्गुका

अस्मात्पशवस्स्युः प्रतीपन्तिष्ठन्गृह्णाति प्रतिरुद्ध्यैवाऽस्मै पशून्गृह्णातीन्द्रो ॥ ७ ॥ वृत्रमहन्थ्सोऽ-(१)पोऽ(१)भ्यम्रियत तासाय्यन्मेद्ध्यय्यज्ञियय्सदेवमासीत्तदत्यमुच्यत ता वहन्तीरभवन्वहन्ती-नाङ्गृह्णाति या एव मेद्ध्या यज्ञियास्सदेवा आपस्तासामेव गृह्णाति नाऽन्तमा वहन्तीरतीयाद्यद-न्तमा वहन्तीरतीयाद्यज्ञमतिं मन्येत न स्थावराणाङ्गृह्णीयाद्वरुणगृहीता वै स्थावरा यथ्स्थावराणाङ्गृ-ह्णीया- ॥ ८ ॥ द्वरुणेनाऽस्य यज्ञङ्ग्राहयेद्यद्वै दिवा भवन्त्यपो रात्रिः प्र विशति तस्मात्ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवन्त्यपोऽहः प्र विशति तस्माच्चन्द्रा आपो नक्तन्ददृश्रे छायायै चाऽऽतपतश्च सन्धौ गृह्णात्यहोरात्रयोरेवाऽस्मै वर्णङ्गृह्णाति हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति हविष्माय् अस्तु ॥ ९ ॥ सूर्य इत्याह सशुक्राणामेव गृह्णात्यनुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वा-चैवैनास्सर्वया गृह्णाति चतुष्पदयर्चा गृह्णाति त्रिस्सादयति सप्त सं पद्यन्ते सप्तपदा शक्वरी पशवश्शक्वरी पशूनेवाऽव रुन्धेऽस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्थ्स्याद्यदाहवनीयेऽमुष्मि- ॥ १० ॥ ल्ँलोके पशुमान्थ्स्यादुभयोरुप सादयत्युभयोरेवैनँल्लोकयोः पशुमन्तङ्करोति सर्वतः परि हरति रक्षसामपहत्या इन्द्राग्नियोर्भागधे-यीस्स्थेत्याह यथायजुरेवैतदाग्नीध्र उप वासयत्येतद्वै यज्ञस्याऽपराजितय्यदाग्नीध्रय्यदेव यज्ञस्याऽ-पराजितन्तदेवैना उप वासयति यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञय् रक्षाय्स्यव चरन्ति यद्वहन्तीनाङ्गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय न ह्येता ईलयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य सन्तत्यै ॥ ११ ॥ स्यादिन्द्रो गृह्णीयादस्त्वमुष्मिन्क्रियते षड्विय्शतिश्च ॥ २ ॥

ब्रह्मवादिनो वदन्ति स त्वा अद्ध्वर्युस्स्याद्यस्सोममुपावहरन्थ्सर्वाभ्यो देवताभ्य उपाव-हरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनय् सर्वाभ्य उपावहरति पुरा वाचः ॥ १२ ॥ प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक्तामव रुन्धेऽपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाऽभि वाचव्वँि सृजति सर्वाणि छन्दाय्स्यन्वाह पशवो वै छन्दाय्सि पशूनेवाऽव रुन्धे गायत्रिया तेजस्कामस्य परि दद्ध्यात्त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्याऽनुष्टुभा प्रतिष्ठाकाम-स्य पङ्क्त्या यज्ञकामस्य विराजाऽन्नकामस्य शृणोत्वग्निस्समिधा हवं ॥ १३ ॥ म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्याऽपोऽच्छैत्यप इष्य होतरित्याहेषितय् हि कर्म क्रियते मैत्रावरुणस्य चमसा-द्ध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपान्नेतारौ ताभ्यामेवैना अच्छैति देवीरापो अपान्नपादित्याहा-ऽऽहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाऽभिघृतानाङ्गृह्णाति ॥ १४ ॥ कार्षिरसीत्याह शमलमेवाऽऽसामप प्लावयति समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्माद्द्यमानाः पीयमाना आपो न क्षीयन्ते योनिर्वै यज्ञस्य चात्वालय्यज्ञो वसतीवरीर्होतृचमसञ्च मैत्रावरुणचमसञ्च सय्स्पर्श्य

वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाऽथो स्वादेवैना योनेः प्र जनयत्यध्वर्योऽवैरपा(३)
इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाह यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि
यद्यतिरात्रो यजुर्वदन्प्र पद्यते यज्ञक्रतूनाँव्यावृत्त्यै ॥ १५ ॥ वाचो हवमभिघृतानाङ्गृह्णात्युत पञ्चविꣳशतिश्च
॥ ३ ॥

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाऽश्विनौ हि
देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै पशवो वै सोमो व्यान उपाꣳशुसवनो
यदुपाꣳशुसवनमभि मिमीते व्यानमेव पशुषु दधातीन्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम
आह्रियते पञ्च कृत्वो यजुषा मिमीते ॥ १६ ॥ पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे पञ्च
कृत्वस्तूष्णीन्दश सं पद्यन्ते दशाक्षरा विराडन्नँविराड्विराजैवाऽन्नाद्यमव रुन्धे श्वात्रास्थ वृत्रतुर
इत्याहैष वा अपाꣳ सोमपीथो य एवँवेद नाऽप्स्वार्तिमार्च्छति यत्ते सोम दिवि ज्योतिरित्याहैभ्य
एवैन- ॥ १७ ॥ ल्लोकेभ्यस्सं भरति सोमो वै राजा दिशोऽभ्यध्यायत्स दिशोऽनु प्राऽविशत्प्राग-
पागुदगधरागित्याह दिग्भ्य एवैनꣳ सं भरत्यथो दिश एवाऽस्मा अव रुन्धेऽम्ब नि ष्वरेत्याह
कामुका एनꣳ स्त्रियो भवन्ति य एवँवेद यत्ते सोमाऽदाभ्यन्नाम जागृवीत्या- ॥ १८ ॥ हैष वै
सोमस्य सोमपीथो य एवँवेद न सौम्यामार्तिमार्च्छति घ्नन्ति वा एतत्सोमय्यदभिषुण्वन्त्यꣳशूनप
गृह्णाति त्रायत एवैनं प्राणा वा अꣳशवः पशवस्सोमोऽꣳशून्पुनरपि सृजति प्राणानेव पशुषु दधाति
द्वौद्वावपि सृजति तस्माद्द्वौद्वौ प्राणाः ॥ १९ ॥ यजुषा मिमीत एनञ्जागृवीति चतुश्चत्वारिꣳशच्च ॥ ४ ॥

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्वग्रा ग्रहा गृह्यन्ते प्राणमेवाऽनु प्र यन्त्यरुणो ह स्माऽऽहौ-
पवेशिः प्रातस्सवन एवाऽहय्यँज्ञꣳ सꣳ स्थापयामि तेन ततस्सꣳस्थितेन चरामीत्यष्टौ कृत्वोऽग्रेऽभि
षुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातस्सवनं प्रातस्सवनमेव तेनाऽऽप्नोत्येकादश कृत्वो द्वितीयमे-
कादशाक्षरा त्रिष्टुप्त्रैष्टुभं माध्यन्दिनꣳ ॥ २० ॥ सवनं माध्यन्दिनमेव सवनन्तेनाऽऽप्नोति द्वादश
कृत्वस्तृतीयन्द्वादशाक्षरा जगती जागतन्तृतीयसवनन्तृतीयसवनमेव तेनाऽऽप्नोत्येताꣳ ह वाव स
यज्ञस्य सꣳस्थितिमुवाचाऽस्कन्दायाऽस्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दत्यथो खल्वाहुर्गा-
यत्री वाव प्रातस्सवने नाऽतिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवँवेद तस्मादष्टावष्टौ
॥ २१ ॥ कृत्वोऽभिषुत्यं ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किम्पवित्र उपाꣳशुरिति
वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं पवयति वृष्णो अꣳशुभ्यामित्याह
वृष्णो ह्येतावꣳशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पवयति देवो देवानां
पवित्रमसीत्याह देवो ह्येष ॥ २२ ॥ सन्देवानां पवित्रय्येषां भागोऽसि तेभ्यस्त्वेत्याह येषाꣳ ह्येष
भागस्तेभ्य एनङ्गृह्णाति स्वाङ्कृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमे-
वाऽस्मा इदꣳ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु

प्राणान्दधाति मनस्त्वा- ॥ २३ ॥ ऽष्वित्याह मन एवाऽश्नुत उर्वन्तरिक्षमन्विहीत्याहाऽन्तरि-
क्षदेवत्यो हि प्राणस्स्वाहा त्वा सुभवस्सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षञ्जुहोति
देवेभ्यस्त्वा मरीचिपेभ्य इत्याहाऽऽदित्यस्य वै रश्मयो देवा मरीचिपास्तेषान्तद्भागधेयन्तानेव तेन
प्रीणाति यदि कामयेत वर्षुकः पर्जन्य- ॥ २४ ॥ स्स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि
यच्छति यदि कामयेताऽवर्षुकस्स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति यद्यभिचरेदमुष्य त्वा
होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन् हन्ति यदि दूरे स्यादा तमितोस्तिष्ठेत्प्राणमेवाऽस्याऽनुगत्य
हन्ति यद्यभिचरेदमुष्य ॥ २५ ॥ त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवाऽस्य
सादयति षड्भिरꣳशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति त्रिः पवयति त्रय इमे लोका
एभिरेवैनंल्लोकैः पवयति ब्रह्मवादिनो वदन्ति कस्माꣳथ्सत्यात्त्रयः पशूनाꣳ हस्तादाना इति
यत्त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्मात्त्रयः पशूनाꣳ हस्तादानाः पुरुषो हस्ती मर्कटः ॥ २६ ॥
माद्ध्यन्दिनमष्टावष्टावेष मनस्त्वा पर्जन्योऽमुष्य पुरुषो द्वे च ॥ ५ ॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपाꣳशौ यज्ञꣳ सꣳस्थाप्यमपश्यन्तमुपाꣳशौ
समस्थापयन्तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाऽधावन्तानिन्द्रोऽन्तर्यामे-
णाऽन्तरधत्त तदन्तर्यामस्याऽन्तर्यामत्वँय्यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्द्धत्तेऽन्तस्ते
॥ २७ ॥ दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्द्धत्ते ते
देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन्मघवन्ननु न आ भजेति सजोषा देवैरवरैः
परैश्चेत्यब्रवीद्ये चैव देवाः परे ये चाऽवरे तानुभया- ॥ २८ ॥ नन्वाभजथ्सजोषा देवैरवरैः परैश्चे-
त्याह ये चैव देवाः परे ये चाऽवरे तानुभयानन्वाभजत्यन्तर्यामे मघवन्मादयस्वेत्याह यज्ञादेव यज-
मानन्नाऽन्तरेत्युपयामगृहीतोऽसीत्याहाऽपानस्य धृत्यै यदुभावपवित्रौ गृह्येयाताम्प्राणमपानोऽनु
न्यृच्छेत्प्रमायुकस्स्यात्पवित्रवानन्तर्यामो गृह्यते ॥ २९ ॥ प्राणापानयोर्विधृत्यै प्राणापानौ वा एतौ
यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यङ्कामयेत प्रमायुकस्स्यादित्यसꣳस्पृष्टौ तस्य सादयेद्व्याने-
नैवाऽस्य प्राणापानौ वि च्छिनत्ति ताजक्प्र मीयते यङ्कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य
सादयेद्व्यानेनैवाऽस्य प्राणापानौ सन्तनोति सर्वमायुरेति ॥ ३० ॥ त उभयान्गृह्यते चतुश्चत्वारिꣳशच्च
॥ ६ ॥

वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवाऽनु प्र यन्ति वायुन्देवा
अब्रुवन्थ्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरँवृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्र-
वायवाग्रा ग्रहा गृह्यन्ते तमघ्नन्थ्सोऽपूयत्तन्देवा नोपाऽधृष्णुवन्ते वायुमब्रुवन्निममन्नस्स्वदये-॥ ३१ ॥
ति सोऽब्रवीद्वरँवृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्या-
न्युच्यन्ते तमेभ्यो वायुरेवाऽस्वदयत्तस्मादत्पूयति तत्प्रवाते वि षजन्ति वायुर्हि तस्य पवयिता

स्वदयिता तस्य विग्रहणन्नाऽविन्दन्त्साऽदितिरब्रवीद्वरँव्वृणा अथ मया वि गृह्णीद्ध्वम्मद्देवत्या एव वस्सोमा- ॥ ३२ ॥ स्सन्ना असन्नित्युपयामगृहीतोऽसीत्याहाऽदितिदेवत्यास्तेन यानि हि दारुमयाणि पात्राण्यस्यै तानि योनेस्संभूतानि यानि मृन्मयानि साक्षात्तान्यस्यै तस्मादेवमाह वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमान्नो वाचँव्व्याकुर्विति सोऽब्रवीद्वरँव्वृणै मह्यञ्चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवस्सह गृह्यते तामिन्द्रो मद्ध्यतोऽवक्रम्य व्याकरोत्तस्मादियँव्व्याकृता वागुद्यते तस्मात्सकृदिन्द्राय मद्ध्यतो गृह्यते द्विर्वायवे द्वौ हि स वराववृणीत ॥ ३३ ॥ स्वदय सोमास्सहाऽष्टाविꣳशतिश्च ॥ ७ ॥

मित्रन्देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाऽहꣳ सर्वस्य वा अहं मित्रमस्मीति तमब्रुवन् हनामैवेति सोऽब्रवीद्वरँव्वृणै पयसैव मे सोमꣳ श्रीणन्निति तस्मान्मैत्रावरुणं पयसा श्रीणन्ति तस्मात्पशवोऽपाऽक्रामन्मित्रस्सन्क्रूरमकरिति क्रूरमिव खलु वा एष ॥ ३४ ॥ करोति यस्सोमेन यजते तस्मात्पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्द्धयति पशुभिर्यजमानं पुरा खलु वावैवं मित्रोऽवेदप मत्क्रूरञ्चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत वरुणन्देवा अब्रुवन्त्वयाऽꣳशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरँव्वृणै मह्यञ्चै- ॥ ३५ ॥ वैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणस्सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रन्न वा इदन्दिवा न नक्तमासीदव्यावृत्तन्ते देवा मित्रावरुणावब्रुवन्निदन्नो विवासयतमिति तावब्रूताँव्वरँव्वृणावहा एक एवाऽऽवत्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ मित्रोऽहरजनयद्वरुणो रात्रिन्ततो वा इदँव्व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै ॥ ३६ ॥ एष ऐन्द्रवायवो द्वाविꣳशतिश्च ॥ ८ ॥

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदँय्यज्ञस्य शिरः प्रति धत्तमिति तावब्रूताँव्वरँव्वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन्ततो वै तौ यज्ञस्य शिरः प्रत्यधत्ताँय्यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ ॥ ३७ ॥ भिषजाविति तस्माद्ब्राह्मणेन भेषजन्न कार्यमपूतो ह्येष(१)षोऽमेद्ध्यो यो भिषक्तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्मादेवँव्विदुषा बहिष्पवमान उपसद्यः पवित्रँव्वै बहिष्पवमान आत्मानमेव पवयते तयोस्त्रेधा भैषज्यँव्वि न्यदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयन्तस्मादुदपात्र- ॥ ३८ ॥ मुपनिधाय ब्राह्मणन्दक्षिणतो निषाद्य भेषजङ्कुर्याद्यावदेव भेषजन्तेन करोति समर्द्धुकमस्य कृतं भवति ब्रह्मवादिनो वदन्ति कस्मात्सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ बहिष्टात्प्राणाः प्राणा वा एते यद्द्विदेवत्याः पशव इडा यदिडां पूर्वान्द्विदेवत्येभ्य उपह्वयेत ॥ ३९ ॥ पशुभिः प्राणानन्तर्दधीत

प्रमायुकस्स्याद्द्विदेवत्यान्भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन्धित्वा पशूनुप ह्वयते वाग्वा ऐन्द्र-वायवश्चक्षुर्मैत्रावरुणश्श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात्पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणन्तस्मात्पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनन्तस्माथ्सर्वतश्श्रोत्रेण शृणोति प्राणा वा एते यद्द्विदेवत्याः ॥ ४० ॥ अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय दक्षिणस्य हविर्धानस्योत्तर-स्यांव्वर्तन्याꣳ सादयति वाच्येव वाचन्दधात्या तृतीयसवनात्परि शेरे यज्ञस्य सन्तत्यै ॥ ४१ ॥

मनुष्यचरावुदपात्रमुपह्वयेत द्विदेवत्याꣳष्षट्चत्वारिꣳशच्च ॥ ९ ॥

बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तो-ऽसुरास्तेऽ(१)न्योऽन्यन्नाऽशक्नुवन्नभिभवितुन्ते देवाश्शण्डामर्कावुपाऽमन्त्रयन्त तावब्रूतांव्वरंव्वृ-णावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो देवा अभवन्पराऽसुरा यस्यैवंव्विदुषश्शुक्रामन्थिनौ गृह्येते भवत्यात्मना परा- ॥ ४२ ॥ ऽस्य भ्रातृव्यो भवति तौ देवा अपनुद्याऽऽत्मन इन्द्रायाऽजुहवुरपनुत्तौ शण्डामर्कौ सहाऽमुनेति ब्रूयाद्यन्द्विष्यादयमेव द्वेष्टि तेनैनौ सहाऽप नुदते स प्रथमस्सङ्कृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाऽजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरदसौ वा आदित्यश्शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ नि- ॥ ४३ ॥ ष्क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पश्यन्ति प्रत्यञ्चावावृत्य जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकाञ्चक्षुषी तस्मा-न्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्रा- ॥ ४४ ॥ ऽणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ता-भिरपाऽनुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते शुक्रामन्थिनौ वा अनु प्रजाः प्र जायन्तेऽत्त्रीश्चाऽऽद्याश्च सुवीराः प्रजाः प्रजनयन्परीहि शुक्रश्शुक्रशोचिषा ॥ ४५ ॥ सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अत्त्रीरेतास्सुप्रजा या आद्या य एवंव्वे-दाऽत्त्र्यस्य प्रजा जायते नाऽऽद्या प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तद्विकङ्कतं प्राऽविशत्तद्विकङ्कते नाऽरमत तद्यवं प्राऽविशत्तद्यवेऽरमत तद्यवस्य ॥ ४६ ॥ यवत्वय्यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिश्श्रीणाति प्रजापतेरेव तच्चक्षुस्सं भरति ब्रह्मवादिनो वदन्ति कस्माथ्सत्यान्मन्थिपात्रꣳ सदो नाऽश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीताऽन्धोऽध्वर्युस्स्यादार्तिमार्च्छेत्तस्मान्नाऽश्नुते ॥ ४७ ॥ आत्मना परा निष्प्र शुक्रशोचिषा यवस्य सप्तत्रिꣳशच्च ॥ १० ॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आँग्रयणाग्रान्ग्रहानपश्यन्तानगृह्णत ततो वै तेऽग्रं पर्यायन् यस्यैववँविदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्यैति रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाऽग्रꣳ समानानां पर्यैति ये देवा दिव्येकादश स्थेत्याहै-
॥ ४८ ॥ तावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया वाग्वै देवेभ्योऽपाऽक्रामद्यज्ञायाऽतिष्ठमाना ते देवा वाच्यपक्रान्तायान्तूष्णी-ङ्ग्रहानगृह्णत साऽमन्यत वागन्तर्यन्ति वै मेति साऽऽग्रयणं प्रत्याऽगच्छत्तदाग्रयणस्याऽऽग्रयणत्व-
॥ ४९ ॥ न्तस्मादाग्रयणे वाग्वि सृज्यते यत्तूष्णीं पूर्वे ग्रहा गृह्यन्ते यथा त्सारीयति म आख इयति नाऽप राथ्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणङ्गृहीत्वा यज्ञमारभ्य वाचवँवि सृजते त्रिर्हिङ्करोत्युद्गातॄनेव तद्वृणीते प्रजापतिर्वा एष यदाग्रयणो यदाग्रयणङ्गृहीत्वा हिङ्करोति प्रजापतिरेव
॥ ५० ॥ तत्प्रजा अभि जिघ्रति तस्माद्वथ्सञ्जातङ्गौरभि जिघ्रत्यात्मा वा एष यज्ञस्य यदाग्रयण-स्सवनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञꣳ सन्तनोत्युपरिष्टादा नयति रेत एव तद्दधात्यधस्तादुप गृह्णा-ति प्र जनयत्येव तद्ब्रह्मवादिनो वदन्ति कस्माथ्सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती सर्वाणि सवनानि वहतीत्येष वै गायत्रियै वथ्सो यदाग्रयणस्तमेव तदभिनिवर्तꣳ सर्वाणि सवनानि वहति तस्माद्वथ्समुपाकृतङ्गौरभि नि वर्तते ॥ ५१ ॥ आहाऽऽग्रयणत्वं प्रजापतिरेवेति विꣳशतिश्च ॥ ११ ॥

यज्ञेन ता उपयड्भिर्देवा वै यज्ञमाग्नीद्ध्रे ब्रह्मवादिनस्स त्वै देवस्य ग्रावाणं प्राणो वा उपाꣳशवग्रा देवा वा उपाꣳशौ वाग्वै मित्रꣳयज्ञस्य बृहस्पतिर्देवा वा आग्रयणाग्रानेकादश ॥ ११ ॥ यज्ञेन लोके पशुमान्थ्स्याथ्सवनं माद्ध्यन्दिनवँवाग्वा अरिक्तानि तत्प्रजा एकपञ्चाशत् ॥ ५१ ॥ यज्ञेन नि वर्तते ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

### ॥ षष्ठकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

इन्द्रो वृत्राय वज्रमुदयच्छथ्स वृत्रो वज्रादुद्यतादबिभेथ्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यन्तत्ते प्र दास्यामीति तस्मा उक्थ्यं प्राऽयच्छत्तस्मै द्वितीयमुदयच्छथ्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यन्तत्ते प्र दास्यामीति ॥ १ ॥ तस्मा उक्थ्यमेव प्राऽयच्छत्तस्मै तृतीयमुदयच्छत्तवँविष्णु-

रन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यन्तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव प्राऽयच्छत्तन्निर्मीयं भूतमहन् यज्ञो हि तस्य मायाऽऽसीद्यदुक्थ्यो गृह्यत इन्द्रियमेव ॥ २ ॥ तद्वीर्यंय्यँजमानो भ्रातृव्यस्य वृङ्क्त इन्द्राय त्वा बृहद्वते वयस्वत इत्याहेन्द्राय हि स तं प्राऽयच्छत्तस्मै त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति त्रिर्निर्गृह्णाति त्रिर्हि स तन्तस्मै प्राऽयच्छदेष ते योनिः पुनर्हविरसीत्याह पुनःपुन- ॥ ३ ॥ र्ह्यस्मान्निर्गृह्णाति चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकँय्यन्तं बहवोऽनु यन्ति तस्मादेको बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते यदि कामयेताऽध्वर्युरात्मानँय्यँज्ञयशसेनाऽर्पयेयमित्यन्तराऽऽहवनीयञ्च हविर्धानञ्च तिष्ठन्नव नये- ॥ ४ ॥ दात्मानमेव यज्ञयशसेनाऽर्पयति यदि कामयेत यजमानँय्यँज्ञयशसेनाऽर्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनाऽर्पयति यदि कामयेत सदस्यान् यज्ञयशसेनाऽर्पयेयमिति सद आलभ्याऽव नयेथ्सदस्यानेव यज्ञयशसेनाऽर्पयति ॥ ५ ॥ इतीन्द्रियमेव पुनःपुनर्नयेत्त्रयस्त्रिꣳशच्च ॥ १ ॥

आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो ग्रहाणाङ्गृह्यते तस्मादायुः प्राणानामुत्तमं मूर्धानन्दिवो अरतिं पृथिव्या इत्याह मूर्धानमेवैनꣳ समानानाङ्करोति वैश्वानरमृताय जातमग्निमित्याह वैश्वानरꣳ हि देवतयाऽऽयुरुभयतोवैश्वानरो गृह्यते तस्मादुभयतः प्राणा अधस्ताच्चोपरिष्टाच्चाऽर्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी द्ध्रुवस्तस्मा- ॥ ६ ॥ दर्धवाङ्प्राणोऽन्येषां प्राणानामुपोप्तेऽन्ये ग्रहास्साद्यन्तेऽनुपोप्ते द्ध्रुवस्तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति माꣳसेनाऽन्या असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन्तान्देवा द्ध्रुवेणाऽदृꣳहन्तद्ध्रुवस्य द्ध्रुवत्वँय्यद्ध्रुव उत्तरतस्साद्यते धृत्या आयुर्वा एतद्यज्ञस्य यद्ध्रुव आत्मा होता यद्धोतृचमसे द्ध्रुवमवनयत्यात्मन्नेव यज्ञस्या- ॥ ७ ॥ ऽऽयुर्दधाति पुरस्तादुक्थस्याऽवनीय इत्याहुः पुरस्ताद्ध्यायुषो भुङ्क्ते मद्ध्यतोऽवनीय इत्याहुर्मद्ध्यमेन ह्यायुषो भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुषो भुङ्क्ते वैश्वदेव्यामृचि शस्यमानायामव नयति वैश्वदेव्यो वै प्रजाः प्रजास्वेवाऽऽयुर्दधाति ॥ ८ ॥ ध्रुवस्तस्मादेव यज्ञस्यैकान्न चत्वारिꣳशच्च ॥ २ ॥

यज्ञेन वै देवास्सुवर्गँल्लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते सँव्वथ्सरेण योपयित्वा सुवर्गँल्लोकमायन्तमृषय ऋतुग्रहैरेवाऽनु प्राऽजानन् यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै द्वादश गृह्यन्ते द्वादश मासास्सँव्वथ्सरस्सँव्वथ्सरस्य प्रज्ञात्यै सह प्रथमौ गृह्येते सहोत्तमौ तस्माद्द्वौद्वावृतू उभयतोमुखमृतुपात्रं भवति को ॥ ९ ॥ हि तद्वेद यत ऋतूनां मुखमृतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून्प्रीणाति द्विः पुनर्ऋतुनाऽऽह द्विपद एव प्रीणात्यृतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुप जीवन्ति द्विः ॥ १० ॥ पुनर्ऋतुनाऽऽह तस्माद्द्विपादश्चतुष्पदः पशूनुप जीवन्त्यृतुना प्रेष्येति

षट्कृत्व आहर्तुभिरिति चतुर्द्धिः पुनर्रृतुनाऽऽहाऽऽक्रमणमेव तथ्सेतुँय्यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै नाऽन्योँऽन्यमनु प्र पद्येत यदन्योँऽन्यमनुप्रपद्येतर्तुरृतुमनु प्र पद्येतर्तवो मोहुका- स्स्युः ॥ ११ ॥ प्रसिद्धमेवाऽध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण तस्मादादि- त्यष्षण्मासो दक्षिणेनैति षडुत्तरेणोपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहाऽस्ति त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणाति ॥ १२ ॥ को जीवन्ति द्विस्स्युश्चतुस्त्रिꣳशच्च ॥ ३ ॥

सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवाऽस्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्याऽनुख्यात्या ओजोभृतौ वा एतौ देवानाँय्य- दिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवाऽव रुन्धे वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यश्शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्य- ॥ १३ ॥ स्सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजश्शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति ॥ १४ ॥ तस्मादसावा- दित्यस्त्रिꣳशच्च ॥ ४ ॥

इन्द्रो मरुद्भिस्साँविद्येन माध्यन्दिने सवने वृत्रमहन्यन्माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते तस्य वृत्रञ्जघुष ऋतवोऽमुह्यन्थ्स ऋतुपात्रेण मरुत्व- तीयानगृह्णात्ततो वै स ऋतून्प्राऽजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै वज्रँवा एत- द्यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन ॥ १५ ॥ यच्छति प्र हरति द्वितीयेन स्तृणुते तृतीयेनाऽऽयुधँवा एतद्यजमानस्सꣳस्कुरुते यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः प्रत्येव प्रथमेन धत्ते वि सृजति द्वितीयेन विध्यति तृतीयेनेन्द्रो वृत्रꣳ हत्वा परां परा- वतमगच्छदपाऽराधमिति मन्यमानस्स हरितोऽभवथ्स एतान्मरुत्वतीयानात्मस्परणानपश्यत्तान- गृह्णीत ॥ १६ ॥ प्राणमेव प्रथमेनाऽस्पृणुताऽपानन्द्वितीयेनाऽऽत्मानन्तृतीयेनाऽऽत्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानन्द्वितीयेनाऽऽत्मानन्तृतीयेनेन्द्रो वृत्रमहन्तन्देवा अब्रुवन्महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वाऽन्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तँय्यजमान उद्धरतेऽन्यासु प्रजास्वधि शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजश्शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति ॥ १७ ॥ प्रथमेनाऽगृह्णीत देवतास्वष्टाविꣳशतिश्च ॥ ५ ॥

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत्प्राऽऽश्नाथ्सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त सा द्वितीयमपचथ्साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साऽग्रे प्राऽऽश्नाथ्सा रेतोऽधत्त तस्यै व्यृद्धमा- ण्डमजायत साऽऽदित्येभ्य एव ॥ १८ ॥ तृतीयमपचद्भोगाय म इदꣳ श्रान्तमस्त्विति तेऽब्रुवन्व-

रँव्वृणामहै योऽतो जायाता अस्माकꣳ स एकोऽसद्यौऽस्य प्रजायामृद्ध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्योऽजायत तस्य वा इयं प्रजा यन्मनुष्यास्तास्वेक एवर्द्धो यो यजते स देवानां भोगाय भवति देवा वै यज्ञा- ॥ १९ ॥ द्रुद्रमन्तरायन्थ्स आदित्यानन्वाक्रमत ते द्विदेवत्याँन्प्राऽपद्यन्त तान्न प्रति प्राऽयच्छन्तस्मादपि वद्ध्यं प्रपन्नन्न प्रति प्र यच्छन्ति तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते यदुच्छेषणादजायन्त तस्मादुच्छेषणाद्गृह्यते तिसृभिर्ऋग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्बङ्गर्भो जरायु तदेव त- ॥ २० ॥ न्मिथुनं पशवो वा एते यदादित्य ऊर्ग्दधि दद्ध्ना मद्ध्यतश्श्रीणात्यूर्जमेव पशूनां मद्ध्यतो दधाति भृतातङ्क्येन मेद्ध्यत्वाय तस्मादामा पक्वन्दुहे पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुद्ध्यैवाऽस्मै पशून्गृह्णाति पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधा- ॥ २१ ॥ त्येष वै विवस्वानादित्यो यदुपाꣳशुसवनस्स एतमेव सोमपीथं परि शय आ तृतीयसवनाद्विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवाऽऽदित्यꣳ सोमपीथेन समर्द्धयति या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयाद्वृष्टिमेवाऽव रुन्धे यदि ताजक्प्रस्कन्देद्वर्षुकः पर्जन्यस्स्याद्यदि चिरमवर्षुको न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नाऽनु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्यात्तस्मान्नाऽन्वीक्ष्यः ॥ २२ ॥
एव यज्ञाज्जरायु तदेव तदन्तर्दधाति न सप्तविꣳशतिश्च ॥ ६ ॥

अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नाऽनु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेदेष वै गायत्रो देवानाय्यँथ्सवितैष गायत्रियै लोके गृह्यते यदाग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनय्यँयोनेर्निर्गृह्णाति विश्वे ॥ २३ ॥ देवास्तृतीयꣳ सवनन्नोदयच्छन्ते सवितारं प्रातस्सवनभागꣳ सन्तन्तृतीयसवनमभि पर्यणयन्ततो वै ते तृतीयꣳ सवनमुदयच्छन् यत्तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै सवितृपात्रेण वैश्वदेवङ्कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशस्सविता प्रसवानामीशे यथ्सवितृपात्रेण वैश्वदेवङ्कलशाद्गृह्णाति सवितृप्रसूत एवाऽस्मै प्रजाः प्र ॥ २४ ॥ जनयति सोमे सोममभि गृह्णाति रेत एव तद्दधाति सुशर्माऽसि सुप्रतिष्ठान इत्याह सोमे हि सोममभिगृह्णाति प्रतिष्ठित्या एतस्मिन्वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्माऽसि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः ॥ २५ ॥ विश्वे प्र पितृभ्य एवैतेन करोत्येकान्न विꣳशतिश्च ॥ ७ ॥

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवाऽनु प्रयन्ति प्राणमनूद्यन्ति प्रजापतिर्वा एष यदाग्रयणः प्राण उपाꣳशुः पत्नीः प्रजाः प्र जनयन्ति यदुपाꣳशु-

पात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजानां प्रजननाय तस्मात्प्राणं प्रजा अनु प्र जायन्ते देवा वा इतइतः पत्नीस्सुवर्ग- ॥ २६ ॥ ल्लोकमजिगाꣳसन्ते सुवर्गल्लोकन्न प्राऽजानन्त एतं पात्नीवतमपश्यन्तमगृह्णत ततो वै ते सुवर्गल्लोकं प्राऽजानन् यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै स सोमो नाऽतिष्ठत स्त्रीभ्यो गृह्यमाणस्तङ्घृतव्वज्रङ्कृत्वाऽघ्नन्तन्निरिन्द्रियं भूतमगृह्णन्तस्मात्स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुꣳस उपस्तितर- ॥ २७ ॥ व्वदन्ति यद्धुतेन पात्नीवतꣳ श्रीणाति वज्रेणैवैनव्वशे कृत्वा गृह्णात्युपयामगृहीतोऽसीत्याहेयव्वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवाऽस्मै प्रजाः प्र जनयतीन्दो इत्याह रेतो वा इन्दू रेत एव तद्दधातीन्द्रियाव इ- ॥ २८ ॥ त्याह प्रजा वा इन्द्रियं प्रजा एवाऽस्मै प्र जनयत्यग्ना(३) इत्याहाऽग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्राऽपद्यत तन्न प्रति प्राऽयच्छन्तस्मादपि ॥ २९ ॥ वध्यं प्रपन्नन्न प्रति प्र यच्छन्ति तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नाऽनु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नाऽनुवषट्कुर्यादशान्तमग्नीथ्सोमं भक्षयेदुपाꣳश्वनु वषट्करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीथ्सोमं भक्षयत्यग्नीनेष्टुरुपस्थमा सीद ॥ ३० ॥ नेष्टः पत्नीमुदानयेत्याहाऽग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियामुद्गात्रा सङ्ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननायाऽप उप प्र वर्तयति रेत एव तथ्सिञ्चत्यूरुणोप प्र वर्तयत्यूरुणा हि रेतस्सिच्यते नग्नङ्कृत्योरुमुप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी भवतोऽथ रेतस्सिच्यतेऽथ प्रजाः प्र जायन्ते ॥ ३१ ॥ पत्नीस्सुवर्गमुपस्तितरमिन्द्रियाव इत्यपि सीद मिथुन्यष्टौ च ॥ ८ ॥

इन्द्रो वृत्रमहन्तस्य शीर्षकपालमुदौब्जथ्स द्रोणकलशोऽभवत्तस्माथ्सोमस्समस्रवथ्स हारियोजनोऽभवत्तव्व्यचिकिथ्सज्जुहवानी(३) मा हौषा(३)मिति सोऽमन्यत यद्धोष्याम्यामꣳ होष्यामि यन्न होष्यामि यज्ञवेशसङ्करिष्यामीति तमध्रियत होतुꣳ सोऽग्निरब्रवीन्न मय्यामꣳ होष्यसीति तन्धानाभिरश्रीणात्- ॥ ३२ ॥ तꣳ शृतं भूतमजुहोद्यद्धानाभिर्हारियोजनꣳ श्रीणाति शृतत्वाय शृतमेवैनं भूतञ्जुहोति बह्वीभिश्श्रीणात्येतावतीरेवाऽस्याऽमुष्मिँल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिश्श्रीणीयादृक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानय्यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्या- ॥ ३३ ॥ ङ्घासं प्र यच्छेत्प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छत्युन्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्युस्स्वगाकृतो यदध्वर्युर्जुहुयाद्यथा विमुक्तं पुनर्युनक्ति तादृगेव तच्छीर्षन्नधिनिधाय जुहोति शीर्षतो हि स समभवद्विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्थ्समृद्ध्यै पशवो वै हारियोजनीर्यथ्सम्भिन्द्यादल्पा ॥ ३४ ॥ एनं पशवो भुञ्जन्त उप तिष्ठेरन् यन्न सम्भिन्द्याद्बहव एनं पशवोऽभुञ्जन्त उप

तिष्ठेरन्मनसा सं बाधत उभयङ्करोति बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्त उन्नेतर्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तमेवाऽव रुन्धत उत्तरवेद्यान्नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून्प्रति ष्ठापयन्ति ॥ ३५ ॥ अश्रीणादन्तराधानाभ्यामल्पाँस्स्थापयन्ति ॥ ९ ॥

ग्रहान्वा अनु प्रजाः पशवः प्र जायन्त उपांश्वन्तर्यामावजावयश्शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहङ्गाव आदित्यग्रहो भूयिष्ठाभिरृग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठा यत्त्रिरुपांशुꣳ हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयत्यथाऽवयो भूयसीः पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत्कलशाद्गृह्णीयाद्यथा पिता ॥ ३६ ॥ पुत्रङ्क्षित उपधावति तादृगेव तद्यत्कलश उपदस्येदाग्रयणाद्गृह्णीयाद्यथा पुत्रः पितरङ्क्षित उपधावति तादृगेव तदात्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयादात्मन एवाऽधि यज्ञन्निष्करोत्यविज्ञातो वा एष गृह्यते यदाग्रयणस्स्थाल्या गृह्णाति वायव्येन जुहोति तस्माद्- ॥ ३७ ॥ गर्भेणाऽविज्ञातेन ब्रह्महाऽवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात्स्त्रियञ्जातां पराऽस्यन्त्युत्पुमाꣳसꣳ हरन्ति यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहङ्गृह्णाति यथा वस्यस आहृत्य प्राऽऽह तादृगेव तद्यथ्सादयति यथा वस्यस उपनिधायाऽपक्रामति तादृगेव तद्यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलन्तद्यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै ॥ ३८ ॥ यथा पिता तस्मादपक्रामति तादृगेव तद्यदष्टादश च ॥ १० ॥

प्राऽन्यानि पात्राणि युज्यन्ते नाऽन्यानि यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनःपुनरिव ह्ययल्लोँकः प्राऽन्यानि पात्राणि युज्यन्ते नाऽन्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः ॥ ३९ ॥ प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति प्राऽन्यानि पात्राणि युज्यन्ते नाऽन्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति यो वै ग्रहाणान्निदानव्वेद निदानवान्भवत्याज्यमित्युक्थन्तद्वै ग्रहाणान्निदानय्यँदुपांशु शꣳसति त- ॥ ४० ॥ दुपांश्वन्तर्यामयोर्यदुच्चैस्तदितरेषाङ्ग्रहाणामेतद्वै ग्रहाणान्निदानय्य एवव्वेद निदानवान्भवति यो वै ग्रहाणां मिथुनव्वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनय्य एवव्वेद प्र प्रजया पशुभिर्मिथुनैर्जायत इन्द्रस्त्वष्टुस्सोमममभीषहाऽपिबथ्स विष्वङ्- ॥ ४१ ॥ व्यार्च्छथ्स आत्मन्नारमणन्नाऽविन्दथ्स एताननुसवनम्पुरोडाशानपश्यत्तान्निरवपत्तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनम्पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राऽश्नीयादात्मन्नेवाऽऽरमणङ्कुरुते नैनꣳ सोमोऽति पवते ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किय्यँज्ञस्य पाङ्क्तत्वमिति

धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम् ॥ ४२ ॥ भवन्ति यानि पुनश्शꣳसति तद्विष्वङ्क्चिश्चतुर्दश च ॥ ११ ॥

इन्द्रो वृत्रायाऽऽयुर्वै यज्ञेन सुवर्गायेन्द्रो मरुद्भिरदितिरन्तर्यामपात्रेण प्राण उपाꣳशुपात्रेणेन्द्रो वृत्रमहन्तस्य ग्रहान्प्राऽन्यान्येकादश ॥ ११ ॥ इन्द्रो वृत्राय पुनर् ऋतुनाऽऽह मिथुनं पशवो नेष्टः पत्नीमुपाꣳश्वन्तर्यामयो - र्द्विचत्वारिꣳशत् ॥ ४२ ॥ इन्द्रो वृत्राय पाङ्क्तत्वम् ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ षष्ठकाण्डे षष्ठप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि द्वाभ्याङ्गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽ क्रमते सदोऽभ्यैति सुवर्गमेवैनँल्लोकङ्गमयति सौरी-भ्यामृग्भ्याङ्गार्हपत्ये जुहोत्यमुमेवैनँल्लोकꣳ समारोहयति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याऽभिनीत्यै दिवङ्गच्छ सुवः पतेति हिरण्यꣳ ॥ १ ॥ हुत्वोद्गृह्णाति सुवर्गमेवैनँल्लोकङ्गमयति रूपेण वो रूपमभ्यैमीत्याह रूपेण ह्यासाꣳ रूपमभ्यैति यद्धिरण्येन तुथो वो विश्ववेदा वि भज-त्वित्याह तुथो ह स्म वै विश्ववेदा देवानान्दक्षिणा वि भजति तेनैवैना वि भजत्येतत्ते अग्ने राध ॥ २ ॥ ऐति सोमच्युतमित्याह सोमच्युतꣳ ह्यस्य राध ऐति तन्मित्रस्य पथा नयेत्याह शान्त्या ऋतस्य पथा प्रेत चन्द्रदक्षिणा इत्याह सत्यँवा ऋतꣳ सत्येनैवैना ऋतेन वि भजति यज्ञस्य पथा सुविता नयन्तीरित्याह यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणा ब्राह्मणमद्य राध्यास- ॥ ३ ॥ मृषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यश्शुश्रुवान्तस्मादेवमाह वि सुवः पश्य व्यन्तरि-क्षमित्याह सुवर्गमेवैनँल्लोकङ्गमयति यतस्व सदस्यैरित्याह मित्रत्वायाऽस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतेत्याह वयमिह प्रदातारस्स्मोऽस्मानमुत्र मधुमतीरा विशतेति ॥ ४ ॥ वावैतदाह हिरण्यन्ददाति ज्योतिर्वै हिरण्यञ्ज्योतिरिव पुरस्ताद्धत्ते सुवर्गस्य लोकस्याऽनुख्यात्या अग्नीधे ददात्यग्निमुखानेवर्तून्प्रीणाति ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य

यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभिस्समर्द्धयति ॥ ५ ॥ हिरण्यꣳ राधो राद्धयासममुत्र मधुमतीरा विंशतेत्यष्टात्रिꣳशच्च ॥ १ ॥

समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरँय्यद्विलिष्टँय्यदत्येति यन्नाऽत्येति यदतिकरोति यन्नाऽपि करोति तदेव तैः प्रीणाति नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञस्सं-मितो यावानेव यज्ञस्तं प्रीणाति षडृग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूꣳषि ॥ ६ ॥ त्रय इमे लोका इमानेव लोकान्प्रीणाति यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छेत्याह यज्ञपतिमे-वैनङ्गमयति स्वाँय्योनिङ्गच्छेत्याह स्वामेवैनँय्योनिङ्गमयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकस्सुवीर इत्याह यजमान एव वीर्यन्दधाति वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यथ्सृञ्जयान्बहुयाजिनो-ऽयीयजो यज्ञे ॥ ७ ॥ यज्ञं प्रत्यतिष्ठिपा(३) यज्ञपता(३)विति स होवाच यज्ञपताविति सत्याद्वै सृञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्याऽपराभावायेति देवा गातुविदो गातुँवित्त्वा गातुमितेत्याह यज्ञ एव यज्ञं प्रति ष्ठापयति यजमानस्याऽपराभावाय ॥ ८ ॥ यजूꣳषि यज्ञ एकचत्वारिꣳशच्च ॥ २ ॥

अवभृथयजूꣳषि जुहोति यदेवाऽर्वाचीनमेकहायनादेनः करोति तदेव तैरव यजतेऽपोऽवभृ-थमवैत्यप्सु वै वरुणस्साक्षादेव वरुणमव यजते वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳ-सन्ति साम्नः प्रस्तोताऽन्ववैति साम वै रक्षोहा रक्षसामपहत्यै त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षाꣳ-॥ ९ ॥ स्यप हन्ति पुरुषःपुरुषो निधनमुपैति पुरुषःपुरुषो हि रक्षस्वी रक्षसामपहत्या उरुꣳ हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै शतन्ते राजन्भिषजस्सहस्रमित्याह भेषजमेवाऽस्मै करोत्यभिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाऽभि तिष्ठति बर्हिरभि जुहो-त्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोत्यपबर्हिषः प्रयाजान् ॥ १० ॥ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चत्याज्यभागौ यजति यज्ञस्यैव चक्षुषी नाऽन्तरेति वरुणँय्यजति वरुण-पाशादेवैनं मुञ्चत्यग्नीवरुणौ यजति साक्षादेवैनँव्वरुणपाशान्मुञ्चत्यपबर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चति चतुरः प्रयाजान् यजति द्वावनूयाजौ षट्थ्सं पद्यन्ते षड्वा ऋतव ॥ ११ ॥ ऋतुष्वेव प्रति तिष्ठत्यवभृथ निचङ्कुणेत्याह यथोदितमेव वरुणमव यजते समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणस्सन्त्वा विशन्त्वोषधीरुताऽऽप इत्याहाऽद्भिरेवैनमोष-धीभिस्सम्यञ्चन्दधाति देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत्पशवो वै ॥ १२ ॥ सोमो यद्बि-न्दूनां भक्षयेत्पशुमान्थ्स्याद्वरुणस्त्वेनङ्गृह्णीयाद्यन्न भक्षयेदपशुस्स्यान्नैनँव्वरुणो गृह्णीयादुपस्पृ-श्यमेव पशुमान्भवति नैनँव्वरुणो गृह्णाति प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यतेऽप्रतीक्षमा यन्ति वरुणस्याऽन्तर्हित्या एधोऽस्येधिषीमहीत्याह समिधैवाऽग्निन्नमस्यन्त

उपायन्ति तेजोऽसि तेजो मयि धेहीत्याह तेज एवाऽऽत्मन्धत्ते ॥ १३ ॥ रक्षाꣳसि प्रयाजानृतवो वै नमस्यन्तो द्वादश च ॥ ३ ॥

स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद्यद्बहिर्वेदि मनुष्यलोकव्वैँद्यन्तस्य सन्धौ मिनोत्युभयोर्लोकयोरभिजित्या उपरसंमितां मिनुयात्पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान्प्रतिष्ठाकामस्य ये त्रयो मद्ध्यमास्तान्त्समान्पशुकामस्यैतान् वा ॥ १४ ॥ अनु पशव उप तिष्ठन्ते पशुमानेव भवति व्यतिषजेदितरान्प्रजयैवैनं पशुभिर्व्यतिषजति यङ्कामयेत प्रमायुकस्स्यादिति गर्तमितन्तस्य मिनुयादुत्तराद्धर्यं-व्वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्र मीयते दक्षिणाद्धर्यं-व्वर्षिष्ठं मिनुयात्सुवर्गकामस्याऽथ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुँय्यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै ॥ १५ ॥ यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाꣳ रशनान्द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते यङ्कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत्स्त्र्यैवाऽस्य जायते यङ्कामयेत पुमानस्य जायेतेत्यान्तन्तस्य प्र वेष्टयेत्पुमानेवाऽस्य ॥ १६ ॥ जायतेऽसुरा वै देवान्दक्षिणत उपाऽनयन्तान्देवा उपशयेनैवाऽपाऽनुदन्त तदुपशयस्योपशयत्वय्यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवाऽपशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्च्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यन्द्विष्यात्तमेव ॥ १७ ॥ द्वेष्टि तमस्मै पशुन्निर्दिशति यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान्पशून् हिनस्ति नाऽऽरण्यान्प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्द्ध्यत स एतामेकादशिनीमपश्यत्तया वै सोऽन्नाद्यमवाऽरुन्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नव्विराड्विराजैवाऽन्नाद्यमव रुन्धे ॥ १८ ॥ य एकादशस्स्तन एवाऽस्यै स दुह एवैनान्तेन वज्रो वा एषा सं मीयते यदेकादशिनी सेश्वरा पुरस्तात्प्रत्यञ्चँय्यज्ञꣳ संमर्दितोर्यत्पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय ॥ १९ ॥ वै समष्ट्यै पुमानेवाऽस्य यमेव रुन्धे त्रिꣳशच्च ॥ ४ ॥

प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत्तया वै स आयुरिन्द्रियव्वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियव्वीर्यं-य्यजमान आत्मन्धत्ते प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेत- ॥ २० ॥ स्सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवाऽस्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवाऽस्मै प्र जनयतीन्द्रियमेवैन्द्रेणाऽव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो मद्ध्यत ऐन्द्रमा लभते मद्ध्यत एवेन्द्रियय्यजमाने दधाति ॥ २१ ॥ पुरस्तादैन्द्रस्य

वैश्वदेवमा लभते वैश्वदेवँव्वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात्पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवाऽस्मा अनु बद्ध्नाति यदि कामयेत योऽवगतस्सोऽप रुद्ध्यता-य्योऽपरुद्धस्सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्र-॥ २२ ॥ य्य ए-वाऽवगतस्सोऽप रुद्ध्यते योऽपरुद्धस्सोऽव गच्छति यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजे-त्प्रजा एव मोहयति यदभिवाहतोऽपाँव्वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभ-तेऽपवाहतोऽपां प्रजानामवरुणग्राहाय ॥ २३ ॥ रेतो यजमाने दधाति लोक ऐन्द्रꣳ सप्तत्रिꣳशच्च ॥ ५ ॥

इन्द्रः पत्निया मनुमयाजयत्तां पर्यग्निकृतामुदसृजत्तया मनुरार्ध्नोद्यत्पर्यग्निकृतं पात्नीवत-मुत्सृजति यामेव मनुरृद्धिमार्ध्नोत्तामेव यजमान ऋद्ध्नोति यज्ञस्य वा अप्रतिष्ठितायज्ञः परा भवति यज्ञं पराभवन्तँय्यजमानोऽनु परा भवति यदाज्येन पात्नीवतꣳ सꣳस्थापयति यज्ञस्य प्रति-ष्ठित्यै यज्ञं प्रतितिष्ठन्तँय्यजमानोऽनु प्रति तिष्ठतीष्टँव्वपया ॥ २४ ॥ भवत्यनिष्टँव्वशयाऽथ पात्नी-वतेन प्र चरति तीर्थ एव प्र चरत्यथो एतर्ह्येवाऽस्य यामस्त्वाष्ट्रो भवति त्वष्टा वै रेतसस्सिक्तस्य रूपाणि वि करोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति ॥ २५ ॥ वपया षट्त्रिꣳशच्च ॥ ६ ॥

घ्नन्ति वा एतत्सोमँय्यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायाऽनुस्तरणीङ्घ्नन्ति तादृगेव तद्यदुत्तरार्द्धे वा मद्ध्ये वा जुहुयाद्देवताभ्यस्समदन्दद्ध्याद्दक्षिणार्द्धे जुहोत्येषा वै पितृणान्दि-क्स्वायामेव दिशि पितॄन्निरवदयत उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छंबट्कु-र्वन्ति तस्यैव स शान्तिरवे- ॥ २६ ॥ क्षन्ते पवित्रँव्वै सौम्य आत्मानमेव पवयन्ते य आत्मानन्न परिपश्येदितासुस्स्यादभिदद्दिकृत्वाऽवेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते यो गतमनास्स्यात्सोऽवेक्षेत यन्मे मनः परागतँय्यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवाऽत्मन्दाधार ॥ २७ ॥ न गतमना भवत्यप वै तृतीयसवने यज्ञः क्रामतीजा-नादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निस्सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्च दाधा-रोपाꣳशु यजति मिथुनत्वाय ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टँय्युवते वरुणो दुरिष्टङ्क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीँव्वशामालभते मित्रेणैव ॥ २८ ॥ यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टन्नाऽऽर्तिमार्च्छति यजमानो यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीँव्वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीँव्वशामालभते छन्दाꣳस्येव पुनरा प्रीणात्ययातयामत्वायाऽथो छन्दस्स्वेव रसन्दधाति ॥ २९ ॥ अव दाधार मित्रेणैव प्रीणाति षट्च ॥ ७ ॥

देवा वा इन्द्रियँव्वीर्यँ(१)व्व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन्तदतिग्रा-ह्याणामतिग्राह्यत्वँय्यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्य-य्यजमान आत्मन्धत्ते तेज आग्नेयेनेन्द्रि-

यमैन्द्रेणं ब्रह्मवर्चसꣳ सौर्येणोपस्तंभनव्वाँ एतद्यज्ञस्य यदंतिग्राह्याँश्चक्रे पृष्ठानि यत्पृष्ठ्ये न गृह्णी-यात्प्राश्चँय्यँज्ञं पृष्ठानि सꣳ शृणीयुर्यदुक्थ्यें ॥ ३० ॥ गृह्णीयात्प्रत्यश्चँय्यँज्ञमंतिग्राह्याँस्सꣳ शृणीयु-र्विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशथ्स प्रियास्तनूरप न्यधत्त तदंतिग्राह्या अभवन्वितंनुस्तस्य यज्ञ इत्याहुर्यस्याऽतिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय देवता वै सर्वाँस्सदृशीरासन्ता न व्यावृतंमगच्छन्ते देवा ॥ ३१ ॥ एत एतान्ग्रहानपश्यन्तानंगृह्णताऽऽग्नेयमग्निरैन्द्रमिन्द्रस्सौर्यꣳ सूर्यस्ततो वै तेंऽन्याभिर्देवताभिर्व्या-वृतमगच्छन् यस्यैवव्वँद्विदुष एते ग्रहा गृह्यन्तें व्यावृतमेव पाप्मना भ्रातृंव्येण गच्छतीमे लोका ज्योतिष्मन्तस्समावद्वीर्याः कार्या इत्याहुराग्नेयेनाऽस्मिँल्लोके ज्योतिर्धत्त ऐन्द्रेणाऽन्तरिख्ष इन्द्रवायू हि सयुजौ सौर्येणाऽमुष्मिँल्लोके ॥ ३२ ॥ ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान्कुरुत एतान् वै ग्रहाँन्बंबाविश्ववयसाववित्तान्ताभ्यामिमे लोकाः पराँश्चश्चाऽर्वा-श्चश्च प्राऽभुर्यस्यैवव्वँद्विदुष एते ग्रहा गृह्यन्ते प्राऽस्मा इमे लोकाः पराँश्चश्चाऽर्वाश्चश्च भान्ति ॥ ३३ ॥ उक्थ्ये देवा अमुष्मिँल्लोक एकान्न चत्वारिꣳशच्च ॥ ८ ॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापय-न्ततो देवा अभवन्पराऽसुरा यस्यैवव्वँद्विदुषोऽदाभ्यो गृह्यते भवत्यात्मना पराऽस्य भ्रातृंव्यो भवति यद्वै देवा असुरानदाभ्येनाऽदभ्नुवन्तददाभ्यस्याऽदाभ्यत्वय्यँ एवव्वेँद दभ्नोत्येव भ्रातृंव्यन्नैनं भ्रातृंव्यो दभ्नोत्ये- ॥ ३४ ॥ षा वै प्रजापतेरतिमोख्षिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यतिमुक्त्या अति पाप्मानं भ्रातृंव्यं मुच्यते य एवव्वेँद घ्नन्ति वा एतथ्सोमय्यँदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किन्तद्यज्ञे यजमानः कुरुते येन जीवन्थ्सुवर्गँल्लोकमेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति जीवन्तमेवैनꣳ सुवर्गँल्लोकङ्गमयति वि वा एतद्य-ज्ञञ्छिंन्दन्ति यददाभ्ये सꣳस्थापयन्त्यꣳशूनपि सृजति यज्ञस्य सन्तत्यै ॥ ३५ ॥ दभ्नोत्यनभिषुतस्य गृह्णात्येकान्न विꣳशतिश्च ॥ ९ ॥

देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत्तमगृह्णीत तेन वै स आर्ध्नोद्य-स्यैवव्वँद्विदुषोऽꣳशुर्गृह्यते ऋध्नोत्येव सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनाऽऽर्ध्नोन्मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्या औदुंबरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाऽव रुन्धे चतुस्स्रक्ति भवति दिख्ष्वे- ॥ ३६ ॥ व प्रति तिष्ठति यो वा अꣳशोरायतनव्वेँदाऽऽयतनवान्भवति वामदेव्य-मिति साम तद्वा अस्याऽऽयतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति यदध्वर्युरꣳशुङ्गृह्ण-न्नाऽर्धयेदुभाभ्यान्नद्ध्येताऽध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृद्ध्येताऽनवानङ्गृह्णाति सैवा-ऽस्यर्द्धिरुहिरण्यमभि व्यनित्यमृतव्वैँ हिरण्यमायुः प्राण आयुषैवाऽमृतमभि धिनोति शतमानं भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति ॥ ३७ ॥ दिख्ष्वनिति विꣳशतिश्च ॥ १० ॥

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशथ्स रिरिचानोऽमन्यत स यज्ञाना१ँ षोडशधेन्द्रियँव्वीर्यमात्मानमभि समक्खिदत्तथ्षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडश१ँ स्तोत्र१ँ षोडश१ँ शस्त्रन्तेन षोडशी तथ्षोडशिनष्षोडशित्वँय्यथ्षोडशी गृह्यत इन्द्रियमेव तद्वीर्यँ-य्यजमान आत्मन्धत्ते देवेभ्यो वै सुवर्गो लोको ॥ ३८ ॥ न प्राऽभवत्त एत१ँ षोडशिनमपश्यन्तमगृह्णत ततो वै तेभ्यस्सुवर्गो लोकः प्राऽभवद्यथ्षोडशी गृह्यते सुवर्गस्य लोकस्याऽभिजित्या इन्द्रो वै देवानामानुजावर आसीथ्स प्रजापतिमुपाऽधावत्तस्मा एत१ँ षोडशिनं प्राऽयच्छत्तमगृह्णीत ततो वै सोऽग्रन्देवतानां पर्यैद्यस्यैवँव्विदुषष्षोडशी गृह्यते- ॥ ३९ ॥ ऽग्रमेव समानानां पर्येति प्रातस्सवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातस्सवन१ँ स्वादेवैनँय्योनेर्निर्गृह्णाति सवनेसवनेऽभि गृह्णाति सवनाथ्सवनादेवैनं प्र जनयति तृतीयसवने पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी पशवस्तृतीयसवनँव्वज्रेणैवाऽस्मै तृतीयसवनात्पशूनव रुन्धे नोक्थ्ये गृह्णीयात्प्रजा वै पशव उक्थानि यदुक्थ्ये ॥ ४० ॥ गृह्णीयात्प्रजां पशूनस्य निर्दहेदतिरात्रे पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी वज्रेणैवाऽस्मै पशूनवरुद्ध्य रात्रियोपरिष्टाच्छमयत्यप्यग्निष्टोमे राजन्यस्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो यजते साह्न एवाऽस्मै वज्रङ्गृह्णाति स एनँव्वज्रो भूत्या इन्धे निर्वा दहत्येकवि१ँश१ँ स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यत इन्द्रस्य प्रियन्धामो-॥ ४१ ॥ पाऽऽप्नोति कनीया१ँसि वै देवेषु छन्दा१ँस्यासञ्ज्याया१ँस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्यायश्छन्दोऽभि व्यश१ँसन्ततो वै तेऽसुराणाल्ँलोकमवृञ्जत यत्कनीयसा छन्दसा ज्यायश्छन्दोऽभि विश१ँसति भ्रातृव्यस्यैव तल्लोकँव्वृङ्क्ते षडख्षराण्यतिरेचयन्ति षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव कल्पयन्ति ॥ ४२ ॥ चतुष्पद एव पशूनव रुन्धे द्वे उत्तरे द्विपद एवाऽव रुन्धेऽनुष्टुभमभि सं पादयन्ति वाग्वा अनुष्टुप्तस्मात्प्राणानाँव्वागुत्तमा समयाविषिते सूर्ये षोडशिनस्स्तोत्रमुपाकरोत्येतस्मिन्वै लोक इन्द्रो वृत्रमहन्थ्साख्षादेव वज्रं भ्रातृव्याय प्र हरत्यरुणपिशङ्गोऽश्वो दख्षिणैतद्वै वज्रस्य रूप१ँ समृद्ध्यै ॥ ४३ ॥ लोको विदुषष्षोडशी गृह्यते यदुक्थ्ये धाम कल्पयन्ति सप्तचत्वारि१ँशच्च ॥ ११ ॥

सुवर्गाय यद्दाख्षिणानि समिष्टयजू१ँष्यवभृथयजू१ँषि स्प्येन प्रजापतिरेकादशिनीमिन्द्रः पत्निया घ्नन्ति देवा वा इन्द्रियँव्वीर्यन्देवा वा अदाभ्ये देवा वै प्रबाहुक्प्रजापतिर्देवेभ्यस्स रिरिचानष्षोडशधैकादश ॥ ११ ॥ सुवर्गाय यजति प्रजास्सौम्येन गृह्णीयात्प्रत्यश्चङ्गृह्णीयात्प्रजां पशून्त्रिचत्वारि१ँशत् ॥ ४३ ॥ सुवर्गाय वज्रस्य रूप१ँ समृद्ध्यै ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां षष्ठकाण्डे षष्ठः प्रश्नस्समाप्तः ॥

॥ इति षष्ठं काण्डम् ॥



## ।। षष्ठकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ।।

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ७६ | ३८४० |
| २ | ११ | ५९ | ३०८५ |
| ३ | ११ | ६२ | ३१५५ |
| ४ | ११ | ५१ | २६२६ |
| ५ | ११ | ४२ | २१५० |
| ६ | ११ | ४३ | २१२५ |

।। संहतसङ्ख्या ।।

| | | | |
|---|---|---|---|
| ६ | ६६ | ३३३ | १६९८१ |



ॐ

ॐ नमः परमात्मने

# कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहिता

## ॥ अथ सप्तमं काण्डम् ॥

### ॥ तत्र प्रथमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

प्रजननञ्ज्योतिरग्निर्देवतानाञ्ज्योतिर्विराट्छन्दसाञ्ज्योतिर्विराड्वाचोऽग्नौ सन्तिष्ठते विराजमभि सं पद्यते तस्मात्तज्ज्योतिरुच्यते द्वौ स्तोमौ प्रातस्सवनव्वँहतो यथा प्राणश्चाऽपानश्च द्वौ माद्ध्यन्दिनꣳ सवनय्यँथा चक्षुश्च श्रोत्रञ्च द्वौ तृतीयसवनय्यँथा वाक्च प्रतिष्ठा च पुरुषसम्मितो वा एष यज्ञोऽस्थूरि- ॥ १ ॥ यङ्कामङ्कामयते तमेतेनाऽभ्यश्ञुते सर्वꣳ ह्यस्थूरिणाऽभ्यश्ञुतेऽग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता अग्निष्टोमेनैव पर्यगृह्णात्तासां परिगृहीतानामश्वतरोऽत्यप्रवत तस्याऽनुहाय रेत आऽदत्त तद्गर्दभेन्यमार्ट्तस्माद्गर्दभो द्विरेता अथो आहुर्वडबायान्न्यमार्डिति तस्माद्वडबा द्विरेता अथो आहुरोषधीषु ॥ २ ॥ न्यमार्डिति तस्मादोषधयोऽनभ्यक्ता रेभन्त्यथो आहुः प्रजासु न्यमार्डिति तस्माद्यमौ जायेते तस्मादश्वतरो न प्र जायत आत्तरेता हि तस्माद्बर्हिष्यनवक्लृप्तस्सर्ववेदसे वा सहस्रे वाऽवक्लृप्तोऽति ह्यप्रवत य एवव्ँविद्वानग्निष्टोमेन यजते प्राऽजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति ॥ ३ ॥ प्रजापतिर्वाव ज्येष्ठस्स ह्येतेनाऽग्रेऽयजत प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतन्निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनान्तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तोरसो बाहुभ्या पञ्चदशन्निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृह- ॥ ४ ॥ थ्साम राजन्यो मनुष्याणामविः पशूनान्तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त मद्ध्यतस्सप्तदशन्निरमिमीत तव्ँविश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपꣳ साम वैश्यो मनुष्याणाङ्गावः पशूनान्तस्मात्त आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त पत्त एकविꣳशन्निरमिमीत तमनुष्टुप्छन्दो- ॥ ५ ॥ ऽन्वसृज्यत वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनान्तस्मात्तौ भूतसङ्क्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत तस्मात्पादावुप जीवतः पत्तो ह्यसृज्येतां प्राणा वै त्रिवृदर्द्धमासाः पञ्चदशः प्रजापतिस्सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳश एतस्मिन्वा एते श्रिता एतस्मिन्प्रतिष्ठिता य एवव्ँवेदैतस्मिन्नेव श्रयत एतस्मिन्प्रति तिष्ठति ॥ ६ ॥ अस्थूरिरोषधीषु ज्येष्ठयज्ञ इति बृहदनुष्टुप्छन्दः प्रतिष्ठिता नव च ॥ १ ॥

प्रातस्सवने वै गायत्रेण छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति त्रिवृता ब्रह्मवर्चसेन पञ्च-
दशाय ज्योतिर्दधदेति पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति सप्तदशेन प्राजापत्येन प्रज-
ननेनैकविꣳशाय ज्योतिर्दधदेति स्तोम एव तथ्स्तोमाय ज्योतिर्दधदेत्यथो स्तोम एव स्तोममभि प्र
णयति यावन्तो वै स्तोमास्तावन्तः कामास्तावन्तो लोकास्तावन्ति ज्योतीꣳष्येतावत एव स्तो-
मानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतीꣳष्यव रुन्धे ॥७॥ तावन्तो लोकास्त्रयोदश च ॥२॥

ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्निष्टोमेन यजमानोऽथ सर्वस्तोमेन यजेतेति यस्य
त्रिवृतमन्तर्यन्ति प्राणाꣳस्तस्याऽन्तर्यन्ति प्राणेषु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य
पञ्चदशमन्तर्यन्ति वीर्यन्तस्याऽन्तर्यन्ति वीर्ये मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य
सप्तदशमन्तर्यन्ति ॥ ८ ॥ प्रजान्तस्याऽन्तर्यन्ति प्रजायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते
यस्यैकविꣳशमन्तर्यन्ति प्रतिष्ठान्तस्याऽन्तर्यन्ति प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो
यजते यस्य त्रिणवमन्तर्यन्त्यृतूꣳश्च तस्य नक्षत्रियाञ्च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रिया-
याञ्च विराजीति ॥ ९ ॥ खलु वै यज्ञेन यजमानो यजते यस्य त्रयस्त्रिꣳशमन्तर्यन्ति
देवतास्तस्याऽन्तर्यन्ति देवतासु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यो वै स्तोमानामवमं
परमताङ्गच्छन्तँव्वेद परमतामेव गच्छति त्रिवृद्वै स्तोमानामवमस्त्रिवृत्परमो य एवँव्वेद परमतामेव
गच्छति ॥ १० ॥ सप्तदशमन्तर्यन्ति विराजीति चतुश्चत्वारिꣳशच्च ॥ ३ ॥

अङ्गिरसो वै सत्रमासत ते सुवर्गँल्लोकमायन्तेषाꣳ हविष्माꣳश्च हविष्कृच्चाऽहीयेतान्ताव-
कामयेताꣳ सुवर्गँल्लोकमियावेति तावेतन्द्विरात्रमपश्यतान्तमाऽहरतान्तेनाऽयजेतान्ततो वै तौ
सुवर्गँल्लोकमैताय्ँय एवँविद्वान्द्विरात्रेण यजते सुवर्गमेव लोकमेति तावैतां पूर्वेणाऽह्नाऽगच्छतामु-
त्तरेणा- ॥ ११ ॥ ऽभिप्लवः पूर्वमहर्भवति गतिरुत्तरञ्ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति तेजस्तेना-
ऽव रुन्धे सर्वस्तोमोऽतिरात्र उत्तरꣳ सर्वस्याऽऽप्त्यै सर्वस्याऽवरुद्ध्यै गायत्रं पूर्वेऽहन्थ्साम भवति
तेजो वै गायत्री गायत्री ब्रह्मवर्चसन्तेज एव ब्रह्मवर्चसमात्मन्धत्ते त्रैष्टुभमुत्तर ओजो वै वीर्यन्त्रि-
ष्टुगोज एव वीर्यमात्मन्धत्ते रथन्तरं पूर्वे- ॥ १२ ॥ ऽहन्थ्साम भवतीयँव्वै रथन्तरमस्यामेव प्रति
तिष्ठति बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति तिष्ठति तदाहुः क्व जगती चाऽनुष्टुप्चेति वैखानसं
पूर्वेऽहन्थ्साम भवति तेन जगत्यै नैति षोडश्युत्तरे तेनाऽनुष्टुभोऽथाऽऽहुर्यथ्समानेऽर्द्धमासे
स्यातामन्यतरस्याऽह्नो वीर्यमनु पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरन्नानैवाऽर्द्धमासयो-
र्भवतो नानावीर्ये भवतो हविष्मन्निधनं पूर्वमहर्भवति हविष्कृन्निधनमुत्तरं प्रतिष्ठित्यै ॥ १३ ॥ उत्तरेण
रथन्तरं पूर्वेऽन्वेकविꣳशतिश्च ॥ ४ ॥

आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरथ्स इमामपश्यत्ताँव्वराहो
भूत्वाऽहरत्ताँव्विश्वकर्मा भूत्वा व्यमार्ट्थ्साऽप्रथत सा पृथिव्यभवत्तत्पृथिव्यै पृथिवित्वन्तस्याम-

श्राम्यत्प्रजापतिस्स देवानसृजत वसूꣳन्रुद्रानादित्यान्ते देवाः प्रजापतिमब्रुवन्प्र जायामहा इति सोऽ-ब्रवी- ॥ १४ ॥ यथाऽहꣳ युष्माꣳस्तपसाऽसृख्ष्येवन्तपसि प्रजननमिच्छद्ध्वमिति तेभ्योऽग्निमा-यतनं प्राऽयच्छदेतेनाऽऽयतनेन श्राम्यतेति तेऽग्निनाऽऽयतनेनाऽश्राम्यन्ते सँव्वथ्सर एकाङ्गामसृजन्त ताँव्वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राऽयच्छन्नेताꣳ रख्षदध्वमिति ताँव्वसवो रुद्रा आदित्या अरख्षन्त सा वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राऽजायत त्रीणि च ॥ १५ ॥ शतानि त्रयस्त्रिꣳशतश्चाऽथ सैव स-हस्रतम्यभवत्ते देवाः प्रजापतिमब्रुवन्थ्सहस्रेण नो याजयेति सोऽग्निष्टोमेन वसूनयाजयत्त इमल्लोक-मजयन्तच्चाऽददुस्स उक्थ्येन रुद्रानयाजयन्तेऽन्तरिख्षमजयन्तच्चाऽददुस्सोऽतिरात्रेणाऽऽदित्यान-याजयत्तेऽमुल्लोकमजयन्तच्चाऽददुस्तदन्तरिख्ष-॥ १६ ॥ व्व्यवैर्यत तस्माद्रुद्रा घातुका अनायतना हि तस्मादाहुश्शिथिलँव्वै मद्ध्यममहस्त्रिरात्रस्य वि हि तदवैर्यतेति त्रैष्टुभं मद्ध्यमस्याऽह्न आज्यं भवति सँय्यानानि सूक्तानि शꣳसति षोडशिनꣳ शꣳसत्यह्नो धृत्या अशिथिलंभावाय तस्मात्त्रि-रात्रस्याऽग्निष्टोम एव प्रथममहस्स्यादथोक्थ्योऽथाऽतिरात्र एषाल्लोकानावँ्विधृत्यै त्रीणित्रीणि शतान्यनूचीनाहमव्यवच्छिन्नानि ददा- ॥ १७ ॥ त्येषाल्लोकानामनु सन्तत्यै दशतन्न वि च्छिन्द्याद्विराजन्नेद्विच्छिनदानीत्यथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेताꣳ स इन्द्रोऽमन्यताऽनया वा इदवँ्विष्णुस्सहस्रँव्वख्र्यत इति तस्यामकल्पेतान्द्विभाग इन्द्रस्तृतीये विष्णुस्तद्वा एषाऽभ्यनूच्यत उभा जिग्यथुरिति ताँव्वा एतामच्छावाक ॥ १८ ॥ एव शꣳसत्यथ या सहस्रतमी सा होत्रे देयेति होतारँव्वा अभ्यतिरिच्यते यदतिरिच्यते होताऽनाप्तस्याऽऽपयिताऽथा-ऽहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सहस्रस्याऽतिरिक्त उन्नेतर्त्विजामथाऽऽहुस्सर्वेभ्यस्सदस्येभ्यो देयेत्यथाऽऽहुरुदाकृत्या सा वशञ्चरेदित्यथाऽऽहुर्ब्रह्मणे चाऽग्नीधे च देयेति ॥ १९ ॥ द्विभागं ब्रह्मणे तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्णवोऽग्नीद्यथैव तावकल्पेतामित्यथाऽऽहुर्या कल्याणी बहुरूपा सा देयेत्यथाऽऽहुर्या द्विरूपोभयतएनी सा देयेति सहस्रस्य परिगृहीत्यै तद्वा एतथ्सहस्रस्याऽयनꣳ सह-स्रꣳ स्तोत्रीयास्सहस्रन्दख्षिणास्सहस्रसंमितस्सुवर्गो लोकस्सुवर्गस्य लोकस्याऽभिजित्यै ॥ २० ॥

अब्रवीच्च तदन्तरिख्षन्ददात्यच्छावाकश्च देयेति सप्तचत्वारिꣳशच्च ॥ ५॥

सोमो वै सहस्रमविन्दत्तमिन्द्रोऽन्वविन्दत्तौ यमो न्यागच्छत्तावब्रवीदस्तु मेऽत्राऽपीत्यस्तु ही(३) इत्यब्रूताꣳ स यम एकस्याँव्वीर्यं पर्यपश्यदियँव्वा अस्य सहस्रस्य वीर्यं बिभर्तीति तावब्र-वीदियम्ममाऽस्त्वेतद्युवयोरिति तावब्रूताꣳ सर्वे वा एतदेतस्याँव्वीर्यं ॥ २१ ॥ परि पश्यामोऽꣳशमा हरामहा इति तस्यामꣳशमाऽहरन्त तामफ्सु प्राऽवेशयन्थ्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपङ्कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैस्सहोदैत्तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोमङ्क्रीणीयाद्य एववँ्विद्वान्रोहिण्या पिङ्गलयैकहायन्या सोमङ्क्रीणाति त्रयस्त्रिꣳशता चैवाऽस्य त्रिभिश्च ॥ २२ ॥ शतैस्सोमः क्रीतो भवति सुक्रीतेन यजते तामफ्सु प्राऽवेशयन्निन्द्रायोदेहीति सा रोहिणी लख्ष्मणा

पष्ठौही वार्त्रघ्नी रूपङ्कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैस्सहोदैत्तस्माद्रोहिणील्लँक्ष्मणां पष्ठौही-ँव्वार्त्रघ्नीन्दद्याद्य एववँविद्वान्रोहिणील्लँक्ष्मणां पष्ठौहीँव्वार्त्रघ्नीन्ददाति त्रयस्त्रिꣳशच्चैवाऽस्य त्रीणि च शतानि सा दत्ता ॥ २३ ॥ भवति तामप्सु प्रावेशयन् यमायोदेहीति सा जरती मूर्खा तज्जघन्या रूपङ्कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैस्सहोदैत्तस्माज्जरतीं मूर्खान्तज्जघन्यामनुस्तरणीङ्कुर्वीत य एववँविद्वाञ्जरतीं मूर्खान्तज्जघन्यामनुस्तरणीङ्कुरुते त्रयस्त्रिꣳशच्चैवाऽस्य त्रीणि च शतानि साऽमुष्मिँल्लोके भवति वागेव सहस्रतमी तस्मा-॥ २४ ॥ द्वरो देयस्सा हि वरस्सहस्रमस्य सा दत्ता भवति तस्माद्वरो न प्रतिगृह्यस्सा हि वरस्सहस्रमस्य प्रतिगृहीतं भवतीयँव्वर इति ब्रूयादथाऽन्यां ब्रूयादियं ममेति तथाऽस्य तथ्सहस्रमप्रतिगृहीतम्भवत्युभयतएनी स्यात्तदाहुरन्यतएनी स्याथ्सहस्रं परस्तादेतमिति यैव वरः ॥ २५ ॥ कल्याणी रूपसमृद्धा सा स्याथ्सा हि वरस्समृद्ध्यै तामुत्तरेणाऽऽग्नीध्रं पर्याणीयाऽऽहवनीयस्याऽन्ते द्रोणकलशमव घ्रापयेदा जिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवस्समुद्रमिव सिन्धवस्सा मा सहस्र आ भज प्रजया पशुभिस्सह पुनर्माऽऽ विशताद्रयिरिति प्रजयैवैनं पशुभी रय्या स- ॥ २६ ॥ मर्द्धयति प्रजावान्पशुमान्रयिमान्भवति य एवँव्वेद तया सहाऽऽग्नीध्रं परेत्य पुरस्तात्प्रतीच्यान्तिष्ठन्त्याञ्जुहुयादुभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथान्त्रेधा सहस्रवँवि तदैरयेथामिति त्रेधाविभक्तँव्वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनाङ्करोति सहस्रस्यैवैनाम्मात्रां- ॥ २७ ॥ ङ्करोति रूपाणि जुहोति रूपैरेवैनाꣳ समर्द्धयति तस्या उपोत्थाय कर्णमा जपेदिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतम्मा देवेषु ब्रूतादिति देवेभ्य एवैनमा वेदयत्यन्वेनन्देवा बुद्ध्यन्ते ॥ २८ ॥ एतदेतस्याँव्वीर्यमस्य त्रिभिश्च दत्ता सहस्रतमी तस्मादिव वरस्सं मात्रामेकान्न चत्वारिꣳशच्च ॥ ६ ॥

सहस्रतम्या वै यजमानस्सुवर्गँल्लोकमेति सैनꣳ सुवर्गँल्लोकङ्गमयति सा मा सुवर्गँल्लोकङ्गमयेत्याह सुवर्गमेवैनँल्लोकङ्गमयति सा मा ज्योतिष्मन्तँल्लोकङ्गमयेत्याह ज्योतिष्मन्तमेवैनँल्लोकङ्गमयति सा मा सर्वान्पुण्याँल्लोकान्गमयेत्याह सर्वानेवैनं पुण्याँल्लोकान्गमयति सा ॥ २९ ॥ मा प्रतिष्ठाङ्गमय प्रजया पशुभिस्सह पुनर्माऽऽ विशताद्रयिरिति प्रजयैवैनं पशुभी रय्यां प्रतिष्ठापयति प्रजावान्पशुमान्रयिमान्भवति य एवँव्वेद तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाऽध्वर्यवे वा दद्याथ्सहस्रमस्य सा दत्ता भवति सहस्रमस्य प्रतिगृहीतं भवति यस्तामविद्वा- ॥ ३० ॥ न्प्रतिगृह्णाति तां प्रति गृह्णीयादेकाऽसि न सहस्रमेकान्त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूताऽऽ विश मा सहस्रमित्येकामेवैनां भूतां प्रति गृह्णाति न सहस्रँय्य एवँव्वेद स्योनाऽसि सुषदा सुशेवा स्योना माऽऽ विश सुषदा माऽऽ विश सुशेवा माऽऽ विशे- ॥ ३१ ॥ त्याह स्योनैवैनꣳ सुषदा सुशेवा भूताऽऽ विशति नैनꣳ हिनस्ति ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती(३) सहस्रतमीꣳ सहस्रा(३)मिति यत्प्राचीमुथ्सृजेथ्सहस्रꣳ सहस्रतम्यन्वियात्तथ्सहस्रमप्रज्ञात्रꣳ सुवर्गँल्लोकन्न प्र जानीयात्प्रतीचीमुथ्सृजति ताꣳ सहस्रमनु पर्यावर्तते सा प्रजानती सुवर्गँल्लोकमेति

यजमानमभ्युथ्सृजति क्षिप्रे सहस्रं प्र जायत उत्तमा नीयते प्रथमा देवान्गच्छति ॥ ३२ ॥
लोकान्गमयति साऽविद्वान्थ्सुशेवा माऽऽ विंश यजमानन्द्वादश च ॥ ७ ॥

अत्रिरददादौर्वाय प्रजां पुत्रकामाय स रिरिचानोऽमन्यत निर्वीर्यश्शिथिलो यातयामा स एतञ्चतूरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै तस्य चत्वारो वीरा आऽजायन्त सुहोता सूद्गाता स्वध्वर्युस्सुसभेयो य एवँव्विद्वाꣳश्चतूरात्रेण यजत आऽस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युस्सुसभेयो ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसन्त- ॥ ३३ ॥ य उद्यन्तस्स्तोमाश्श्रीस्सा-ऽत्रिꣳ श्रद्धादेवंय्यजमानञ्चत्वारि वीर्याणि नोपाऽनमन्तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳश्च-तुरश्चतुष्टोमान्थ्सोमानपश्यत्तानाऽहरत्तैरयजत तेज एव प्रथमेनाऽवाऽरुन्धेन्द्रियन्द्वितीयेन ब्रह्मवर्च-सन्तृतीयेनाऽन्नाद्यञ्चतुर्थेन य एवँव्विद्वाꣳश्चतुरश्चतुष्टोमान्थ्सोमानाहरति तैर्यजते तेज एव प्रथमे-नाऽव रुन्ध इन्द्रियन्द्वितीयेन ब्रह्मवर्चसन्तृतीयेनाऽन्नाद्यञ्चतुर्थेन यामेवाऽत्रिरृद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति ॥ ३४ ॥ तत्तेज एवाऽष्टादश च ॥ ८ ॥

जमदग्निः पुष्टिकामश्चतूरात्रेणाऽयजत स एतान्पोषाꣳ अपुष्यत्तस्मात्पलितौ जामदग्नियौ न सञ्जानाते एतानेव पोषान्पुष्यति य एवँव्विद्वाꣳश्चतूरात्रेण यजते पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशः पशूनेवाऽव रुन्धेऽन्नँव्वै पुरोडाशोऽन्नमेवाऽव रुन्धेऽन्नादः पशुमान्भवति य एव-ँव्विद्वाꣳश्चतूरात्रेण यजते ॥ ३५ ॥ जमदग्निरष्टाचत्वारिꣳशत् ॥ ९ ॥

सँव्वथ्सरो वा इदमेक आसीथ्सोऽकामयतर्तून्थ्सृजेयेति स एतं पञ्चरात्रमपश्यत्तमाऽहरत्ते-नाऽयजत ततो वै स ऋतूनसृजत य एवँव्विद्वान्पञ्चरात्रेण यजते प्रैव जायते त ऋतवस्सृष्टा न व्या-वर्तन्त त एतं पञ्चरात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै ते व्यावर्तन्त ॥ ३६ ॥ य एवँव्विद्वा-न्पञ्चरात्रेण यजते वि पाप्मना भ्रातृव्येणाऽऽ वर्तते सार्वसेनिश्शौचेयोऽकामयत पशुमान्थ्स्यामिति स एतं पञ्चरात्रमाऽहरत्तेनाऽयजत ततो वै स सहस्रं पशून्प्राऽऽप्नोद्य एवँव्विद्वान्पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति स एतं पञ्चरात्रमा- ॥ ३७ ॥ ऽहरत्तेनाऽयजत ततो वै स वाचः प्रवदिताऽभवद्य एवँव्विद्वान्पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनँव्वाचस्पतिरित्याहुरनाप्तश्चतूरात्रोऽतिरिक्तष्षड्रात्रोऽथ वा एष संप्रति यज्ञो यत्पञ्चरात्रो य एवँव्विद्वान्पञ्चरात्रेण यजते संप्रत्येव यज्ञेन यजते पञ्चरात्रो भवति पञ्च वा ऋतवस्सँव्वथ्सर ॥ ३८ ॥ ऋतुष्वेव सँव्वथ्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धे त्रिवृदग्निष्टोमो भवति तेज एवाऽव रुन्धे पञ्चदशो भवतीन्द्रियमेवाऽव रुन्धे सप्तदशो भवत्य-न्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायते पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवा-नन्नाद्यस्याऽवरुद्ध्यै विश्वजिथ्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याऽभिजित्यै ॥ ३९ ॥ ते व्यावर्तन्त प्रवदिता स्यामिति स एतं पञ्चरात्रमा सँव्वथ्सरोऽभिजित्यै ॥ १० ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इमामगृभ्णन्नशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवास्सुतमा बभूवुरृतस्य सामन्थ्सरमारपन्ती । अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं वैश्वानरꣳ सप्रथसङ्गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड्यन्ताऽसि यमनो धर्ताऽसि धरुणः कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः ॥ ४० ॥ धरुणः पञ्चविꣳशतिश्च ॥ ११ ॥

विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामाऽस्यादित्यानां पत्वाऽन्विह्यग्नये स्वाहा स्वाहेन्द्राग्निभ्याꣳ स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यस्स्वाहा सर्वाभ्यो देवताभ्य इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो देवा आशापाला एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितङ्गोपायत ॥ ४१ ॥ रन्तिस्स्वाहा द्वाविꣳशतिश्च ॥ १२ ॥

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा पलायिताय स्वाहाऽऽपलायिताय स्वाहाऽऽवल्गते स्वाहा परावल्गते स्वाहाऽऽयते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा ॥ ४२ ॥ आयनायोत्तरमापलायिताय षड्विꣳशतिः ॥ १३ ॥

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहाऽपां मोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा ॥ ४३ ॥ अग्नये वायवेऽपां मोदायेन्द्राय त्रयोविꣳशतिः ॥ १४ ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहा दिग्भ्यस्स्वाहाऽवान्तरदिशाभ्यस्स्वाहा समाभ्यस्स्वाहा शरद्भ्यस्स्वाहाऽहोरात्रेभ्यस्स्वाहाऽर्द्धमासेभ्यस्स्वाहा मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा सꣳवथ्सराय स्वाहा सर्वस्मै स्वाहा ॥४४ ॥ पृथिव्यै सूर्याय नक्षत्रेभ्यः प्राच्यै सप्तचत्वारिꣳशत् ॥ १५ ॥

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहाऽपां मोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा ॥ ४५ ॥ अग्नये सवित्रे पूष्णेऽपां मोदाय वायवे त्रयोविꣳशतिः ॥ १६ ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहाऽग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाऽह्ने स्वाहा रात्रियै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाऽऽशितिम्ने स्वाहा रोगाय स्वाहा हिमाय स्वाहा शीताय स्वाहाऽऽतपाय स्वाहाऽरण्याय

स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ ४६ ॥ पृथिव्या अग्नयेऽहे रात्रियै चतुश्चत्वारि-ꣳशत् ॥ १७॥

भुवो देवानाङ्कर्मणाऽपसर्तस्य पत्थ्याऽसि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्तुना हविषा दीख्षयामि रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेण त्वर्तुना हविषा दीख्षयाम्यादित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्तुना हविषा दीख्षयामि विश्वेभिर्देवेभिर्देवतयाऽऽनुष्टुभेन त्वा छन्दसा युनज्मि ॥ ४७ ॥ शरदा त्वर्तुना हविषा दीख्षयाम्यङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्यान्त्वर्तुना हविषा दीख्षयाम्याऽहन्दीख्षामरुहमृतस्य पत्नीङ्गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधाꣳ सत्यमृतेऽधाम् । महीमू षु सुत्रामाणमिह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा ॥ ४८ ॥ आनुष्टुभेन त्वा छन्दसा युनज्म्येकान्न पञ्चाशच्च ॥ १८ ॥

ईङ्काराय स्वाहेङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा सन्दीयमानाय स्वाहा सन्दिताय स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय स्वाहा पलायिष्यमाणाय स्वाहा पलायिताय स्वाहोपरꣳस्यते स्वाहोपरताय स्वाहा निवेख्ष्यते स्वाहा निविशमानाय स्वाहा निविष्टाय स्वाहा निषथ्स्यते स्वाहा निषीदते स्वाहा निषण्णाय स्वाहा- ॥ ४९ ॥ ऽऽसिष्यते स्वाहाऽऽसीनाय स्वाहाऽऽसिताय स्वाहा निपथ्स्यते स्वाहा निपद्यमानाय स्वाहा निपन्नाय स्वाहा शयिष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा संमीलिष्यते स्वाहा संमीलते स्वाहा संमीलिताय स्वाहा स्वफ्स्यते स्वाहा स्वपते स्वाहा सुप्ताय स्वाहा प्रभोथ्स्यते स्वाहा प्रबुद्ध्यमानाय स्वाहा प्रबुद्धाय स्वाहा जागरिष्यते स्वाहा जाग्रते स्वाहा जागरिताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीख्षिष्यते स्वाहा ॥ ५० ॥ वीख्षमाणाय स्वाहा वीख्षिताय स्वाहा सꣳहास्यते स्वाहा सञ्जिहानाय स्वाहोज्जिहानाय स्वाहा विवथ्र्स्यते स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय स्वाहा विधविष्यते स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहोत्क्रꣳस्यते स्वाहोत्क्रामते स्वाहोत्क्रान्ताय स्वाहा चङ्क्रमिष्यते स्वाहा चङ्क्रम्यमाणाय स्वाहा चङ्क्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा कण्डूयिताय स्वाहा निकषिष्यते स्वाहा निकषमाणाय स्वाहा निकषिताय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा प्रजननाय स्वाहा सर्वस्मै स्वाहा ॥ ५१ ॥ निषण्णाय स्वाहा वीख्षिष्यते स्वाहा निकषमाणाय स्वाहा सप्तविꣳशतिश्च ॥ १९ ॥

अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहर्तमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमस्यृतस्य पन्था असि देवानाञ्छायाऽमृतस्य नाम तथ्सत्यँय्यत्त्वं प्रजापतिरस्यधि यदस्मिन्वाजिनीव

शुभस्स्पर्द्धन्ते दिवस्सूर्येण विशोऽपो वृणानः पवते कव्यन्पशुन्न गोपा इर्यः परिज्मा ॥ ५२ ॥ अग्नये वायवे सूर्यायाऽष्टाचत्वारिꣳशत् ॥ २० ॥

प्रजननं प्रातस्सवने वै ब्रह्मवादिनस्स त्वा अङ्गिरस आपो वै सोमो वै सहस्रतम्याऽत्रिर्जमदग्निस्सꣳवथ्सरो देवस्य विभूरायनायाऽग्नये पृथिव्या अग्नये पृथिव्यै भुव ईङ्काराया अग्नये वायवे सूर्याय विꣳशतिः ॥ २० ॥ प्रजननमङ्गिरसस्सोमो वै प्रतिगृह्णाति विभूर्वीख्यमाणाय द्विपञ्चाशत् ॥ ५२ ॥ प्रजननं परिज्मा ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां सप्तमकाण्डे प्रथमः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ सप्तमकाण्डे द्वितीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

साद्ध्या वै देवास्सुवर्गकामा एतꣳ षड्रात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै ते सुवर्गꣳल्लोकमायन् य एवव्ँविद्वाꣳसष्षड्रात्रमासते सुवर्गमेव लोकय्ँयन्ति देवसत्रव्ँवै षड्रात्रः प्रत्यख्षꣳ ह्येतानि पृष्ठानि य एवव्ँविद्वाꣳसष्षड्रात्रमासते साख्षादेव देवता अभ्यारोहन्ति षड्रात्रो भवति षड्वा ऋतवष्षट्पृष्ठानि ॥ १ ॥ पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिस्सꣳवथ्सरन्ते सꣳवथ्सर एव प्रति तिष्ठन्ति बृहद्रथन्तराभ्याय्ँयन्तीयव्ँवाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याऽञ्जसायनी स्रुती ताभ्यामेव सुवर्गꣳल्लोकय्ँयन्ति त्रिवृदग्निष्टोमो भवति तेज एवाऽव रुन्धते पञ्चदशो भवतीन्द्रियमेवाऽव रुन्धते सप्तदशो ॥ २ ॥ भवत्यन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै सदोहविर्द्धानिन एतेन षड्रात्रेण यजेरन्नाश्वत्थी हविर्द्धानञ्चाऽऽग्नीद्ध्रञ्च भवतस्तद्धि सुवर्ग्यञ्चक्रीवती भवतस्सुवर्गस्य लोकस्य समष्ट्या उलूखलबुद्ध्नो यूपो भवति प्रतिष्ठित्यै प्राञ्चो यान्ति प्राङिव हि सुवर्गो ॥ ३ ॥ लोकस्सरस्वत्या यान्त्येष वै देवयानः पन्थास्तमेवाऽन्वारोहन्त्याक्रोशन्तो यान्त्यवर्तिमेवाऽन्यस्मिन्प्रतिषज्य प्रतिष्ठाङ्गच्छन्ति यदा दश शतङ्कुर्वन्त्यथैकमुत्थानꣳ शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति यदा शतꣳ

सहस्रं कुर्वन्त्यथैकमुत्थानꣳ सहस्रसंमितो वा असौ लोकोऽमुमेव लोकमभि जयन्ति यदैषां प्रमीयेत यदा वा जीयेरन्नथैकमुत्थानन्तद्धि तीर्थम् ॥ ३ ॥ पृष्ठानि सप्तदशस्सुवर्गो जयन्ति यदैकादश च ॥ १ ॥

कुसुरुबिन्द औद्दालकिरकामयत पशुमान्थ्स्यामिति स एतꣳ सप्तरात्रमाऽहरत्तेनाऽयजत तेन वै स यावन्तो ग्राम्याः पशवस्तानवाऽरुन्ध य एवंविद्वान्थ्सप्तरात्रेण यजते यावन्त एव ग्राम्याः पशवस्तानेवाऽव रुन्धे सप्तरात्रो भवति सप्त ग्राम्याः पशवस्सप्ताऽऽरण्यास्सप्त छन्दाꣳस्युभयस्याऽवरुद्ध्यै त्रिवृदग्निष्टोमो भवति तेज ॥ ५ ॥ एवाऽव रुन्धे पञ्चदशो भवतीन्द्रियमेवाऽव रुन्धे सप्तदशो भवत्यन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति विजित्यै पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्याऽवरुद्ध्यै विश्वजिथ्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याऽभिजित्यै यत्प्रत्यक्षं पूर्वेष्वहस्सु पृष्ठान्युपेयुः प्रत्यक्षं- ॥ ६ ॥ वं विश्वजिति यथा दुग्धामुपसीदत्येवमुत्तममहस्स्यान्नैकरात्रश्चन स्याद्बृहद्रथन्तरे पूर्वेष्वहस्सूप यन्तीयँव्वाव रथन्तरमसौ बृहदाभ्यामेव न यन्त्यथो अनयोरेव प्रति तिष्ठन्ति यत्प्रत्यक्षं विश्वजिति पृष्ठान्युपयन्ति यथा प्रत्तान्दुहे तादृगेव तत् ॥ ७ ॥ तेज उपेयुः प्रत्यक्षन्द्विचत्वारिꣳशच्च ॥ २ ॥

बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै स ब्रह्मवर्चस्यभवद्य एवंविद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसङ्गायत्रियैव ब्रह्मवर्चसमव रुन्धेऽष्टरात्रो भवति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे ॥ ८ ॥ त्रिवृदग्निष्टोमो भवति तेज एवाऽव रुन्धे पञ्चदशो भवतीन्द्रियमेवाऽव रुन्धे सप्तदशो भवत्यन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्याऽवरुद्ध्यै विश्वजिथ्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याऽभिजित्यै ॥ ९ ॥ दिग्भ्य एव ब्रह्मवर्चसमव रुन्धेऽभिजित्यै ॥ ३ ॥

प्रजापतिः प्रजा असृजत तास्सृष्टाः क्षुधन्न्यायन्थ्स एतन्नवरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै प्रजाभ्योऽकल्पत यर्हि प्रजाः क्षुधन्निगच्छेयुस्तर्हि नवरात्रेण यजेतेमे हि वा एतासाँल्लोका अक्लृप्ता अथैताः क्षुधन्नि गच्छन्तीमानेवाऽऽभ्यो लोकान्कल्पयति तान्कल्पमानान्प्रजाभ्योऽनु कल्पते कल्पन्ते- ॥ १० ॥ ऽस्मा इमे लोका ऊर्जं प्रजासु दधाति त्रिरात्रेणैवेमल्लोकङ्कल्पयति त्रिरात्रेणाऽन्तरिक्षन्त्रिरात्रेणाऽमुल्लोकँय्यथा गुणे गुणमन्वस्यत्येवमेव तल्लोके लोकमन्वस्यति धृत्या अशिथिलंभावाय ज्योतिर्गौरायुरिति ज्ञातास्स्तोमा भवन्तीयँव्वाव ज्योतिरन्तरिक्षङ्गौरसावायुरिष्वेव लोकेषु प्रति तिष्ठन्ति ज्ञात्रं प्रजानां- ॥ ११ ॥ ङ्गच्छति नवरात्रो भवत्यभिपूर्वमेवाऽस्मिन्तेजो दधाति यो ज्योगामयावी स्याथ्स नवरात्रेण यजेत प्राणा हि वा एतस्याऽधृता अथैतस्य

ज्योगामयति प्राणानेवाऽस्मिन्दाधारोत यदीतासुर्भवति जीवत्येव ॥ १२ ॥ कल्पन्ते प्रजानान्त्रय-स्त्रिꣳशच्च ॥ ४ ॥

प्रजापतिरकामयत प्र जायेयेति स एतन्दशहोतारमपश्यत्तमजुहोत्तेन दशरात्रमसृजत तेन दशरात्रेण प्राऽजायत दशरात्राय दीक्षिष्यमाणो दशहोतारञ्जुहुयाद्दशहोत्रैव दशरात्रꣳ सृजते तेन दशरात्रेण प्र जायते वैराजो वा एष यज्ञो यद्दशरात्रो य एववँविद्वान्दशरात्रेण यजते विराजमेव गच्छति प्राजापत्यो वा एष यज्ञो यद्दशरात्रो ॥ १३ ॥ य एववँविद्वान्दशरात्रेण यजते प्रैव जायत इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाऽधावत्तस्मा एतन्दशरात्रं प्राऽयच्छत्तमाऽहरत्तेनाऽयजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एववँविद्वान्दशरात्रेण यजते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति त्रिककुद्वा ॥ १४ ॥ एष यज्ञो यद्दशरात्रः ककुत्पञ्चदशः ककुदेकविꣳशः ककुत्त्रयस्त्रिꣳशो य एववँविद्वान्दशरात्रेण यजते त्रिककुदेव समानानां भवति यज-मानः पञ्चदशो यजमान एकविꣳशो यजमानस्त्रयस्त्रिꣳशः पुर इतरा अभिचर्यमाणो दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते देवासुरास्सय्यँत्ता आसन्ते देवा एता ॥ १५ ॥ देवपुरा अपश्यन् यद्दशरात्रस्ताः पर्यौहन्त तेषान्न कुतश्चनोपा-व्याधोऽभवत्ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो भवति भवत्यात्मना पराऽस्य भ्रातृव्यो भवति स्तोमस्स्तोमस्योपस्ति-र्भवति भ्रातृव्यमेवोपस्तिङ्कुरुते जामि वा ॥ १६ ॥ एतत्कुर्वन्ति यज्ज्यायाꣳसꣳ स्तोममुपेत्य कनीयाꣳसमुपयन्ति यदग्निष्टोमसामान्यवस्ताच्च परस्ताच्च भवन्त्यजामित्वाय त्रिवृदग्निष्टोमोऽग्नि-ष्टुदाग्नेयीषु भवति तेज एवाऽव रुन्धे पञ्चदश उक्थ्य ऐन्द्रीष्विन्द्रियमेवाऽव रुन्धे त्रिवृदग्निष्टोमो वैश्वदेवीषु पुष्टिमेवाऽव रुन्धे सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमोऽन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायत ॥ १७ ॥ एकविꣳश उक्थ्यस्सौरीषु प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते सप्तदशो-ऽग्निष्टोमः प्राजापत्यासूपहव्य उपहवमेव गच्छति त्रिणवावग्निष्टोमावभित ऐन्द्रीषु विजित्यै त्रयस्त्रि-ꣳश उक्थ्यो वैश्वदेवीषु प्रतिष्ठित्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याऽभिजित्यै ॥ १८ ॥ प्राजापत्यो वा एष यज्ञो यद्दशरात्रस्त्रिककुद्वा एता वै जायत एकत्रिꣳशच्च ॥ ५ ॥

ऋतवो वै प्रजाकामाः प्रजान्नाऽविन्दन्त तेऽकामयन्त प्रजाꣳ सृजेमहि प्रजामव रुन्धीमहि प्रजावँविन्देमहि प्रजावन्तस्स्यामेति त एतमेकादशरात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै ते प्रजामसृजन्त प्रजामवाऽरुन्धत प्रजामविन्दन्त प्रजावन्तोऽभवन्त ऋतवोऽभवन्तदार्तवानामार्तव-त्वमृतूनाँव्वा एते पुत्रास्तस्मा- ॥ १९ ॥ दार्तवा उच्यन्ते य एववँविद्वाꣳस एकादशरात्रमासते प्रजामेव सृजन्ते प्रजामव रुन्धते प्रजावँविन्दन्ते प्रजावन्तो भवन्ति ज्योतिरतिरात्रो भवति ज्योतिरिव पुरस्ताद्दधते सुवर्गस्य लोकस्याऽनुख्यात्यै पृष्ठ्यष्षडहो भवति षड्वा ऋतवष्षट्पृष्ठानि

पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिस्संवँथ्सरन्ते संवँथ्सर एव प्रति तिष्ठन्ति चतुर्विꣳशो भवति चतुर्विꣳशत्यक्षरा गायत्री ॥ २० ॥ गायत्रं ब्रह्मवर्चसङ्गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति चतुश्चत्वारिꣳशो भवति चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियन्त्रिष्टुप्त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठन्त्यष्टाचत्वारिꣳशो भवत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यामेव पशुषु प्रति तिष्ठन्त्येकादशरात्रो भवति पञ्च वा ऋतव आर्तवाः पञ्चर्तुष्वेवाऽऽर्तवेषु संवँथ्सरे प्रतिष्ठाय प्रजामव रुन्धतेऽतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै ॥ २१ ॥ तस्माद्गायत्र्येकान्न पञ्चाशच्च ॥ ६ ॥

ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वै क्लृप्तिमनु प्रजाः कल्पन्ते यज्ञस्याऽक्लृप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः कल्पयति न ज्यायाꣳसङ्कनीयानति क्रामत्यैन्द्रवायवाग्रान्गृह्णीयादामयाविनः प्राणेन वा एष व्यृद्ध्यते यस्याऽऽमयति प्राण ऐन्द्रवायवः प्राणेनैवैनꣳ समर्द्धयति मैत्रावरुणाग्रान्गृह्णीरन् येषान्दीक्षितानां प्रमीयेत ॥ २२ ॥ प्राणापानाभ्यांवँवा एते व्यृद्ध्यन्ते येषान्दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परि हरन्त आश्विनाग्रान्गृह्णीताऽऽनुजावरोऽश्विनौ वै देवानामानुजावरौ पश्चेवाऽग्रं पर्यैतामश्विनावेतस्य देवता य आनुजावरस्तावेवैनमग्रं परिणयतश्शुक्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ वा आदित्यश्शुक्र एषोऽन्तोऽन्तं मनुष्य- ॥ २३ ॥ श्श्रियै गत्वा नि वर्ततेऽन्तादेवाऽन्तमा रभते न ततः पापीयान्भवति मन्थ्यग्रान्गृह्णीताऽभिचरन्नार्तपात्रंवँवा एतद्यन्मन्थिपात्रं मृत्युनैवैनङ्ग्राहयति ताजगार्तिमार्च्छत्याग्रयणाग्रान्गृह्णीत यस्य पिता पितामहः पुण्यस्स्यादथ तन्न प्राप्नुयाद्वाचा वा एष इन्द्रियेण व्यृद्ध्यते यस्य पिता पितामहः पुण्यो ॥ २४ ॥ भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रयणो वाचैवैनमिन्द्रियेण समर्द्धयति न ततः पापीयान्भवत्युक्थ्याग्रान्गृह्णीताऽभिचर्यमाणस्सर्वेषांवँवा एतत्पात्राणामिन्द्रियय्यँदुक्थ्यपात्रꣳ सर्वेणैवैनमिन्द्रियेणाऽति प्र युङ्क्ते सरस्वत्यभि नो नेषि वस्य इति पुरोरुचङ्कुर्याद्वाग्वै ॥ २५ ॥ सरस्वती वाचैवैनमति प्र युङ्क्ते मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान् वा एतस्य शुग्गृच्छति यस्याऽऽमयति प्राणा ग्रहाः प्राणानेवाऽस्य शुचो मुञ्चत्युत यदीतासुर्भवति जीवत्येव पूर्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्प्राणान् वा एतर्हि प्रजानाꣳ शुग्गृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाꣳ शुचो मुञ्चति ताजक्प्र वर्षति ॥ २६ ॥ प्रमीयेत मनुष्य ऋद्ध्यते यस्य पिता पितामहः पुण्यो वाग्वा एव पूर्णान्ग्रहान्पञ्चविꣳशतिश्च ॥ ७ ॥

गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहस्तस्मात्प्रायणीयेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति त्रैष्टुभो वै शुक्रस्त्रैष्टुभन्द्वितीयमहस्तस्माद्द्वितीयेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति जागतो वा आग्रयणो जागतन्तृतीयमहस्तस्मात्तृतीयेऽहन्नाग्रयणो गृह्यते स्व एवैनमा-

यतने गृह्णात्येतद्वै ॥ २७ ॥ यज्ञमाप्यच्छन्दाꣳस्याप्नोति यदाग्रयणश्श्वो गृह्यते यत्रैव यज्ञमदृशन्ततं एवैनं पुनः प्र युङ्क्ते जगन्मुखो वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते राथन्तरो वा ऐन्द्रवायवो राथन्तरं पञ्चममहस्तस्मात्पञ्चमेऽह- ॥ २८ ॥ न्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति बार्हतो वै शुक्रो बार्हतꣳ षष्ठमहस्तस्माथ्षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्येतद्वै द्वितीयँय्यज्ञमाप्यच्छन्दाꣳस्याप्नोति यच्छुक्रश्श्वो गृह्यते यत्रैव यज्ञमदृशन्ततं एवैनं पुनः प्र युङ्क्ते त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभ- ॥ २९ ॥ श्शुक्रो यथ्सप्तमेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णात्येत- ॥ ३० ॥ द्वै तृतीयँय्यज्ञमाप्यच्छन्दाꣳस्याप्नोति यदैन्द्रवायवश्श्वो गृह्यते यत्रैव यज्ञमदृशन्ततं एवैनं पुनः प्र युङ्क्तेऽथो स्वमेव छन्दोऽनु पर्यावर्तन्ते पथो वा एतेऽध्यपथेन यन्ति येऽन्येनैन्द्रवायवात्प्रतिपद्यन्तेऽन्तः खलु वा एष यज्ञस्य यद्दशममहर्दशमेऽहन्नैन्द्रवायवो गृह्यते यज्ञस्यै- ॥ ३१ ॥ वान्तङ्गत्वाऽपथात्पन्थामपि यन्त्यथो यथा वहीयसा प्रतिसारँव्वहन्ति तादृगेव तच्छन्दाꣳस्यन्योऽन्यस्य लोकमभ्यध्यायन्तान्येतेनैव देवा व्यवाहयन्नैन्द्रवायवस्य वा एतदायतनँय्यच्चतुर्थमहस्तस्मिन्नाग्रयणो गृह्यते तस्मादाग्रयणस्याऽऽयतने नवमेऽहन्नैन्द्रवायवो गृह्यते शुक्रस्य वा एतदायतनँय्यत्पञ्चम- ॥ ३२ ॥ महस्तस्मिन्नैन्द्रवायवो गृह्यते तस्मादैन्द्रवायवस्याऽऽयतने सप्तमेऽहञ्छुक्रो गृह्यत आग्रयणस्य वा एतदायतनँय्यथ्षष्ठमहस्तस्मिञ्छुक्रो गृह्यते तस्माच्छुक्रस्याऽऽयतनेऽष्टमेऽहन्नाग्रयणो गृह्यते छन्दाꣳस्येव तद्वि वाहयति प्र वस्यसो विवाहमाप्नोति य एवँव्वेदाऽथो देवताभ्य एव यज्ञे सँव्विदन्दधाति तस्मादिदमन्योऽन्यस्मै ददाति ॥ ३३ ॥ एतद्वै पञ्चमेऽहन्त्रैष्टुभ एतद्गृह्यते यज्ञस्य पञ्चममन्यस्मा एकञ्च ॥ ८ ॥

गायत्रस्त्रैष्टुभो जागत एतदाग्रयणो जगन्मुखोऽथो स्वꣳ राथन्तरो बार्हत एतद्वै द्वितीयꣳ शुक्रस्त्रिष्टुङ्मुखोऽथो वाक्प्राण एतत्तृतीयमैन्द्रवायवोऽथो पथो वै दशमँय्यज्ञस्य चतुर्थमाग्रयणो नवम ऐन्द्रवायवश्शुक्रस्य पञ्चममैन्द्रवायवस्सप्तमे शुक्रश्शुक्र आग्रयणो यथ्षष्ठमष्टमेऽहञ्छन्दाꣳसि (स्सप्तमे शुक्रो यथ्षष्ठꣳ शुक्रोऽष्टमेऽहन्नाग्रयणश्छन्दाꣳसि) ॥

प्रजापतिरकामयत प्र जायेयेति स एतन्द्वादशरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै स प्राऽजायत यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत प्रैव जायते ब्रह्मवादिनो वदन्त्यग्निष्टोमप्रायणा यज्ञा अथ कस्मादतिरात्रः पूर्वः प्र युज्यत इति चक्षुषी वा एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमौ य- ॥ ३४ ॥ दग्निष्टोमं पूर्वं प्रयुञ्जीरन्बहिर्धा कनीनिके दध्युस्तस्मादतिरात्रः पूर्वः प्र युज्यते चक्षुषी एव यज्ञे धित्वा मध्यतः कनीनिके प्रति दधति यो वै गायत्रीञ्ज्योतिःपक्षाँव्वेद

ज्योतिषा भासा सुवर्गल्ँल्लोकमेति यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याँस्स आत्मैषा वै गायत्री ज्योतिःपक्षा य एवँव्वेद ज्योतिषा भासा सुवर्गल्ँल्लोक- ॥ ३५ ॥ मेति प्रजापतिर्वा एष द्वादशधा विहितो यद्द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याँस्स आत्मा प्रजापतिर्वावैष सन्थ्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत्प्राणानेव स्पृणोति सर्वासाँव्वा एते प्रजानां प्राणैरासते ये सत्रमासते तस्मात्पृच्छन्ति किमेते सत्रिण इति प्रियः प्रजानामुत्थितो भवति य एवँव्वेद ॥ ३६ ॥ अग्निष्टोमौ यथ्सुवर्गल्ँल्लोकं प्रियः प्रजानां पञ्च च ॥ ९ ॥

न वा एषोऽन्यतोवैश्वानरस्सुवर्गाय लोकाय प्राऽभवदूर्ध्वो ह वा एष आतत आसीत्ते देवा एतँव्वैश्वानरं पर्यौहन्थ्सुवर्गस्य लोकस्य प्रभूत्या ऋतवो वा एतेन प्रजापतिमयाजयन्तेष्वार्ध्नोदधि तद्दध्नोति ह वा ऋत्विक्षु य एवँविद्वान्द्वादशाहेन यजते तेऽस्मिन्नैच्छन्त स रसमह वसन्ताय प्राऽयच्छ- ॥ ३७ ॥ द्यवँग्ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्यान्तेनेन्द्रं प्रजापतिरयाजयत्ततो वा इन्द्र इन्द्रोऽभवत्तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाऽग्रेऽयजतैष ह वै कुणपमत्ति यस्सत्रे प्रतिगृह्णाति पुरुषकुणपमश्वकुणपङ्गौर्वा अन्नँय्येन पात्रेणाऽन्नं बिभ्रति यत्तन्न निर्णेनिजति ततोऽधि ॥ ३८ ॥ मलञ्जायत एक एव यजेतैको हि प्रजापतिरार्ध्नोद्द्वादश रात्रीर्दीक्षितस्स्याद्द्वादश मासास्सँव्वथ्सरस्सँव्वथ्सरः प्रजापतिः प्रजापतिर्वावैष एष ह त्वै जायते यस्तपसोऽधि जायते चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद्द्वादशोपसदो याः प्रथमा यज्ञन्ताभिस्सं भरति या द्वितीया यज्ञन्ताभिरा रभते ॥ ३९ ॥ यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतश्शुन्धते यो वा अस्य पशुमत्ति माँसꣳ सोऽत्ति यः पुरोडाशं मस्तिष्कꣳ स यः परिवापं पुरीषꣳ स य आज्यं मज्जानꣳ स यस्सोमꣳ स्वेदꣳ सोऽपि ह वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति यो द्वादशाहे प्रतिगृह्णाति तस्माद्द्वादशाहेन न याज्यम्पाप्मनो व्यावृत्त्यै ॥ ४० ॥ अयच्छदधि रभते द्वादशाहेन चत्वारि च ॥ १० ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा त्रिभ्यस्स्वाहा चतुर्भ्यस्स्वाहा पञ्चभ्यस्स्वाहा षड्भ्यस्स्वा-हा सप्तभ्यस्स्वाहाऽष्टाभ्यस्स्वाहा नवभ्यस्स्वाहा दशभ्यस्स्वाहैकादशभ्यस्स्वाहा द्वादशभ्यस्स्वाहा त्रयोदशभ्यस्स्वाहा चतुर्दशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा षोडशभ्यस्स्वाहा सप्तदशभ्यस्स्वाहाऽष्टा-दशभ्यस्स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वा-रिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाऽशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा सर्वस्मै स्वाहा ॥ ४१ ॥ नवचत्वारिꣳशते स्वाहैकान्नैकविꣳशतिश्च ॥ ११ ॥

एकस्मै स्वाहा त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा सप्तभ्यस्स्वाहा नवभ्यस्स्वाहैकादशभ्य-स्स्वाहा त्रयोदशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा सप्तदशभ्यस्स्वाहैकान्न विꣳशत्यै स्वाहा नववि-

ऽशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाऽशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४२ ॥ एकस्मै त्रिभ्यः पञ्चाशत् ॥ १२ ॥

द्वाभ्याꣳ स्वाहा चतुर्भ्यस्स्वाहा षड्भ्यस्स्वाहाऽष्टाभ्यस्स्वाहा दशभ्यस्स्वाहा द्वादशभ्य-स्स्वाहा चतुर्दशभ्यस्स्वाहा षोडशभ्यस्स्वाहाऽष्टादशभ्यस्स्वाहा विꣳशत्यै स्वाहाऽष्टानवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४३ ॥ द्वाभ्यामष्टानवत्यै षड्विꣳशतिः ॥ १३ ॥

त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा सप्तभ्यस्स्वाहा नवभ्यस्स्वाहैकादशभ्यस्स्वाहा त्रयोदशभ्य-स्स्वाहा पञ्चदशभ्यस्स्वाहा सप्तदशभ्यस्स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाऽशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४४ ॥ त्रिभ्योऽष्टाच-त्वारिꣳशत् ॥ १४ ॥

चतुर्भ्यस्स्वाहाऽष्टाभ्यस्स्वाहा द्वादशभ्यस्स्वाहा षोडशभ्यस्स्वाहा विꣳशत्यै स्वाहा षण्ण-वत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४५ ॥ चतुर्भ्यष्षण्णवत्यै षोडश ॥ १५ ॥

पञ्चभ्यस्स्वाहा दशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा विꣳशत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४६ ॥ पञ्चभ्यः पञ्चनवत्यै चतुर्दश ॥ १६ ॥

दशभ्यस्स्वाहा विꣳशत्यै स्वाहा त्रिꣳशते स्वाहा चत्वारिꣳशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाऽशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४७ ॥ दशभ्यो द्वाविꣳशतिः ॥ १७ ॥

विꣳशत्यै स्वाहा चत्वारिꣳशते स्वाहा षष्ट्यै स्वाहाऽशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४८ ॥ विꣳशत्यै द्वादश ॥ १८ ॥

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा त्रिभ्यश्शतेभ्यस्स्वाहा चतुर्भ्य-श्शतेभ्यस्स्वाहा पञ्चभ्यश्शतेभ्यस्स्वाहा षड्भ्यश्शतेभ्यस्स्वाहा सप्तभ्यश्शतेभ्यस्स्वाहाऽष्टाभ्यश्श-तेभ्यस्स्वाहा नवभ्यश्शतेभ्यस्स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा ॥ ४९ ॥ पञ्चाशते द्वात्रिꣳशत् ॥ १९ ॥

शताय स्वाहा सहस्राय स्वाहाऽयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहाऽर्बुदाय स्वाहा न्यर्बुदाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहाऽन्ताय स्वाहा परार्धाय स्वाहोषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ ५० ॥ शतायाऽष्टात्रिꣳशत् ॥ २० ॥

साद्ध्याष्षड्रात्रङ्कुसुरुबिन्दस्सप्तरात्रं बृहस्पतिरष्टरात्रं प्रजापतिस्ताः स्खुधन्नवरात्रं प्रजापतिरकामयत दर्श-होतारमृतवं ऐन्द्रवायवाग्रांन्गायत्रो वै प्रजापतिस्स द्वादशरात्रन्न वा एकस्मा एकस्मै द्वाभ्यान्त्रिभ्यश्चतुर्भ्यः पञ्चभ्यो दशभ्यो विश्शत्यै पञ्चाशते शताय विश्शतिः ॥ २० ॥ साद्ध्या अस्मा इमे लोका गायत्रव्वै तृतीयमेकस्मै पञ्चाशत् ॥ ५० ॥ साद्ध्यास्सर्वस्मै स्वाहा ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां सप्तमकाण्डे द्वितीयः प्रश्नस्समाप्तः ॥

ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

## ॥ सप्तमकाण्डे तृतीयप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

प्रजवव्वा एतेन यन्ति यद्दशममहः पापावहीयव्वा एतेन भवन्ति यद्दशममहर्यो वै प्रजवं-य्यतामपथेन प्रतिपद्यते यस्स्थाणुꣳ हन्ति यो भ्रेषन्न्येति स हीयते स यो वै दशमेऽहन्नविवाक्य उप-हन्यते स हीयते तस्मै य उपहताय व्याह तमेवाऽन्वारभ्य समश्ञुतेऽथ यो व्याह स ॥ १ ॥ हीयते तस्माद्दशमेऽहन्नविवाक्य उपहताय न व्युच्यमथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवास्सुवर्गल्लोक-मायन् यज्ञस्य व्यृद्धेनाऽसुरान्पराऽभावयन्निति यत्खलु वै यज्ञस्य समृद्धन्तद्यजमानस्य यद्व्यृद्धन्त-द्भ्रातृव्यस्य स यो वै दशमेऽहन्नविवाक्य उपहन्यते स एवाऽर्ति रेचयति ते ये बाह्या दृशीकव-॥ २ ॥ स्स्युस्ते वि ब्रूयुर्यदि तत्र न विन्देयुरन्तस्सदसाद्व्युच्यय्यदि तत्र न विन्देयुर्गृहपतिना व्युच्यन्तद्व्यु-च्यमेवाऽथ वा एतथ्सर्पराज्ञिया ऋग्भिस्स्तुवन्तीयव्वै सर्पतो राज्ञी यद्वा अस्याङ्किञ्चाऽर्चन्ति यदानृ-चुस्तेनेयꣳ सर्पराज्ञी ते यदेव किञ्च वाचाऽऽनृचुर्यदतोऽद्ध्यर्चितार- ॥ ३ ॥ स्तदुभयमाप्त्वाऽवरु-द्ध्योत्तिष्ठामेति ताभिर्मनसा स्तुवते न वा इमामश्वरथो नाऽश्वतरीरथस्सद्यः पर्याप्तुमर्हति मनो वा इमाꣳ सद्यः पर्याप्तुमर्हति मनः परिभवितुमथ ब्रह्म वदन्ति परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूꣳष्यथैतस्यैवाऽन्तो नाऽस्ति यद्ब्रह्म तत्प्रतिगृणत आ चक्षीत स प्रतिगरः ॥ ४ ॥ व्याह स दृशीकवोऽर्चितारस्स एकञ्च ॥ १ ॥

ब्रह्मवादिनो वदन्ति किन्द्वादशाहस्य प्रथमेनाऽहर्त्विजाय्यजमानो वृङ्क्त इति तेज इन्द्रियमिति किन्द्वितीयेनेति प्राणानन्नाद्यमिति किन्तृतीयेनेति त्रीनिमाल्ँलोकानिति किञ्चतुर्थेनेति चतुष्पदः पशूनिति किं पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किꣳ षष्ठेनेति षड्ृतूनिति किꣳ सप्तमेनेति सप्तपदाꣳ शक्वरीमिति ॥ ५ ॥ किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति किन्नवमेनेति त्रिवृतꣳ स्तोममिति

किन्दशमेनेति दशाख्खरावँ्विराजमिति किमेकादशेनेत्येकादशाख्खरान्त्रिष्टुभमिति किन्द्वादशेनेति द्वादशाख्खराञ्जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवाऽस्ति तदेषाव्ँवृङ्क्ते ॥ ६ ॥ शक्करीमित्येकचत्वारिꣳशच्च ॥ २ ॥

एष वा आप्तो द्वादशाहो यत्त्रयोदशरात्रस्समानꣳ ह्येतदहर्यत्प्रायणीयश्चोदयनीयश्च त्र्यतिरात्रो भवति त्रय इमे लोका एषाल्ँलोकानामाप्त्यै प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवाऽन्नाद्ये प्रति तिष्ठन्ति सर्वमायुर्यन्ति य एवव्ँविद्वाꣳसस्त्रयोदशरात्रमासते तदाहुर्वाग्वा एषा वितता ॥ ७ ॥ यद्द्वादशाहस्ताव्ँवि च्छिन्द्युर्यन्मद्ध्येऽतिरात्रङ्कुर्युरुपदासुका गृहपतेर्वाख्स्यादुपरिष्टाच्छन्दोमानाम् महाव्रतङ्कुर्वन्ति सन्तताम् एव वाचमव रुन्धतेऽनुपदासुका गृहपतेर्वाग्भवति पशवो वै छन्दोमा अन्नम्महाव्रतय्ँयदुपरिष्टाच्छन्दोमानाम्महाव्रतङ्कुर्वन्ति पशुषु चैवाऽन्नाद्ये च प्रति तिष्ठन्ति ॥ ८ ॥ वितता त्रिचत्वारिꣳशच्च ॥ ३ ॥

आदित्या अकामयन्तोभयोल्ँलोकयोर्ऋद्ध्नुयामेति त एतञ्चतुर्दशरात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै त उभयोल्ँलोकयोरार्द्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवव्ँविद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋद्ध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधयस्सप्ताऽऽरण्या उभयीषामवरुद्ध्यै यत्पराचीनानि पृष्ठानि ॥ ९ ॥ भवन्त्यमुमेव तैर्लोकमभि जयन्ति यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकमभि जयन्ति त्रयस्त्रिꣳशौ मद्ध्यतस्स्तोमौ भवतस्साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानाम् भवन्त्यतिरात्राववभितो भवतः परिगृहीत्यै ॥ १० ॥ पृष्ठानि चतुस्त्रिꣳशच्च ॥ ४ ॥

प्रजापतिस्सुवर्गल्ँलोकमैत्तन्देवा अन्वायन्तानादित्याश्च पशवश्चाऽन्वायन्ते देवा अब्रुवन् यान्पशूनुपाजीविष्म त इमेऽन्वाग्मन्निति तेभ्य एतञ्चतुर्दशरात्रं प्रत्यौहन्त आदित्याः पृष्ठैस्सुवर्गल्ँलोकमाऽरोहन्त्र्यहाभ्यामस्मिल्ँलोके पशून्प्रत्यौहन्पृष्ठैरादित्या अमुष्मिल्ँलोक आर्द्ध्नुवन्त्र्यहाभ्यामस्मि- ॥ ११ ॥ ल्ँलोके पशवो य एवव्ँविद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋद्ध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवाऽमुष्मिल्ँलोक ऋद्ध्नुवन्ति त्र्यहाभ्यामस्मिल्ँलोके ज्योतिर्गौरायुरिति त्र्यहो भवतीयव्ँवाव ज्योतिरन्तरिख्षङ्गौरसावायुरिमानेव लोकानभ्यारोहन्ति यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मद्ध्ये पृष्ठानि भवन्ति सविवधत्वायौ- ॥ १२ ॥ जो वै वीर्यं पृष्ठान्योज एव वीर्यम् मद्ध्यतो दधते बृहद्रथन्तराभ्यामय्ँयन्तीयव्ँवाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गल्ँलोकय्ँयन्ति पराञ्चो वा एते सुवर्गल्ँलोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोल्ँलोकयोर्ऋद्ध्वोत्तिष्ठन्ति चतुर्दशैतास्तासाय्ँया दश दशाख्खरा विराडन्नव्ँविरा-

ड्विराजैवाऽन्नाद्यमवं रुन्धते याश्चतंस्रश्चतंस्रो दिशौ दिख्ष्वेव प्रतिं तिष्ठन्त्यतिरात्रावभितौं भवतः परिंगृहीत्यै ॥ १३ ॥ आर्द्धुवन्त्यहाभ्यामुस्मिन्थ्संविवधत्वाय प्रतिंष्ठित्या एकंत्रिंशच्च ॥ ५ ॥

इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छथ्स प्रजापतिमुपाऽधावत्तस्मा एतं पञ्चदश-रात्रं प्राऽयच्छत्तमाहरत्तेनाऽयजत ततो वै सौऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवव्विद्वाꣳसः पञ्चदशरात्रमासते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति ज्योतिर्गौरायुरितिं त्र्यहो भवतीयँव्वाव ज्योतिरन्तरिंख्ष- ॥ १४ ॥ ङ्गौरसावायुरिख्ष्वेव लोकेषु प्रतिं तिष्ठन्त्यसत्रव्वा एतद्यदछन्दोमय्य-च्छन्दोमा भवन्ति तेन सत्रन्देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छ-न्दोमा ओजस्येव वीर्ये पशुषु प्रतिं तिष्ठन्ति पञ्चदशरात्रो भवति पञ्चदशो वज्रो वज्रमेव भ्रातृव्येभ्यः प्र हरन्त्यतिरात्रावभितौं भवत इन्द्रियस्य परिंगृहीत्यै ॥ १५ ॥ अन्तरिंख्षमिन्द्रियस्यैकंश्च ॥ ६ ॥

इन्द्रो वै शिथिल इवाऽप्रतिष्ठित आसीथ्सोऽसुरेभ्योऽबिभेथ्स प्रजापतिमुपाऽधावत्तस्मा एतं पञ्चदशरात्रव्वज्रं प्राऽयच्छत्तेनाऽसुरान्पराभाव्य विजित्य श्रियमगच्छदग्निष्टुता पाप्मानन्निरदहत पञ्चदशरात्रेणौजो बलमिन्द्रियव्वीर्यमात्मन्नधत्त य एवव्विद्वाꣳसः पञ्चदशरात्रमासते भ्रातृव्यानेव पराभाव्य विजित्य श्रियङ्गच्छन्त्यग्निष्टुता पाप्मानन्नि-॥ १६ ॥ र्दहन्ते पञ्चदशरात्रेणौजो बलमिन्द्रि-व्वीर्यमात्मन्दधत एता एव पशव्याः पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशस्संव्वथ्सर आप्यते संव्वथ्सरं पशवोऽनु प्र जायन्ते तस्मात्पशव्या एता एव सुवर्ग्याः पञ्चदश वा अर्द्धमासस्य रात्रयो-ऽर्द्धमासशस्संव्वथ्सर आप्यते संव्वथ्सरस्सुवर्गो लोकस्तस्माथ्सुवर्ग्या ज्योतिर्गौरायुरितिं त्र्यहो भवतीयँव्वाव ज्योतिरन्तरिंख्ष- ॥ १७ ॥ ङ्गौरसावायुरिमानेव लोकानभ्यारोहन्ति यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मद्ध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मद्ध्यतो दधते बृहद्रथन्तराभ्याय्यँन्तीयँव्वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रतिं तिष्ठन्त्येते वै यज्ञस्याऽञ्जसायनी स्रुती ताभ्यामेव सुवर्गल्लोक- ॥ १८ ॥ य्यँन्ति पराञ्चो वा एते सुवर्गल्लोक-मभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिंष्ठित्या उभयोर्लोकयोरृद्ध्वोत्तिष्ठन्ति पञ्चदशैतास्तासाय्याँ दश दशाख्षरा विराडन्नव्विराड्विराजैवा-ऽन्नाद्यमवं रुन्धते याः पञ्च पञ्च दिशौ दिख्ष्वेव प्रतिं तिष्ठन्त्यतिरात्रावभितौं भवत इन्द्रियस्य वीर्यस्य प्रजायै पशूनां परिंगृहीत्यै ॥ १९ ॥ गच्छन्त्यग्निष्टुता पाप्मानन्निरन्तरिंख्षल्लोकं प्रजायै द्वे चं ॥७ ॥

प्रजापतिरकामयताऽन्नादस्स्यामिति स एतꣳ सप्तदशरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै सौऽन्नादोऽभवद्य एवव्विद्वाꣳसस्सप्तदशरात्रमासतेऽन्नादा एव भवन्ति पञ्चाहो भवति पञ्च वा ऋतवस्संव्वथ्सर ऋतुष्वेव संव्वथ्सरे प्रतिं तिष्ठन्त्यथो पञ्चाख्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धतेऽसत्रव्वा एत- ॥ २० ॥ द्यदछन्दोमय्यँच्छन्दोमा भवन्ति तेन सत्रन्देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रतिं तिष्ठन्ति सप्तदशरात्रो

भवति सप्तदशः प्रजापतिः प्रजापतेराप्त्या अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै ॥ २१ ॥
एतथ्सप्तत्रिꣳशच्च ॥ ८ ॥

सा विराड्विक्रम्याऽतिष्ठद्ब्रह्मणा देवेष्वन्नेनाऽसुरेषु ते देवा अकामयन्तोभयꣳ सव्वृंञ्जीमहि ब्रह्म चाऽन्नञ्चेति त एता विꣳशतिꣳ रात्रीरपश्यन्ततो वै त उभयꣳ समवृञ्जत ब्रह्म चाऽन्नञ्च ब्रह्मवर्चसिनोऽन्नादा अभवन् य एववँविद्वाꣳस एता आसत उभयमेव सव्वृंञ्जते ब्रह्म चाऽन्नञ्च ॥ २२ ॥
ब्रह्मवर्चसिनोऽन्नादा भवन्ति द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या यावानेव पुरुषस्तमाप्त्वोत्तिष्ठन्ति ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयव्वाव ज्योतिरन्तरिक्षङ्गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वन्त्र्यहा भवन्त्यभिपूर्वमेव सुवर्ग- ॥ २३ ॥ ल्लोकमभ्यारोहन्ति यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मद्ध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मद्ध्यतो दधते बृहद्रथन्तराभ्याय्यँन्तीयव्वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याऽञ्जसायनी स्रुती ताभ्यामेव सुवर्गल्लोकय्यँन्ति पराञ्चो वा एते सुवर्गल्लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्त्यतिरात्रावभितो भवतो ब्रह्मवर्चसस्याऽन्नाद्यस्य परिगृहीत्यै ॥ २४ ॥ वृञ्जते ब्रह्म चाऽन्नञ्च सुवर्गमेते सुवर्गन्त्रयोविꣳशतिश्च ॥ ९ ॥

असावादित्योऽस्मिँल्लोक आसीत्तन्देवाः पृष्ठैः परिगृह्य सुवर्गल्लोकमगमयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येन सुवर्गे लोके प्रत्यस्थापयन्परैः परस्तात्पर्यगृह्णन्पृष्ठैरुपावारोहन्थ्स वा असावादित्योऽमुष्मिँल्लोके परैरुभयतः परिगृहीतो यत्पृष्ठानि भवन्ति सुवर्गमेव तैर्लोकय्यँजमाना यन्ति परैरवस्तात्परि गृह्णन्ति दिवाकीर्त्येन ॥ २५ ॥ सुवर्गे लोके प्रति तिष्ठन्ति परैः परस्तात्परि गृह्णन्ति पृष्ठैरुपावरोहन्ति यत्परे परस्तान्न स्युः पराञ्चस्सुवर्गाल्लोकान्निष्पद्येरन् यदवस्तान्न स्युः प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परस्सामानो भवन्ति सुवर्ग एवैनाँल्लोक उभयतः परि गृह्णन्ति यजमाना वै दिवाकीर्त्यꣳ सव्वँथ्सरः परस्सामानोऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति सव्वँथ्सर एवोभयतः ॥ २६ ॥ प्रति तिष्ठन्ति पृष्ठव्वै दिवाकीर्त्यं पार्श्वे परस्सामानोऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठꣳ शस्यते यज्ञस्यैव तन्मद्ध्यतो ग्रन्थिङ्ग्रथ्नन्त्यविस्रꣳसाय सप्त गृह्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणानेव यजमानेषु दधति यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमँल्लोकन्न ॥ २७ ॥ प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन् यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रति तिष्ठन्त्यनुन्मादायेन्द्रो वा अप्रतिष्ठित आसीथ्स प्रजापतिमुपाऽधावत्तस्मा एतमेकविꣳशतिरात्रं प्राऽयच्छत्तमाऽहरत्तेनाऽयजत ततो वै स प्रत्यतिष्ठद्ये बहुयाजिनोऽप्रतिष्ठिता- ॥ २८ ॥ स्स्युस्त एकविꣳशतिरात्रमासीरन्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश

एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यसावादित्यो न व्यरोचत स प्रजापतिमुपाऽधा-
वत्तस्मा एतमेकविꣳशतिरात्रं प्राऽयच्छत्तमाऽहरत्तेनाऽयजत ततो वै सोऽरोचत य एवँविद्वाꣳस
एकविꣳशतिरात्रमासते रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो रुचमेव गच्छन्त्यथो
प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशोऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥ २९ ॥ गृह्णन्ति
दिवाकीर्त्यैनैवोभयतो नाऽप्रतिष्ठिता आसत एकविꣳशतिश्च ॥ १० ॥

अर्वाङ्यज्ञस्सङ्क्रामत्वमुष्मादधि मामभि । ऋषीणाँय्यः पुरोहितः । निर्देवन्निर्वीरङ्कृत्वा
विष्कन्धन्तस्मिन् हीयताँय्योऽस्मान्द्वेष्टि । शरीरँय्यज्ञशमलङ्कुसीदन्तस्मिꣳन्त्सीदतु योऽस्मान्द्वेष्टि ।
यज्ञ यज्ञस्य यत्तेजस्तेन सङ्क्राम मामभि । ब्राह्मणानृत्विजो देवान् यज्ञस्य तपसा ते सवाऽहमा हुवे ।
इष्टेन पक्कमुप ॥ ३० ॥ ते हुवे सवाऽहम् । सन्ते वृञ्जे सुकृतꣳ सं प्रजां पशून् । प्रैषान्त्सामिधेनीराघा-
रावाज्यभागावाश्रुतं प्रत्याश्रुतमा शृणामि ते । प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिष आ वृञ्जे
सुवः । अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः । याज्यानुवाक्याभ्यामुप ते हुवे सवाऽह-
ँय्यज्ञमा ददे ते वषट्कृतम् । स्तुतꣳ शस्त्रं प्रतिगरङ्ग्रहमिडामाशिष ॥ ३१ ॥ आ वृञ्जे सुवः । पत्नी-
सँय्याजानुप ते हुवे सवाऽहꣳ समिष्टयजुरा ददे तव । पशून्त्सुतं पुरोडाशान्त्सवनान्योत यज्ञम् ।
देवान्त्सेन्द्रानुप ते हुवे सवाऽहमग्निमुखान्त्सोमवतो ये च विश्वे ॥ ३२ ॥ उप ग्रहमिडामाशिषो
द्वात्रिꣳशच्च ॥ ११ ॥

भूतं भव्यं भविष्यद्वषट्थ्स्वाहा नम ऋक्साम यजुर्वषट्थ्स्वाहा नमो गायत्री त्रिष्टुब्जगती
वषट्थ्स्वाहा नमः पृथिव्यन्तरिक्षन्द्यौर्वषट्थ्स्वाहा नमोऽग्निर्वायुस्सूर्यो वषट्थ्स्वाहा नमः प्राणो
व्यानोऽपानो वषट्थ्स्वाहा नमोऽन्नङ्कृषिर्वृष्टिर्वषट्थ्स्वाहा नमः पिता पुत्रः पौत्रो वषट्थ्स्वाहा नमो
भूर्भुवस्सुवर्वषट्थ्स्वाहा नमः ॥ ३३ ॥ भुवश्चत्वारि च ॥ १२ ॥

आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान् । आपो देवीर्यज्ञिया माऽऽ वि-
शन्तु सहस्रस्य मा भूमा मा प्र हासीत् । आ मे ग्रहो भवत्वापुरोरुक्स्तुतशस्त्रे माऽऽ विशताꣳ
समीची । आदित्या रुद्रा वसवो मे सदस्यास्सहस्रस्य मा भूमा मा प्र हासीत् । आ माऽग्निष्टोमो
विशतूक्थ्यश्चाऽतिरात्रो माऽऽ विशत्वापिशर्वरः । तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा
भूमा मा प्र हासीत् ॥ ३४ ॥ अग्निष्टोमो विशत्वष्टादश च ॥ १३ ॥

अग्निना तपोऽन्वभवद्वाचा ब्रह्म मणिना रूपाणीन्द्रेण देवान् वातेन प्राणान्त्सूर्येण द्याञ्च-
न्द्रमसा नक्षत्राणि यमेन पितॄन्राज्ञा मनुष्यान्फलेन नादेयानजगरेण सर्पान्व्याघ्रेणाऽऽरण्यान्पशू-
ञ्छ्येनेन पतत्रिणो वृष्णाऽश्वानृषभेण गा बस्तेनाऽजा वृष्णिनाऽवीर्व्रीहिणाऽन्नानि यवेनौषधी-

न्यग्रोधैन वनस्पतीनुदुंबरेणोर्जंङ्गायत्रिया छन्दार्ंसि त्रिवृता स्तोमान्ब्राह्मणेन वार्चम् ॥ ३५ ॥ ब्राह्मणेनैकंञ्च ॥ १४ ॥

स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहाऽदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा सर्वस्मै स्वाहा ॥ ३६ ॥ पुरुरूपाय स्वाहा दश च ॥ १५ ॥

दद्भ्यस्स्वाहा हनूभ्याᳪ स्वाहोष्ठाभ्याᳪ स्वाहा मुखाय स्वाहा नासिकाभ्याᳪ स्वाहाऽक्षीभ्याᳪ स्वाहा कर्णाभ्याᳪ स्वाहा पार इक्षवोऽवार्येभ्यः पक्ष्मभ्यस्स्वाहाऽवार इक्षवः पार्येभ्यः पक्ष्मभ्यस्स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याᳪ स्वाहा ललाटाय स्वाहा मूर्द्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यस्स्वाहा वहाय स्वाहा ग्रीवाभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा कीकसाभ्यस्स्वाहा पृष्टीभ्यस्स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याᳪ स्वाहा- ॥ ३७ ॥ ऽᳪसाभ्याᳪ स्वाहा दोषभ्याᳪ स्वाहा बाहुभ्याᳪ स्वाहा जङ्घाभ्याᳪ स्वाहा श्रोणीभ्याᳪ स्वाहोरुभ्याᳪ स्वाहाऽष्ठीवद्भ्याᳪ स्वाहा जङ्घाभ्याᳪ स्वाहा भसदे स्वाहा शिखण्डेभ्यस्स्वाहा वालधानाय स्वाहाऽऽण्डाभ्याᳪ स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा प्रजननाय स्वाहा पद्भ्यस्स्वाहा शफेभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माᳪसाय स्वाहा स्नावभ्यस्स्वाहाऽस्थभ्यस्स्वाहा मज्जभ्यस्स्वाहाऽङ्गेभ्यस्स्वाहा-ऽऽत्मने स्वाहा सर्वस्मै स्वाहा ॥ ३८ ॥ पार्श्वाभ्याᳪ स्वाहा मज्जभ्यस्स्वाहा षट्च ॥ १६ ॥

अञ्ज्येताय स्वाहाऽञ्जिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरन्ध्राय स्वाहा शितिपृष्ठाय स्वाहा शित्यᳪसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहाऽञ्जये स्वाहा ललामाय स्वाहाऽसितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहाऽरुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा सर्वस्मै स्वाहा ॥ ३९ ॥ रूपाय स्वाहा द्वे च ॥ १७ ॥

कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय स्वाहा सारङ्गाय स्वाहाऽरुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा रोहिताय स्वाहा शोणाय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पाकलाय स्वाहा सुरूपाय स्वाहाऽनुरूपाय स्वाहा विरूपाय स्वाहा सरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा ॥ ४० ॥ कृष्णाय षट्चत्वारिᳪशत् ॥ १८ ॥

ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा काण्डेभ्यस्स्वाहा वल्शेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहाऽगृहीतेभ्यस्स्वाहाऽवपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा सर्वस्मै स्वाहा ॥ ४१ ॥ ओषधीभ्यश्चतुर्विꣳशतिः ॥ १९ ॥

वनस्पतिभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा स्कन्धोभ्यस्स्वाहा शाखाभ्यस्स्वाहा पर्णेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहाऽगृहीतेभ्यस्स्वाहाऽवपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा शिष्टाय स्वाहाऽतिशिष्टाय स्वाहा परिशिष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहाऽरिक्ताय स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा ॥ ४२ ॥ वनस्पतिभ्यस्स्कन्धोभ्यश्शिष्टाय रिक्ताय षट्चत्वारिꣳशत् ॥ २० ॥

प्रजवं ब्रह्मवादिनः किमेष वा आप्त आदित्या उभयोः प्रजापतिरन्वायन्निन्द्रो वै सदृङ्ङिन्द्रो वै शिथिलः प्रजापतिरकामयताऽन्नादस्सा विराडसावादित्योऽर्वाङ्भूतमा मेऽग्निना स्वाहाऽऽधिन्दद्भ्योऽञ्ज्येताय कृष्णायौषधीभ्यो वनस्पतिभ्यो विꣳशतिः ॥ २० ॥ प्रजवं प्रजापतिर्यदछन्दोमन्तौ हुवे सवाऽहमोषधीभ्यो द्विचत्वारिꣳशत् ॥ ४२ ॥ प्रजवꣳ सर्वस्मै स्वाहा ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां सप्तमकाण्डे तृतीयः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ सप्तमकाण्डे चतुर्थप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

बृहस्पतिरकामयत श्रन्मे देवा दधीरन्गच्छेयं पुरोधामिति स एतञ्चतुर्विꣳशतिरात्रमपश्यत्तमाऽहरत्तेनाऽयजत ततो वै तस्मै श्रद्देवा अदधताऽगच्छत्पुरोधाय्य एवँविद्वाꣳसश्चतुर्विꣳशतिरात्रमासते श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधाञ्ज्योतिगौरायुरिति त्र्यहा भवन्तीयँव्वाव ज्योतिरन्तरिक्षङ्गौरसावायु- ॥ १ ॥ रिमानेव लोकानभ्यारोहन्त्यभिपूर्वन्त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गँल्लोकमभ्यारोहन्त्यसत्रँव्वा एतद्यदछन्दोमय्यच्छन्दोमा भवन्ति तेन सत्रन्देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति

बृहद्रथन्तराभ्याँय्यन्तीयँव्वाव रथन्तरमसौ बृहदाभ्यामेव ॥ २ ॥ यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याँऽञ्जसायनी स्रुती ताभ्यामेव सुवर्गँल्लोकँय्यन्ति चतुर्विंशतिरात्रो भवति चतुर्विंशतिरर्द्धमासास्सँव्वथ्सरस्सँव्वथ्सरस्सुवर्गो लोकस्सँव्वथ्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्खरा गायत्री गायत्री ब्रह्मवर्चसङ्गायत्रियैव ब्रह्मवर्चसमव रुन्धतेऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥ ३ ॥ असावायुराभ्यामेव पञ्चचत्वारिंशच्च ॥ १ ॥

यथा वै मनुष्या एवन्देवा अग्रं आसन्तेऽकामयन्ताऽवर्तिं पाप्मानं मृत्युमपहत्य दैवीँ संसदङ्गच्छेमेति त एतञ्चतुर्विंशतिरात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै तेऽवर्तिं पाप्मानम्मृत्युमपहत्य दैवीँ संसदमगच्छन् य एवँव्विद्वांसश्चतुर्विंशतिरात्रमासतेऽवर्तिमेव पाप्मानमपहत्य श्रियङ्गच्छन्ति श्रीर्हि मनुष्यस्य ॥ ४ ॥ दैवी संसज्ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्याऽनुख्यात्यै पृष्ठ्यष्षडहो भवति षड्वा ऋतवस्सँव्वथ्सरस्तं मासा अर्द्धमासा ऋतवः प्रविश्य दैवीँ संसदमगच्छन् य एवँव्विद्वांसश्चतुर्विंशतिरात्रमासते सँव्वथ्सरमेव प्रविश्य वस्यसीँ संसदङ्गच्छन्ति त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिंशाः परस्तात्त्रयस्त्रिंशैरेवोभयतोऽवर्तिं पाप्मानमपहत्य दैवीँ संसदं मद्ध्यतो ॥ ५ ॥ गच्छन्ति पृष्ठानि हि दैवी संसज्जामि वा एतत्कुर्वन्ति यत्त्रयस्त्रयस्त्रिंशा अन्वञ्चो मद्ध्येऽनिरुक्तो भवति तेनाऽजाम्यूर्द्ध्वानि पृष्ठानि भवन्त्यूर्द्ध्वाश्छन्दोमा उभाभ्याँ रूपाभ्याँ सुवर्गँल्लोकँय्यन्त्यसत्त्रँव्वा एतद्यदछन्दोमँय्यच्छन्दोमा भवन्ति तेन सत्त्रन्देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशव- ॥ ६ ॥ श्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिंशाः परस्तान्मद्ध्ये पृष्ठान्युरो वै त्रयस्त्रिंशा आत्मा पृष्ठान्यात्मन एव तद्यजमानाश्शर्म नह्यन्तेऽनार्त्यै बृहद्रथन्तराभ्याँय्यन्तीयँव्वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याँऽञ्जसायनी स्रुती ताभ्यामेव ॥ ७ ॥ सुवर्गँल्लोकँय्यन्ति पराञ्चो वा एते सुवर्गँल्लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्ख्षडहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोरृद्ध्वोत्तिष्ठन्ति त्रिवृतोऽधि त्रिवृतमुप यन्ति स्तोमानां संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययँव्वाव स ख्षयोऽस्मादेव तेन ख्षयान्न यन्ति चतुर्विंशतिरात्रो भवति चतुर्विंशतिरर्द्धमासास्सँव्वथ्सरस्सँव्वथ्सरस्सुवर्गो लोकस्सँव्वथ्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्खरा गायत्री गायत्री ब्रह्मवर्चसङ्गायत्रियैव ब्रह्मवर्चसमव रुन्धतेऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥ ८ ॥ मनुष्यस्य मद्ध्यतः पशवस्ताभ्यामेव सँव्वथ्सरश्चतुर्विंशतिश्च ॥ २ ॥

ऋख्षा वा इयमलोमकाऽऽसीत्साऽकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति सैतास्त्रिंशतं रात्रीरपश्यत्ततो वा इयमोषधीभिर्वनस्पतिभिः प्राऽजायत ये प्रजाकामाः पशुकामास्स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिरियँव्वा अख्षुद्ध्यथ्सैतावँव्विराजमपश्यत्तामात्मन्धित्वाऽ-

न्नाद्यमवाऽरुन्धौषधी- ॥ ९ ॥ वनस्पतीन्प्रजां पशूनेतेनाऽवर्द्धत सा जेमानं महिमानमगच्छद्य एवँविद्वाꣳस एता आसते विराजमेवाऽऽत्मन्धित्वाऽन्नाद्यमव रुन्धते वर्द्धन्ते प्रजया पशुभिर्जेमानं महिमानङ्गच्छन्ति ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्याऽनुख्यात्यै पृष्ठ्यष्षडहो भवति षड्वा ऋतवष्षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिस्सँव्वथ्सरन्ते सँव्वथ्सर एव ॥ १० ॥ प्रति तिष्ठन्ति त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति यज्ञस्य सन्तत्या अथो प्रजापतिर्वै त्रयस्त्रिꣳशः प्रजापतिमेवाऽऽरभन्ते प्रतिष्ठित्यै त्रिणवो भवति विजित्या एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते त्रिवृदग्निष्टुद्भवति पाप्मानमेव तेन निर्दहन्तेऽथो तेजो वै त्रिवृत्तेज एवाऽऽत्मन्दधते पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाऽव ॥ ११ ॥ रुन्धते सप्तदशो भवत्यन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते चतुर्विꣳशो भवति चतुर्विꣳशतिरर्द्धमासास्सँव्वथ्सरस्सँव्वथ्सरस्सुवर्गो लोकस्सँव्वथ्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान् विषूवन्तो भवन्ति य एवँविद्वाꣳस एता आसते चतुर्विꣳशात्पृष्ठान्युप यन्ति सँव्वथ्सर एव प्रतिष्ठाय ॥ १२ ॥ देवता अभ्यारोहन्ति त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति त्रयस्त्रिꣳशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति त्रिणवो भवतीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति द्वावेकविꣳशौ भवतः प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते बहवष्षोडशिनो भवन्ति तस्माद्बहवः प्रजासु वृषाणो यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मादियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता ॥ १३ ॥ व्यतिषज्यन्ते प्रजया पशुभिर्य एवँविद्वाꣳस एता आसतेऽक्लृप्ता वा एते सुवर्गँल्लोकँय्यन्त्युच्चावचान् हि स्तोमानुपयन्ति यदेत ऊर्द्ध्वाः क्लृप्तास्स्तोमा भवन्ति क्लृप्ता एव सुवर्गँल्लोकँय्यन्त्युभयोरेभ्यो लोकयोः कल्पते त्रिꣳशदेतास्त्रिꣳशदक्षरा विराडन्नँव्विराड्विराजैवाऽन्नाद्यमव रुन्धतेऽतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै ॥ १४ ॥ ओषधीस्सँव्वथ्सर एवाऽव प्रतिष्ठाय व्यतिषक्तैकान्न पञ्चाशच्च ॥ ३ ॥

प्रजापतिस्सुवर्गँल्लोकमैत्तन्देवा येनयेन छन्दसाऽनु प्राऽयुञ्जत तेन नाऽऽप्नुवन्त एता द्वात्रिꣳशतꣳ रात्रीरपश्यन्द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिस्स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्यारुह्य सुवर्गँल्लोकमायन् य एवँविद्वाꣳस एता आसते द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिस्स्वेनैव छन्दसा प्रजापतिमाप्त्वा श्रियङ्गच्छन्ति ॥ १५ ॥ श्रीर्हि मनुष्यस्य सुवर्गो लोको द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुग्वागनुष्टुप्सर्वामेव वाचमाप्नुवन्ति सर्वे वाचो वदितारो भवन्ति सर्वे हि श्रियङ्गच्छन्ति ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयँव्वाव ज्योतिरन्तरिक्षङ्गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वन्त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गँल्लोकमभ्यारोहन्ति बृहद्रथन्तराभ्याँय्यन्ती- ॥ १६ ॥ यँव्वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याऽञ्जसायनी स्रुती ताभ्यामेव सुवर्गँल्लोकँय्यन्ति पराञ्चो वा एते सुवर्गँल्लोकमभ्यारोहन्ति ये

पराचस्त्र्यहानुपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति द्वात्रिꣳशदेतास्तासाꣳयास्त्रिꣳशत्त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवाऽन्नाद्यमव रुन्धते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गँल्लोकँय्यन्त्यतिरात्रावभितो भवतः परिगृहीत्यै ॥ १७ ॥ गच्छन्ति यन्ति त्रिꣳशदक्षरा द्वाविꣳशतिश्च ॥ ४ ॥

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवव्ँविद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव देवता अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविद्ध्यति पापीयान्भवति यदि नाऽवविद्ध्यति सदृङ्च एवव्ँविद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना [illegible]व्येणाऽऽ वर्तन्तेऽहर्भाजो वा एता देवा अग्र आऽहर-॥ १८ ॥ न्नहरेकोऽभजताऽहरेकस्ताभिर्वै ते प्रबाहुगार्द्ध्नुवन् य एवव्ँविद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्वे एव प्रबाहुगृद्ध्नुवन्ति सर्वे ग्रामणीयं प्राऽऽप्नुवन्ति पञ्चाहा भवन्ति पञ्च वा ऋतवस्सँव्वथ्सर ऋतुष्वेव सँव्वथ्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाऽव रुन्धते त्रीण्याश्विनानि भवन्ति त्रय इमे लोका ए-॥ १९ ॥ ष्वेव लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्यैन्द्रियाणि तान्येवाऽव रुन्धते विश्वजिद्भवत्यन्नाद्यस्याऽवरुद्ध्यै सर्वपृष्ठो भवति सर्वस्याऽभिजित्यै वाग्वै द्वादशाहो यत्पुरस्ताद्द्वादशाहमुपेयुरनाप्ताँव्वाचमुपेयुरुपदासुकैषाँव्वाक्स्यादुपरिष्टाद्द्वादशाहमुप यन्त्याप्तामेव वाचमुप यन्ति तस्मादुपरिष्टाद्वाचा वदामोऽवान्तर- ॥ २० ॥ व्वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानास्सृजन्त एताꣳ ह वा उदङ्कश्शौल्बायनस्सत्रस्यर्द्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैवैषा शान्तिर्द्व्यनीका वा एता रात्रयो यजमाना विश्वजिथ्सहाऽतिरात्रेण पूर्वाष्षोडश सहाऽतिरात्रेणोत्तराष्षोडश य एवव्ँविद्वाꣳसस्त्रयस्त्रिꣳशदहमासत ऐषान्द्व्यनीका प्रजा जायतेऽतिरात्रावभितो भवतः परिगृहीत्यै ॥ २१ ॥ अहरन्नेष्ववान्तरꣳ षोडश सह सप्तदश च ॥ ५ ॥

आदित्या अकामयन्त सुवर्गँल्लोकमियामेति ते सुवर्गँल्लोकन्न प्राऽजानन्न सुवर्गँल्लोकमायन्त एतꣳ षट्त्रिꣳशद्रात्रमपश्यन्तमाऽहरन्तेनाऽयजन्त ततो वै ते सुवर्गँल्लोकं प्राऽजानन्थ्सुवर्गँल्लोकमायन् य एवव्ँविद्वाꣳसष्षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गँल्लोकँय्यन्ति ज्योतिरतिरात्रो ॥ २२ ॥ भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्याऽनुख्यात्यै षडहा भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति चत्वारो भवन्ति चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्यसत्रँव्वा एतद्यदछन्दोमँय्यच्छन्दोमा भवन्ति तेन सत्रन्देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव ॥ २३ ॥ वीर्ये पशुषु प्रति तिष्ठन्ति षट्त्रिꣳशद्रात्रो भवति षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैव पशूनव रुन्धते बृहती छन्दसाꣳ स्वाराज्यमाश्नुताऽ-

श्नुवते स्वाराज्यॅंय्य एवव्वुँविद्वाꣳसंष्षट्त्रिꣳशद्रात्रमासंते सुवर्गमेव लोकय्यँन्त्यतिरात्राववभितों भवतस्सुवर्गस्य लोकस्य परिंगृहीत्यै ॥ २४ ॥ अतिरात्र ओजंस्येव षट्त्रिꣳशच्च ॥ ६ ॥

वसिंष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान्भवेयमिति स एतमेकस्मान्नपञ्चाश-मपश्यत्तमाऽहरत्तेनाऽयजत ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्य एवव्वुँविद्वाꣳसं एकस्मा-न्नपञ्चाशमासंते विन्दन्तें प्रजामभि भ्रातृव्यान्भवन्ति त्रयस्त्रिवृतोंऽग्निष्टोमा भंवन्ति वज्रस्यैव मुखꣳ सꣳ श्यन्ति दश पञ्चदशा भंवन्ति पञ्चदशो वज्रो ॥ २५ ॥ वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति षोड-शिमद्दशममहर्भवति वज्र एव वीर्यन्दधति द्वादश सप्तदशा भंवन्त्यन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तैजायन्ते पृष्ठ्यष्षडहो भंवति षड्वा ऋतवष्षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतृभिस्सव्वँथ्सरन्ते सव्वँथ्सर एव प्रति तिष्ठन्ति द्वादशैकविꣳशा भंवन्ति प्रतिष्ठित्या अथो रुचमेवाऽऽत्म- ॥ २६ ॥ न्दधते बह्वष्षोडशिनो भवन्ति विजित्यै षडांश्विनानि भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठ-न्त्यूनातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै न पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारिꣳशत ऊनाच्च खलु वा अतिरिक्ताच्च प्रजापतिः प्राऽजायत ये प्रजाकामाः पशुकामास्स्युस्त एता आसीर-न्प्रैव जायन्ते प्रजयां पशुभिर्वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवव्वुँविद्वाꣳसं एकस्मान्नप-ञ्चाशमासंते विराजमेव गच्छन्त्यन्नादा भंवन्त्यतिरात्राववभितों भवतोऽन्नाद्यस्य परिंगृहीत्यै ॥ २७ ॥ वज्र आत्मन्प्रजया द्वाविꣳशतिश्च ॥ ७ ॥

सव्वँथ्सराय दीक्षिष्यमाणा एकाष्टकायान्दीक्षेरन्नेषा वै सव्वँथ्सरस्य पत्नी यदेकाष्टकैत-स्याव्वाँ एष एताꣳ रात्रिव्वँसति साक्षादेव सव्वँथ्सरमारभ्य दीक्षन्त आर्तव्वाँ एते सव्वँथ्सरस्या-ऽभि दीक्षन्ते य एकाष्टकायान्दीक्षन्तेऽन्तनामानावृतू भंवतो व्यस्तव्वाँ एते सव्वँथ्सरस्याऽभि दी-क्षन्ते य एकाष्टकायान्दीक्षन्तेऽन्तनामानावृतू भंवतः फल्गुनीपूर्णमासे दीक्षेरन्मुखव्वाँ एत- ॥ २८ ॥ थ्सव्वँथ्सरस्य यत्फल्गुनीपूर्णमासो मुखत एव सव्वँथ्सरमारभ्य दीक्षन्ते तस्यैकैव निर्या यथ्साम्मैघ्ये विषुवान्थ्संपद्यते चित्रापूर्णमासे दीक्षेरन्मुखव्वाँ एतथ्सव्वँथ्सरस्य यच्चित्रापूर्णमासो मुखत एव सव्वँथ्सरमारभ्य दीक्षन्ते तस्य न का चन निर्या भवति चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्तेषामेकाष्टकायांक्रयस्सं पद्यते तेनैकाष्टकान्न छम्बट्कुर्वन्ति तेषाँ ॥ २९ ॥ पूर्वपक्षे सुत्या सं पद्यते पूर्वपक्षं मासा अभि सं पद्यन्ते ते पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठत ओषधयो वनस्पतयो-ऽनूत्तिष्ठन्ति तान्कल्याणी कीर्तिरनूत्तिष्ठत्यराथ्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति ॥ ३० ॥ एतच्छंबट्कुर्वन्ति तेषाञ्चतुस्त्रिꣳशच्च ॥ ८ ॥

सुवर्गव्वाँ एते लोकय्यँन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उप-सद्भिर्द्वाभ्याँल्लोमाऽव द्यन्ति द्वाभ्यान्त्वचन्द्वाभ्यामसृद्द्वाभ्याँ माꣳसन्द्वाभ्यामस्थि द्वाभ्याँ मज्ञा-

नमात्मदक्षिणँव्वै सत्रमात्मानमेव दक्षिणान्नीत्वा सुवर्गँल्लोकँय्यन्ति शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाᳪंसस्सुवर्गँल्लोकमयामेति ॥ ३१ ॥ सुवर्गं पञ्चाशत् ॥ ९ ॥

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनाङ्कस्मात्तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथाऽतिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोममेवैतत्पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान्प्र युङ्क्ते ते ॥ ३२ ॥ सᳪंस्तुता विराजमभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनस्सुवर्गो वै लोको ज्योतिरूर्ग्विराट्थ्सुवर्गमेव तेन लोकँय्यन्ति रथन्तरन्दिवा भवति रथन्तरन्नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरन्तृतीयसवने ब्रह्मसामं बृहत्तन्मद्ध्यतो दधति विधृत्यै तेनाऽजामि ॥ ३३ ॥ त एकान्न पञ्चाशच्च ॥ १० ॥

ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति गोष्टोमन्द्वितीयमुप यन्त्यन्तरिक्ष एव तेन प्रति तिष्ठन्त्यायुष्टोमन्तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयँव्वाव ज्योतिरन्तरिक्षङ्गौरसावायुर्यदेतान्थ्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति ते सᳪंस्तुता विराज- ॥ ३४ ॥ मभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनस्सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाऽव रुन्धते ते न क्षुधाऽऽर्तिमार्च्छन्त्यक्षोधुका भवन्ति क्षुथ्संबाधा इव हि सत्रिणोऽग्निष्टोमावभितः प्रधी तावुक्थ्या मद्ध्ये नभ्यन्तत्तदेतत्परियदेवचक्रँय्यदेतेन ॥ ३५ ॥ षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते षडहेन यन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्युभयतोज्योतिषा यन्त्युभयत एव सुवर्गे लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतस्तानि द्वादशाऽहानि सं पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ ॥ ३६ ॥ तत्पुरुषमनु पर्यावर्तन्ते त्रयष्षडहा भवन्ति तान्यष्टादशाऽहानि सं पद्यन्ते नवाऽन्यानि नवाऽन्यानि नव वै पुरुषे प्राणास्तत्प्राणाननु पर्यावर्तन्ते चत्वारष्षडहा भवन्ति तानि चतुर्विᳪंशतिरहानि सं पद्यन्ते चतुर्विᳪंशतिरर्द्धमासास्सँव्वथ्सरस्तथ्सँव्वथ्सरमनु पर्यावर्तन्तेऽप्रतिष्ठितस्सँव्वथ्सर इति खलु वा आहुर्वर्षीयान्प्रतिष्ठाया इत्येतावद्वै सँव्वथ्सरस्य ब्राह्मणँय्यावन्मासो मासिमास्येव प्रतितिष्ठन्तो यन्ति ॥ ३७ ॥ विराजमेतेन द्वादशा-वेतावद्वा अष्टौ च ॥ ११ ॥

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैश्शल्मलिर्वृद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्चमसैरुदुंबर ऊर्जा गायत्री छन्दोभिस्त्रिवृथ्स्तोमैरवन्तीस्स्थाऽवन्तीस्त्वाऽवन्तु प्रियन्त्वा प्रियाणाँव्वर्षिष्ठमाप्यानान्निधीनान्त्वा निधिपतिᳪं हवामहे वसो मम ॥ ३८ ॥ मेषष्षट्त्रिᳪंशत् ॥ १२ ॥

कूप्याभ्यस्स्वाहा कूल्याभ्यस्स्वाहा विकर्याभ्यस्स्वाहाऽवट्याभ्यस्स्वाहा खन्याभ्यस्स्वाहा ह्रद्याभ्यस्स्वाहा सूद्याभ्यस्स्वाहा सरस्याभ्यस्स्वाहा वैशन्तीभ्यस्स्वाहा पल्वल्याभ्यस्स्वाहा वर्ष्या-

भ्यस्स्वाहाऽवर्ष्याभ्यस्स्वाहा ह्रादुनीभ्यस्स्वाहा पृष्वाभ्यस्स्वाहा स्यन्दमानाभ्यस्स्वाहा स्थावराभ्यस्स्वाहा नादेयीभ्यस्स्वाहा सैन्धवीभ्यस्स्वाहा समुद्रियाभ्यस्स्वाहा सर्वाभ्यस्स्वाहा ॥ ३९ ॥ कूप्याभ्यश्चत्वारिꣳशत् ॥ १३ ॥

अद्भ्यस्स्वाहा वहन्तीभ्यस्स्वाहा परिवहन्तीभ्यस्स्वाहा समन्तँव्वहन्तीभ्यस्स्वाहा शीघ्रँव्वहन्तीभ्यस्स्वाहा शीभँव्वहन्तीभ्यस्स्वाहोग्रँव्वहन्तीभ्यस्स्वाहा भीमँव्वहन्तीभ्यस्स्वाहाऽम्भोभ्यस्स्वाहा नभोभ्यस्स्वाहा महोभ्यस्स्वाहा सर्वस्मै स्वाहा ॥ ४० ॥ अद्भ्य एकान्न त्रिꣳशत् ॥ १४ ॥

यो अर्वन्तञ्जिघाꣳसति तमभ्यमीति वरुणः । परो मर्तः परश्श्वा । अहञ्च त्वञ्च वृत्रहन्थ्सं बभूव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मꣳसतै भद्रा इन्द्रस्य रातयः । अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानꣳ रजाꣳसि । स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तँव्विविदद्युधा ते ॥ ४१ ॥ विविदद्द्वे च ॥ १५ ॥

नमो राज्ञे नमो वरुणाय नमोऽश्वाय नमः प्रजापतये नमोऽधिपतयेऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मान्धेहि मयि धेह्युपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा ॥ ४२ ॥ नम एकान्न त्रिꣳशत् ॥ १६ ॥

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड । यास्सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद । या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ । या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र ॥ ४३ ॥ गोष्ठे रिरीहि । प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिस्सँव्विदानः । शिवास्सतीरुप नो गोष्ठमाऽकस्तासाँव्वयं प्रजया सꣳ सदेम । इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा महीमू षु सुत्रामाणम् ॥ ४४ ॥ इन्द्राऽष्टात्रिꣳशच्च ॥ १७ ॥

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः । किꣳ स्विदासीत्पिशङ्गिला किꣳ स्विदासीत्पिलिप्पिला । द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत्पिशङ्गिलाऽविरासीत्पिलिप्पिला । कस्स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजङ्किꣳ स्विदावपनम्महत् । सूर्य एकाकी चरति ॥ ४५ ॥ चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनम्महत् । पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमँव्व्योम । वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमँव्व्योम ॥ ४६ ॥ सूर्य एकाकी चरति षट्चत्वारिꣳशच्च ॥ १८ ॥

अंबे अंबाल्यंबिके न मा नयति कश्चन । ससस्त्यश्वकः । सुभंगे कांपीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम् । आऽहमंजानि गर्भधमा त्वमंजासि गर्भधम् । तौ सह चतुरः पदस्सं प्र सारयावहै । वृषा वा॒ꣳ रेतोधा रेतो दधातूथ्सक्थ्यौर्गृदन्धेह्यञ्जिमुदञ्जिमन्वज । यस्स्त्रीणाञ्जीवभोजनो य आसां ॥ २७ ॥ बिलधावनः । प्रियस्स्त्रीणामपीच्यः । य आसाङ्कृष्णे लख्ष्मणि सर्दिगृदि परावधीत् । अंबे अंबाल्यंबिके न मा यभति कश्चन । ससस्त्यश्वकः । ऊर्द्ध्वामेनामुच्छ्रयताद्वेणुभारङ्गिराविव । अथाऽस्या मद्ध्यमेधताꣳ शीते वाते पुनन्निव । अंबे अंबाल्यंबिके न मा यभति कश्चन । ससस्त्यश्वकः । यद्धरिणी यवमत्ति न ॥ ४८ ॥ पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति । अंबे अंबाल्यंबिके न मा यभति कश्चन । ससस्त्यश्वकः । इयय्यका शकुन्तिकाऽऽहलमिति सर्पति । आहतङ्गभे पसो नि जल्गुलीति धाणिका । अंबे अंबाल्यंबिके न मा यभति कश्चन । ससस्त्यश्वकः । माता च ते पिता च तेऽग्रव्वृंख्षस्य रोहतः । ॥ ४९ ॥ प्र सुलामीति ते पिता गभे मुष्टिमतꣳसयत् । दधिक्राव्ण्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत् । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चख्षसे । यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य ख्षयाय जिन्वथ । आपो जनयथा च नः ॥ ५० ॥ आसामत्ति न रोहतो जिन्वथ चत्वारि च ॥ १९ ॥

भूर्भुवस्सुवर्वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एतꣳ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः । लाजी(३)ञ्छाची(३)न् यशो ममाँ(४) । यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते । युञ्जन्ति ब्रद्ध्नमरुषञ्चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि । युञ्जन्त्यस्य काम्या हरी विपख्षसा रथे । शोणा धृष्णू नृवाहसा । केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ५१ ॥ ब्रद्ध्नं पञ्चविꣳशतिश्च ॥ २० ॥

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा स्नावभ्यस्स्वाहा सन्तानेभ्यस्स्वाहा परिसन्तानेभ्यस्स्वाहा पर्वभ्यस्स्वाहा सन्धानेभ्यस्स्वाहा शरीरेभ्यस्स्वाहा यज्ञाय स्वाहा दख्षिणाभ्यस्स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ ५२ ॥ प्राणायाऽष्टाविꣳशतिः ॥ २१ ॥

सिताय स्वाहाऽसिताय स्वाहाऽभिहिताय स्वाहाऽनभिहिताय स्वाहा युक्ताय स्वाहाऽयुक्ताय स्वाहा सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा सव्वञ्चते स्वाहाऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा ॥ ५३ ॥ सितायाऽष्टात्रिꣳशत् ॥ २२ ॥

बृहस्पतिश्श्रद्यथा वा ऋख्षा वै प्रजापतिर्येनयेन द्वे वाव देवसत्रे आदित्या अकामयन्त सुवर्गव्विसिष्ठस्सव्वथ्सराय सुवर्गय्ये सत्रं ब्रह्मवादिनोऽतिरात्रो ज्योतिष्टोमं मेषः कूप्याभ्योऽद्भ्यो यो नमो मयोभूः किꣳ स्विदंबे भूः

प्राणाय सिताय द्वाविꣳशतिः ॥ २२ ॥ बृहस्पतिः प्रति तिष्ठन्ति वै दशरात्रेण सुवर्ग्यो अर्वन्तं भूरिपञ्चाशत् ॥ ५३ ॥ बृहस्पतिस्सर्वस्मै स्वाहा ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां सप्तमकाण्डे चतुर्थः प्रश्नस्समाप्तः ॥



ॐ

ॐ नमः परमात्मने

## कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां

॥ सप्तमकाण्डे पञ्चमप्रश्नप्रारम्भः ॥

॥ श्रीगुरुभ्यो नमः हरिः ओ(४)म् ॥

गावो वा एतथ्सत्रमासताऽशृङ्गास्सतीश्शृङ्गाणि नो जायन्ता इति कामेन तासान्दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नराथ्स्मेत्यथ यासान्नाऽजायन्त तास्सँव्वथ्सरमाप्त्वोदतिष्ठन्नराथ्स्मेति यासाञ्चाऽजायन्त यासाञ्च न ता उभयीरुदतिष्ठन्नराथ्स्मेति गोसत्रँव्वै ॥ १ ॥ सँव्वथ्सरो य एवँव्विद्वाꣳसस्सँवथ्सरमुपयन्त्यृध्नुवन्त्येव तस्मात्तूपरा वार्षिकौ मासौ पत्वा चरति सत्राभिजितꣳ ह्यस्यै तस्माथ्सँव्वथ्सरसदो यत्किञ्च गृहे क्रियते तदाप्तमवरुद्धमभिजितङ्क्रियते समुद्रँव्वा एते प्र प्लवन्ते ये सँव्वथ्सरमुपयन्ति यो वै समुद्रस्य पारन्न पश्यति न वै स तत उदेति सँव्वथ्सरो ॥ २ ॥ वै समुद्रस्तस्यैतत्पारँय्यदतिरात्रौ य एवँव्विद्वाꣳसस्सँव्वथ्सरमुपयन्त्यनार्ता एवोदृचङ्गच्छन्तीयँव्वै पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः पूर्वोऽपान उत्तरः प्ररोधनं पूर्वं उदयनमुत्तरो ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्याऽनुख्यात्यै चतुर्विꣳशः प्रायणीयो भवति चतुर्विꣳशतिरर्द्धमासा- ॥ ३ ॥ स्सँव्वथ्सरः प्रयन्त एव सँव्वथ्सरे प्रति तिष्ठन्ति तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीस्सँव्वथ्सरस्य रात्रय उभे एव सँव्वथ्सरस्य रूपे आप्नुवन्ति ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति षडहा भवन्ति षड्वा ऋतवस्सँव्वथ्सर ऋतुष्वेव सँव्वथ्सरे प्रति तिष्ठन्ति गौश्चाऽऽयुश्च मद्ध्यतस्स्तोमौ भवतस्सँव्वथ्सरस्यैव तन्मिथुनं मद्ध्यतो ॥ ४ ॥ दधति प्रजननाय ज्योतिरभितो भवति विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकँय्यन्त्यथो उभयतोज्योतिषैव षडहेन सुवर्गल्लोकँय्यन्ति ब्रह्मवादिनो वदन्त्यासते केन यन्तीति देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था गायत्री त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जगती यदेते स्तोमा भवन्ति देवयानेनैव ॥ ५ ॥ तत्पथा यन्ति समानꣳ साम भवति देवलोको वै साम देवलोकादेव न यन्त्यन्याअन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो

मनुष्यलोकादेवाऽन्यमन्यन्देवलोकमभ्यारोहन्तो यन्त्यभिवर्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याऽभिवृत्त्या अभिजिद्भवति सुवर्गस्य लोकस्याऽभिजित्यै विश्वजिद्भवति विश्वस्य जित्यै मासिमासि पृष्ठान्युप यन्ति मासिमास्यतिग्राह्या गृह्यन्ते मासिमास्येव वीर्यन्दधति मासां प्रतिष्ठित्या उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मादुपरिष्टादोषधयः फलङ्गृह्णन्ति ॥ ६ ॥ गोसत्रँव्वा एति सँव्वथ्सरोऽर्द्धमासा मिथुनम्मद्ध्यतो देवयानेनैव वीर्यन्त्रयोदशं च ॥ १ ॥

गावो वा एतथ्सत्रमासताऽशृङ्गास्सतीश्शृङ्गाणि सिषासन्तीस्तासान्दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नराथ्स्मोत्तिष्ठामाऽव तङ्काममरुथ्स्महि येन कामेन न्यषदामेति तासामु त्वा अब्रुवन्नर्द्धा वा यावतीर्वाऽऽसामहा एवेमौ द्वादशौ मासौ सँव्वथ्सरꣳ संपाद्योत्तिष्ठामेति तासां- ॥ ७ ॥ न्द्वादशे मासि शृङ्गाणि प्राऽवर्तन्त श्रद्धया वाऽश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्द्ध्नुवन् याश्च शृङ्गाण्यसन्वन् याश्चोर्जमवारुन्धतर्द्ध्नोति दशसु मासूत्तिष्ठन्नृद्ध्नोति द्वादशसु य एवँव्वेद पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्तद्वा एतदृद्धमयनन्तस्मादेतद्गोसनि ॥ ८ ॥ तिष्ठामेति तासान्तस्माद्द्वे च ॥ २ ॥

प्रथमे मासि पृष्ठान्युप यन्ति मद्ध्यम उप यन्त्युत्तम उप यन्ति तदाहुर्यँव्वै त्रिरेकस्याऽह्न उपसीदन्ति दह्रँव्वै साऽपराभ्यान्दोहाभ्यान्दुहेऽथ कुतस्सा धोक्ष्यते यान्द्वादश कृत्व उपसीदन्तीति सँव्वथ्सरꣳ संपाद्योत्तमे मासि सकृत्पृष्ठान्युपेयुस्तद्यजमाना यज्ञम्पशूनव रुन्धते समुद्रँव्वा ॥ ९ ॥ एतेऽनवारमपारं प्र प्लवन्ते ये सँव्वथ्सरमुपयन्ति यद्बृहद्रथन्तरे अन्वर्जेयुर्यथा मद्ध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक्तदनुथ्सर्गं बृहद्रथन्तराभ्यामित्वा प्रतिष्ठाङ्गच्छन्ति सर्वेभ्यो वै कामेभ्यस्सन्धिर्दुहे तद्यजमानास्सर्वान्कामानव रुन्धते ॥ १० ॥ समुद्रँव्वै चतुस्त्रिꣳशच्च ॥ ३ ॥

समान्य ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेव न यन्त्यन्यदन्यथ्साम भवति देवलोको वै साम देवलोकादेवाऽन्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति जगतीमग्र उप यन्ति जगतीँव्वै छन्दाꣳसि प्रत्यवरोहन्त्याग्रयणङ्ग्रहा बृहत्पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमास्तस्माज्ज्यायाꣳसङ्कनीयान्प्रत्यवरोहति वैश्वकर्मणो गृह्यते विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत आदित्यो ॥ ११ ॥ गृह्यत इयँव्वा अदितिरस्यामेव प्रति तिष्ठन्त्यन्योन्यो गृह्येते मिथुनत्वाय प्रजात्या अवान्तरँव्वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानास्सृजन्त एताꣳ ह वा उदङ्कश्शौल्बायनस्सत्रस्यर्द्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैवैषा शान्तिः ॥ १२ ॥ आदित्यस्तस्यैव द्वे च ॥ ४ ॥

यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात्पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दाꣳसि वृङ्क्ते वृषण्वतीं प्रतिपदङ्कुर्यात्प्रातस्सवनादेवैषामिन्द्रँव्वृङ्क्तेऽथो खल्वाहुस्सवनमुखे-

सवनमुखे कार्येति सवनमुखाथ्सवनमुखादेवैषामिन्द्रँव्वृङ्क्ते सँव्वेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूँत्यै स्वाहा छन्दाꣳसि वै सँव्वेश उपवेशश्छन्दोभिरेवैषा- ॥ १३ ॥
ञ्छन्दाꣳसि वृङ्क्ते सजनीयꣳ शस्यँव्विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमेतावद्वा अस्ति यावदेतद्यावदेवाऽस्ति तदेषाँव्वृङ्क्ते यदि प्रातस्सवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन् यद्वै यज्ञस्याऽतिरिच्यते विष्णुन्तच्छिपिविष्टमभ्यति रिच्यते तद्विष्णुश्शिपिविष्टोऽतिरिक्त एवाऽतिरिक्तन्दधात्यथो अतिरिक्तेनैवाऽतिरिक्तमाप्त्वाऽव रुन्धते यदि मद्ध्यन्दिने दीर्येत वषट्कारनिधनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनद्गमयन्ति यदि तृतीयसवन एतदेव ॥ १४ ॥ छन्दोभिरेवैषामवैकान्न विꣳशतिश्च ॥ ५ ॥

षडहैर्मासान्थ्संपाद्याऽहरुथ्सृजन्ति षडहैर्हि मासान्थ्संपश्यन्त्यर्द्धमासैर्मासान्थ्संपाद्याऽहरुथ्सृजन्त्यर्द्धमासैर्हि मासान्थ्संपश्यन्त्यमावास्यया मासान्थ्संपाद्याऽहरुथ्सृजन्त्यमावास्यया हि मासान्थ्संपश्यन्ति पौर्णमास्या मासान्थ्संपाद्याऽहरुथ्सृजन्ति पौर्णमास्या हि मासान्थ्संपश्यन्ति यो वै पूर्ण आसिञ्चति परा स सिञ्चति यः पूर्णादुदचति ॥ १५ ॥ प्राणमस्मिन्थ्स दधाति यत्पौर्णमास्या मासान्थ्संपाद्याऽहरुथ्सृजन्ति सँव्वथ्सरायैव तत्प्राणन्दधति तदनु सत्रिणः प्राऽणन्ति यदहर्नोथ्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ सँव्वथ्सरो वि पतेदार्तिमाच्छेयुर्यत्पौर्णमास्या मासान्थ्संपाद्याऽहरुथ्सृजन्ति सँव्वथ्सरायैव तदुदानन्दधति तदनु सत्रिण उ- ॥ १६ ॥ दनन्ति नाऽऽर्तिमाच्छन्ति पूर्णमासे वै देवानाꣳ सुतो यत्पौर्णमास्या मासान्थ्संपाद्याऽहरुथ्सृजन्ति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति वि वा एतद्यज्ञञ्छिन्दन्ति यथ्षडहसन्ततꣳ सन्तमथाऽहरुथ्सृजन्ति प्राजापत्यं पशुमा लभन्ते प्रजापतिस्सर्वा देवता देवताभिरेव यज्ञꣳ सन्तन्वन्ति यन्ति वा एते सवनाद्येऽह- ॥ १७ ॥
रुथ्सृजन्ति तुरीयङ्खलु वा एतथ्सवनँय्यथ्सान्नाय्यँय्यथ्सान्नाय्यं भवति तेनैव सवनान्न यन्ति समुपहूय भक्षयन्त्येतथ्सोमपीथा ह्येतर्हि यथायतनँव्वा एतेषाꣳ सवनभाजो देवता गच्छन्ति येऽहरुथ्सृजन्त्यनुसवनं पुरोडाशान्निर्वपन्ति यथायतनादेव सवनभाजो देवता अव रुन्धतेऽष्टाकपालान्प्रातस्सवन एकादशकपालान्माद्ध्यन्दिने सवने द्वादशकपालाꣳस्तृतीयसवने छन्दाꣳस्येवाऽऽप्त्वाऽव रुन्धते वैश्वदेवञ्चरुन्तृतीयसवने निर्वपन्ति वैश्वदेवँव्वै तृतीयसवनन्तेनैव तृतीयसवनान्न यन्ति ॥ १८ ॥ उदचत्युद्येऽहरास्वा पञ्चदश च ॥ ६ ॥

उथ्सृज्या(३)न्नोथ्सृज्या(३)मिति मीमाꣳसन्ते ब्रह्मवादिनस्तद्वाहुरुथ्सृज्यमेवेत्यमावास्यायाञ्च पौर्णमास्याञ्चोथ्सृज्यमित्याहुरेते हि यज्ञँव्वहत इति ते त्वाव नोथ्सृज्ये इत्याहुर्ये अवान्तरँय्यज्ञं भेजाते इति या प्रथमा व्यष्टका तस्यामुथ्सृज्यमित्याहुरेष वै मासो विशर इति नाऽऽदिष्ट- ॥ १९ ॥ मुथ्सृजेयुर्यदादिष्टमुथ्सृजेयुर्यादृशे पुनः पर्याप्लावे मद्ध्ये षडहस्य संपद्येत षडहैर्मासान्थ्संपाद्य यथ्सप्तममहस्तस्मिन्नुथ्सृजेयुस्तदग्नये वसुमते पुरोडाशमष्टाकपालन्निर्वपेयुरैन्द्रन्दधीन्द्राय मरुत्वते

पुरोडाशमेकादशकपालव्वैश्वदेवन्द्वादशकपालमग्नेर्वै वसुमतः प्रातस्सवनय्यदग्नये वसुमते पुरोडाश-मष्टाकपालन्निर्वपन्ति देवतामेव तद्भागिनीङ्कुर्वन्ति ॥ २० ॥ सवनमष्टाभिरुप यन्ति यदैन्द्रन्दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्तीन्द्रस्य वै मरुत्वतो माध्यन्दिनꣳ सवनय्यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालन्निर्वपन्ति देवतामेव तद्भागिनीङ्कुर्वन्ति सवनमेकादशभिरुप यन्ति विश्वे-षाव्वै देवानामृभुमतान्तृतीयसवनय्यद्वैश्वदेवन्द्वादशकपालन्निर्वपन्ति देवता एव तद्भागिनीः कुर्वन्ति सवनन्द्वादशभि- ॥ २१ ॥ रुप यन्ति प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्याऽनुसर्गा-याऽभिवर्त इतषण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो ब्रह्मणैव तथ्सुवर्गल्लोकमभिवर्तयन्तो यन्ति प्रतिकूलमिव हीतस्सुवर्गो लोक इन्द्र क्रतुन्न आ भर पिता पुत्रेभ्यो यथा । शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहीत्यमुत आयताꣳ षण्मासो ब्रह्मसामं भवत्ययव्वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति ॥ २२ ॥ नाऽऽदिष्टङ्कुर्वन्ति द्वादश-भिरिति विꣳशतिश्च ॥ ७ ॥

देवानाव्वा अन्तञ्जग्मुषामिन्द्रियव्वीर्यमपाऽक्रामत्तत्क्रोशेनाऽवाऽरुन्धत तत्क्रोशस्य क्रोश-त्वय्यत्क्रोशेन चात्वालस्याऽन्ते स्तुवन्ति यज्ञस्यैवाऽन्तङ्गत्वेन्द्रियव्वीर्यमव रुन्धते सत्रस्य-र्द्ध्वाऽऽहवनीयस्याऽन्ते स्तुवन्त्यग्निमेवोपद्रष्टारङ्कृत्वर्द्धिमुप यन्ति प्रजापतेरूहृदयेन हविर्द्धानेऽन्त-स्स्तुवन्ति प्रेमाणमेवाऽस्य गच्छन्ति श्लोकेन पुरस्तात्सदस- ॥ २३ ॥ स्स्तुवन्त्यनुश्लोकेन पश्चाद्यज्ञ-स्यैवाऽन्तङ्गत्वा श्लोकभाजो भवन्ति नवभिरद्ध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमा-नेषु दधाति सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियन्दधत्यप्रतिहृताभिरुद्गायति तस्मात्पुरुषस्सर्वाण्य-न्यानि शीर्ष्णोऽङ्गानि प्रत्यचति शिर एव न पञ्चदशꣳ रथन्तरम्भवतीन्द्रियमेवाऽव रुन्धते सप्तदशं ॥ २४ ॥ बृहदन्नाद्यस्याऽवरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशं भद्रन्द्विपदासु प्रतिष्ठित्यै पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै प्रजापतिः प्रजा असृजत सोऽकामयताऽऽसामहꣳ राज्यं परीयामिति तासाꣳ राजनेनैव राज्यं पर्यैत्तद्राजनस्य राजनत्वय्यद्राजनं भवति प्रजानामेव तद्यजमाना राज्यं परि यन्ति पञ्चविꣳशं भवति प्रजापते- ॥ २५ ॥ रास्यै पञ्चभिस्तिष्ठन्तस्स्तुवन्ति देवलोकमेवाऽभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाऽभि जयन्ति दश सं पद्यन्ते दशाक्षरा विराडन्नव्विराड्विराजैवाऽन्नाद्यमव रुन्धते पञ्चधा विनिषद्य स्तुवन्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्येकैकयाऽस्तुतया समायन्ति दिग्भ्य एवाऽन्नाद्यꣳ सं भरन्ति ताभिरुद्गातोद्गायति दिग्भ्य एवाऽन्नाद्यꣳ ॥ २६ ॥ संभृत्य तेज आत्मन्दधते तस्मादेकः प्राणस्सर्वाण्यङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमङ्कुरुत एवमेव तद्यजमानाः प्रजानामुत्तमा भवन्त्यासन्दीमुद्गाताऽऽ रोहति साम्राज्यमेव गच्छन्ति प्लेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावद्ध्वर्युर्ब्रद्ध्नस्यैव विष्टपङ्गच्छ-

न्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यथो आक्रमणमेव तथ्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै ॥ २७ ॥ सदसस्सप्तदशं प्रजापतेर्गायति दिग्भ्य एवाऽन्नाद्यं प्रत्येकादश च ॥ ८ ॥

अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलांन्देनेराल्लूतामवाऽरुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानास्सृजन्त इलांन्दं भवति प्रजाभ्य एव सृष्टाभ्य इराल्लूतामव रुन्धते तस्माद्याः समाः सत्रः समृद्धङ्क्षोधुकास्ताः समाः प्रजा इषः ह्यासामूर्जमाददते याः समाव्यृद्धमक्षोधुकास्ताः समाः प्रजा ॥ २८ ॥ न ह्यासामिषमूर्जमाददत उत्क्रोदङ्कुर्वते यथा बन्धान्मुमुचाना उत्क्रोदङ्कुर्वत एवमेव तद्यजमाना देवबन्धान्मुमुचाना उत्क्रोदङ्कुर्वत इषमूर्जमात्मन्दधाना वाणश्शततन्तुर्भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्त्याजिन्धावन्त्यनभिजितस्याऽभिजित्यै दुन्दुभीन्थ्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव ॥ २९ ॥ वाचमव रुन्धते भूमिदुन्दुभिमा घ्नन्ति यैवेमाव्वाक्प्रविष्टा तामेवाऽव रुन्धतेऽथो इमामेव जयन्ति सर्वा वाचो वदन्ति सर्वासाव्वाचामवरुद्ध्या आर्द्रे चर्मन्व्यायच्छेते इन्द्रियस्याऽवरुद्ध्या आऽन्यः क्रोशति प्राऽन्यश्शंसति य आक्रोशति पुनात्येवैनान्थ्स यः प्रशंसति पूतेष्वेवाऽन्नाद्यन्दधात्यृषिकृतश्च ॥ ३० ॥ वा एते देवकृतश्च पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाः सामानि भवन्त्युभयस्याऽवरुद्ध्यै यन्ति वा एते मिथुनाद्ये सव्वथ्सरमुपयन्त्यन्तर्वेदि मिथुनौ सं भवतस्तेनैव मिथुनान्न यन्ति ॥ ३१ ॥ व्यृद्धमक्षोधुकास्ताः समाः प्रजाः परमामेव च त्रिंशच्च ॥ ९ ॥

चर्माऽव भिन्दन्ति पाप्मानमेवैषामव भिन्दन्ति माऽप राथ्सीर्माऽति व्याथ्सीरित्याह संप्रत्येवैषां पाप्मानमव भिन्दन्त्युदकुम्भानधिनिधाय दास्यो मार्जालीयं परि नृत्यन्ति पदो निघ्नतीरिदम्मधुङ्गायन्त्यो मधु वै देवानां परमसन्नाद्यं परममेवाऽन्नाद्यमव रुन्धते पदो नि घ्नन्ति महीयामेवैषु दधति ॥ ३२ ॥ चर्मैकान्न पञ्चाशत् ॥ १० ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रः स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाऽभिवर्षते स्वाहा परिवर्षते स्वाहा सव्वर्षते ॥ ३३ ॥ स्वाहाऽनुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहाऽऽतस्यते स्वाहाऽऽतपते स्वाहोग्रमातपते स्वाहर्ग्भ्यस्स्वाहा यजुर्भ्यस्स्वाहा सामभ्यस्स्वाहाऽङ्गिरोभ्यस्स्वाहा वेदेभ्यस्स्वाहा गाथाभ्यस्स्वाहा नाराशंसीभ्यस्स्वाहा रैभीभ्यस्स्वाहा सर्वस्मै स्वाहा ॥ ३४ ॥ सव्वर्षते रैभीभ्यस्स्वाहा द्वे च ॥ ११ ॥

दत्वते स्वाहाऽदन्तकाय स्वाहा प्राणिने स्वाहाऽप्राणाय स्वाहा मुखवते स्वाहाऽमुखाय स्वाहा नासिकवते स्वाहाऽनासिकाय स्वाहाऽख्षण्वते स्वाहाऽनख्षिकाय स्वाहा कर्णिने स्वाहाऽकर्णकाय स्वाहा शीर्षण्वते स्वाहाऽशीर्षकाय स्वाहा पद्वते स्वाहाऽपादकाय स्वाहा प्राणते स्वाहाऽप्राणते स्वाहा वदते स्वाहाऽवदते स्वाहा पश्यते स्वाहाऽपश्यते स्वाहा शृण्वते स्वाहाऽशृण्वते स्वाहा मनस्विने स्वाहा- ॥ ३५ ॥ ऽमनसे स्वाहा रेतस्विने स्वाहाऽरेतस्काय स्वाहा प्रजाभ्यस्स्वाहा प्रजननाय स्वाहा लोमवते स्वाहाऽलोमकाय स्वाहा त्वचे स्वाहाऽत्वक्काय स्वाहा चर्मण्वते स्वाहाऽचर्मकाय स्वाहा लोहितवते स्वाहाऽलोहिताय स्वाहा माꣳसन्वते स्वाहाऽमाꣳसकाय स्वाहा स्नावभ्यस्स्वाहाऽस्नावकाय स्वाहाऽस्थन्वते स्वाहाऽनस्थिकाय स्वाहा मज्जन्वते स्वाहाऽमज्जकाय स्वाहाऽङ्गिने स्वाहाऽनङ्गाय स्वाहाऽऽत्मने स्वाहाऽनात्मने स्वाहा सर्वस्मै स्वाहा ॥ ३६ ॥ मनस्विने स्वाहाऽनात्मने स्वाहा द्वे च ॥ १२ ॥

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यꣳ सन्नत्या अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा ॥ ३७ ॥ कस्त्वाऽष्टात्रिꣳशत् ॥ १३ ॥

अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाऽष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुस्सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः ॥ ३८ ॥ अग्नयेऽदित्या अनुमत्यै सप्तचत्वारिꣳशत् ॥ १४ ॥

यो वा अग्नावग्निः प्रह्रियते यश्च सोमो राजा तयोरेष आतिथ्यं यदग्नीषोमीयोऽथैष रुद्रो यश्चीयते यथ्सञ्चितेऽग्नावेतानि हवीꣳषि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून् यजमानस्याऽभि मन्येत यथ्सञ्चितेऽग्नावेतानि हवीꣳषि निर्वपति भागधेयेनैवैनꣳ शमयति नाऽस्य रुद्रोऽशान्त ॥ ३९ ॥ उपोत्थाय प्रजां पशूनभि मन्यते दश हवीꣳषि भवन्ति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव यजमाने दधात्यथो दशाख्षरा विराडन्नं विराड्विराज्येवाऽन्नाद्ये प्रति तिष्ठत्यृतुभिर्वा एष छन्दोभिस्स्तोमैः पृष्ठैश्चेतव्य इत्याहुर्यदेतानि हवीꣳषि निर्वपत्यृतुभिरेवैनञ्छन्दोभिस्स्तोमैः पृष्ठैश्चिनुते दिशस्सुषुवाणेना-॥ ४० ॥ ऽभिजित्या इत्याहुर्यदेतानि हवीꣳषि निर्वपति दिशामभिजित्या एतया वा इन्द्रन्देवा अयाजयन्तस्मादिन्द्रसव एतया मनुं मनुष्यास्तस्मान्मनुसवो यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेतयेष्ट्या यजते दिग्वतीः पुरोनुवाक्या भवन्ति सर्वासान्दिशामभिजित्यै ॥ ४१ ॥ अशान्तस्सुषुवाणेनैकचत्वारिꣳशच्च ॥ १५ ॥

यः प्राणतो निंमिषतो महित्वैक इद्राजा जगंतो बभूव । य ईशे अस्य द्विपदश्चतुंष्पदः कस्मै देवायं हविषां विधेम । उपयामगृंहीतोऽसि प्रजापंतये त्वा जुष्टंङ्गृह्णामि तस्यं ते द्यौर्महिमा नक्षंत्राणि रूपमांदित्यस्ते तेजस्तस्मैं त्वा महिम्ने प्रजापंतये स्वाहाँ ॥ ४२ ॥ यः प्राणतो द्यौरांदित्योऽष्टात्रिꣳशत् ॥ १६ ॥

य आंत्मदा बंलदा यस्य विश्वं उपासंते प्रशिषँय्यस्यं देवाः । यस्यं छायाऽमृतँय्यस्यं मृत्युः कस्मै देवायं हविषां विधेम । उपयामगृंहीतोऽसि प्रजापंतये त्वा जुष्टंङ्गृह्णामि तस्यं ते पृथिवी मंहिमौषंधयो वनस्पतंयो रूपमग्निस्ते तेजस्तस्मैं त्वा महिम्ने प्रजापंतये स्वाहाँ ॥ ४३ ॥ य आंत्मदाः पृथिव्यग्निरेकान्न चत्वारिꣳशत् ॥ १७ ॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन्राष्ट्रे राजन्यं इषव्यंश्शूरो महारथो जायतान्दोग्ध्री धेनुर्वोढाऽनड्वानाशुस्सप्तिः पुरंन्धिर्योषां जिष्णू रंथेष्ठास्सभेयो युवाऽऽस्य यजंमानस्य वीरो जायतान्निकामेनिंकामे नः पर्जन्यों वर्षतु फलिन्यों न ओषंधयः पच्यन्ताँय्योगक्षेमो नंः कल्पताम् ॥ ४४ ॥ आ ब्रह्मन्नेकंचत्वारिꣳशत् ॥ १८ ॥

आऽक्रान् वाजी पृथिवीमग्निँय्युजंमकृत वाज्यर्वाऽऽक्रान् वाज्यन्तरिंक्षँव्वायुँय्युजंमकृत वाज्यर्वा द्याँव्वाज्याऽक्रꣳस्त सूर्यँय्युजंमकृत वाज्यर्वाऽग्निस्तें वाजिन् युङ्ङ्नु त्वाऽऽ रंभे स्वस्ति मा सं पारय वायुस्तें वाजिन् युङ्ङ्नु त्वाऽऽ रंभे स्वस्ति मा सं ॥ ४५ ॥ पारयाऽऽदित्यस्तें वाजिन् युङ्ङ्नु त्वाऽऽ रंभे स्वस्ति मा सं पारय प्राणधृगंसि प्राणं मे दृꣳह व्यानधृगंसि व्यानं मे दृꣳहाऽपानधृगंस्यपानं मे दृꣳह चक्षुंरसि चक्षुर्मयिं धेहि श्रोत्रंमसि श्रोत्रं मयिं धेह्यायुंरस्यायुर्मयिं धेहि ॥ ४६ ॥ वायुस्तें वाजिन् युङ्ङ्नु त्वाऽऽ रंभे स्वस्ति मा सन्निचंत्वारिꣳशच्च ॥ १९ ॥

जज्ञि बीजँव्वर्ष्टां पर्जन्यः पक्ता सस्यꣳ सुंपिप्पला ओषंधयस्स्वधिचरणेयꣳ सूंपसदनोऽग्निस्स्वंद्ध्यक्षमन्तरिंक्षꣳ सुपावः पवंमानस्सूपस्थाना द्यौश्शिवमसौ तपन् यथापूर्वमंहोरात्रे पंञ्चदशिनोऽर्द्धमासास्त्रिꣳशिनो मासाः क्लृप्ता ऋतवश्शान्तस्सँव्वथ्सरः ॥ ४७ ॥ जज्ञि बीजमेकंत्रिꣳशत् ॥ २० ॥

आग्नेयोंऽष्टाकंपालस्सौम्यश्चरुस्सांवित्रोऽष्टाकंपालः पौष्णश्चरू रौद्रश्चरुरग्नयें वैश्वानराय द्वादंशकपालो मृगाखरे यदि नाऽऽगच्छेदग्नयेऽꣳहोमुचेऽष्टाकंपालस्सौर्यं पयो वायव्यं आज्यभागः ॥ ४८ ॥ आग्नेयश्चतुर्विꣳशतिः ॥ २१ ॥

अग्नयेऽꣳहोमुचेऽष्टाकंपाल इन्द्राग्याऽꣳहोमुच एकांदशकपालो मित्रावरुंणाभ्यामागोमुग्भ्याँ पयस्यां वायोसावित्र आंगोमुग्भ्याँश्चरुरश्विभ्यांमागोमुग्भ्याँन्धाना मरुद्भ्यं एनोमुग्भ्यंस्सप्तकंपालो विश्वैभ्यो देवेभ्यं एनोमुग्भ्यो द्वादंशकपालोऽनुंमत्यै चरुरग्नयें वैश्वानराय द्वादंशकपालो द्यावांपृथिवीभ्यामꣳहोमुग्भ्याँन्द्विकपालः ॥ ४९ ॥ अग्नयेऽꣳहोमुचें त्रिꣳशत् ॥ २२ ॥

अग्नये समनमत्पृथिव्यै समनमद्यथाऽग्निः पृथिव्या समनमदेवं मह्यं भद्रास्सन्नतयस्सन्नमन्तु वायवे समनमदन्तरिख्षाय समनमद्यथा वायुरन्तरिख्षेण सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा चन्द्रमसे समनमन्नख्षत्रेभ्यस्समनमद्यथा चन्द्रमा नख्षत्रैर्वरुणाय समनमदद्भ्यस्समनमद्यथा ॥ ५० ॥ वरुणोऽद्भिस्साम्ने समनमदृचे समनमद्यथा सामर्चा ब्रह्मणे समनमत्ख्षत्राय समनमद्यथा ब्रह्म ख्षत्रेण राज्ञे समनमद्विशे समनमद्यथा राजा विशा रथाय समनमदश्वेभ्यस्समनमद्यथा रथोऽश्वैः प्रजापतये समनमद्भूतेभ्यस्समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं भद्रास्सन्नतयस्सन्नमन्तु ॥ ५१ ॥ अद्भ्यस्समनमद्यथा मह्यश्चत्वारि च ॥ २३ ॥

ये ते पन्थानस्सवितः पूर्व्यासोऽरेणवो वितता अन्तरिख्षे । तेभिर्नो अद्य पथिभिस्सुगेभी रख्षा च नो अधि च देव ब्रूहि । नमोऽग्नये पृथिविख्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेऽन्तरिख्षख्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमस्सूर्याय दिविख्षिते लोकस्पृते लोकमस्मै यजमानाय देहि ॥ ५२ ॥ ये ते चतुश्चत्वारिꣳशत् ॥ २४ ॥

यो वा अश्वस्य मेद्ध्यस्य शिरो वेद शीर्षण्वान्मेद्ध्यो भवत्युषा वा अश्वस्य मेद्ध्यस्य शिरस्सूर्यश्चख्षुर्वातः प्राणश्चन्द्रमाश्श्रोत्रन्दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्द्धमासाः पर्वाणि मासाँस्सन्धानाँन्यृतवोऽङ्गानि सँव्वथ्सर आत्मा रश्मयः केशा नख्षत्राणि रूपन्तारका अस्थानि नभो माꣳसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखँव्वैश्वानरो व्यात्तꣳ ॥ ५३ ॥ समुद्र उदरमन्तरिख्षं पायुर्द्यावापृथिवी आण्डौ ग्रावा शेपस्सोमो रेतो यज्जञ्भ्यते तद्वि द्योतते यद्विधूनुते तथ्स्तनयति यन्मेहति तद्वर्षति वागेवाऽस्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितस्सं बभूवतुर्हयो देवानवहदर्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान्थ्समुद्रो वा अश्वस्य योनिस्समुद्रो बन्धुः ॥ ५४ ॥ व्यात्तमवहद्द्वादश च ॥ २५ ॥

गावो गावस्सिषासन्तीः प्रथमे मासि समान्यो यदि सोमौ षडहैरुथ्सृज्या(३)न्देवानामर्क्येण चर्माऽव पृथिव्यै दत्वते कस्त्वाऽग्नये यो वै यः प्राणतो य आत्मदा आ ब्रह्मन्नाऽक्राञ्जि बीजमाग्नेयोऽष्टाकपालोऽग्नयेऽꣳहोमुचेऽष्टाकपालोऽग्नये समनमद्ये ते पन्थानो यो वा अश्वस्य मेद्ध्यस्य शिरः पञ्चविꣳशतिः ॥ २५ ॥ गावस्समान्यस्सवनमष्टाभिर्वा एते देवकृतश्चाऽभिजितया इत्याहुर्वरुणोऽद्भिस्साम्ने चतुष्पञ्चाशत् ॥ ५४ ॥ गावस्समुद्रो बन्धुः ॥

॥ हरिः ओ(३)म् ॥

॥ कृष्ण-यजुर्वेदीय-तैत्तिरीय-संहितायां सप्तमकाण्डे पञ्चमः प्रश्नस्समाप्तः ॥

॥ इति सप्तमं काण्डम् ॥



॥ सप्तमकाण्डस्य सन्देहनिरासपाठः ॥

रुन्धते दधते तिष्ठन्ते जायन्ते । प्रजननमङ्गिरसोऽत्रिर्जमदग्निस्सँव्वथ्सरः कुसुरुबिन्दस्सप्तरात्रं बृहस्पतिरष्टरात्रं प्रजापतिस्ताः ख्षुधन्नवरात्रं प्रजापतिरकामयत दशहोतारँव्वर्जयित्वा । सँव्वथ्सरो

नैकविꣳशः । साद्ध्या न पञ्चविꣳशः । कुसुरुबिन्दो न त्रयस्त्रिꣳशः । बृहस्पतिस्सर्वम् । द्वाभ्यामष्टानवत्यै । चतुर्भ्यष्षण्णवत्यै । पञ्चभ्यः पञ्चनवत्यै । च प च प परिगृहीत्यै । षट्प्रजायै परिगृहीत्यै । षडिन्द्रियस्य परिगृहीत्यै । षट्थ्सुवर्गस्य लोकस्य परिगृहीत्यै । सप्तेन्द्रियस्य वीर्यस्य प्रजायै पशूनां परिगृहीत्यै । अष्ट त्रि संप्ताऽन्नाद्यस्य परिगृहीत्यै । नव ब्रह्मवर्चसस्याऽन्नाद्यस्य परिगृहीत्यै । दश प्र द्वितीयौ ब्रह्मवर्चसस्य परिगृहीत्यै । प्र प स नव प्र द्वि च बृहद्रथन्तराभ्यां प स नव यदन्यतः । यत्रयत्र बृहद्रथन्तराभ्यान्तत्रतत्र पराञ्चः । साद्ध्याबृहस्पती वर्जयित्वा । षष्ठेऽष्टमे प्रथमे द्वितीये पुनष्षष्ठेऽसत्रम् । सा विराड्दूर्ध्वन्त्र्यहा भवन्ति । वसिष्ठस्तैः । अम्बै प्रथमन्नयति । यथा वै षण्डहः । स्थुथ्सद्दङ्केषु । प्रथमं मोदचतुर्थम् । द्वितीयं मोदसप्तमम् । प्रथमं पौष्णवर्जम् । द्वितीयमैन्द्रवर्जम् । ऋतवं आदित्या गावो ज्योतिर्ज्योतिः । अङ्गिरस इयावेति । आदित्या इयामेति । सुवर्गल्लोकमयामेति ॥

॥ अनुवाकमद्ध्यगताः वाक्यान्ताः पञ्चाशतः ॥

उभा वाꣳ होतर्दोषाऽगन्म सुवस्सञ्ज्योतिषा सोमाय पितृमते सुवानस्सोमो वर्द्धन्तु त्वा राजन्दिवोऽस्य जगतो रराणो वीहि कव्यवाहन पितॄन्कर्मण्यस्स्वधायै नमो मन्यासै शं प्र देवꣳ सन्ते वायुरग्ने यय्यज्ञङ्खयै पाथा दध्रुवक्षितिरपाऽमतिव्रतमेकाऽस्य सुमतावग्निर्वृत्राणि चर्षणीनाय्य इमा वीरश्शतमन्युः पयसा महीङ्गाꣳ सुहिरण्ये शुक्रास्ताः पुष्टं पशु मन्यते त्रिꣳशत् ॥ ३० ॥

॥ हरिः ओ(३)म् ॥

॥ सप्तमकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | २० | ५२ | २६३५ |
| २ | २० | ५० | २३३० |
| ३ | २० | ४२ | २१२३ |
| ४ | २२ | ५३ | २६२१ |
| ५ | २५ | ५४ | २६३१ |

॥ संहतसङ्ख्या ॥

| | | | |
|---|---|---|---|
| ५ | १०७ | २५१ | १२३४० |

॥ काण्डसप्तकस्य संहतसङ्ख्या ॥

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| ४४ | ६५१ | २१९८ | १०९२८७ |



## शुद्धाशुद्धपाठः

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 8 | 19 | देवेभ्यः | दे॒वेभ्यः |
| 14 | 2 | पितेव | पितेव॑ |
| 18 | 7 | इन्द्रि॒याव॑तः | इन्द्रि॒याव॑त॒ः |
| 19 | 27 | चन्द्रद॑क्षिणा | च॒न्द्रद॑क्षिणा |
| 142 | 12 | त्वया चक्षुः | त्वया॒ चक्षुः |
| 146 | 27 | आग॑त॒ मरुतो॒ | आग॑त॒ मरु॑तो॒ |
| 157 | 13 | दे॒वेष्वधि॑दे॒वत्वम् | दे॒वेष्वधि॑दे॒व॒त्वम् |
| 168 | 1 | अ॒ग्नाविष्णू॒ | अग्ना॑विष्णू॒ |
| 200 | 2 | यद्रि॑यङ | य॒द्रियङ |
| 210 | 6 | रात्रीं॑दी॑क्षितः | रात्रीं॑दी॑क्षि॒तः |
| 211 | 4 | मि॒नु॒या॒त् | मिनु॒यात् |
| 211 | 15 | वैं॑ष्णवी | वैष्ण॒वी |
| 230 | 18 | यथाय॒जुरेव | यथाय॒जुरे॒व |
| 232 | 2 | उभ॒यत॑ | उभ॒यत॑ |
| 237 | 22 | ए॒भ्य ए॒वैनां॑म् | एभ्य एवैनां॑म् |
| 244 | 5 | वज्रे॑णैवैन॒म् | वज्रे॑णै॒वैन॒म् |
| 246 | 22 | यद्वैंसर्ज॒नानि॑ | यद्वैंसर्ज॒नानि॑ |
| 250 | 23 | व्या॒नेनैवास्य॑ | व्या॒नेनै॒वास्य॑ |



